॥ श्रीः ॥

श्री यदुशैलवासि

विद्याविशारद संस्कृतसेवासक्त कविकुलतिलक

राज्यप्रशस्ति-राष्ट्रपतिप्रशस्ति-परिष्कृत

श्रीबालधन्वि जग्गु वकुलभूषणमहाकविविरचिता

# जयन्तिका

(गद्यकाव्यम्)

**Published with the financial assistance from the Ministry of the Human Resource Development Government of India**

प्रकाशकः

बालधन्वि जग्गु आळ्वारैय्यङ्गार्यः

'श्रीमहालक्ष्मीमन्दिरम्'

I Main, Palace Lower Orchards

Bangalore - 3

1990

॥ श्रीः ॥

श्री यदुशैलवासि

विद्याविशारद संस्कृतसेवासक्त कविकुलतिलक

राज्यप्रशस्ति-राष्ट्रपतिप्रशस्ति-परिष्कृत

श्रीबालधन्वि जग्गु वकुलभूषणमहाकविविरचिता

# जयन्तिका

(गद्यकाव्यम्)

**Published with the financial assistance from the Ministry of the Human Resource Development Government of India**

प्रकाशकः

बालधन्वि जग्गु आऴ्वारैय्यङ्गार्यः

'श्रीमहालक्ष्मीमन्दिरम्'

I Main, Palace Lower Orchards

Bangalore - 3

1990

# जग्गूवकुलभूषणकविविरचिता ग्रन्थाः

### गद्यकाव्यम्

१. जयन्तिका (इयं बाणभट्टकृत-कादम्बरीसदृशी)

२. यदुवंशचरितं (हर्षचरितसदृशं)

३. उपाख्यानरत्नमञ्जूषा (क्षेमेन्द्रकृतचारुचर्याव्याख्या)

४. भावकौमुदी

### पद्यकाव्यम्

५. अद्भुतदूतं महाकाव्यम्

६. करुणरसतरङ्गिणी

७. पथिकोक्तिमाला

८. श्रृङ्गारलीलामृतम्

९. कलिकौतुकम् (कलिवर्णनम्)

### चपूम्काव्यम्

१०. यतिराजचम्पूः

११. भारतसङ्ग्रहः

१२. यात्रोदन्तचम्पूः

१३. गीतराघवम्

### नाटकानि

१४. अद्भुतांशुकं (वेणीसंहारस्यपूर्वभागः)

१५. प्रतिज्ञाकौटिल्यम् (मुद्राराक्षसस्यपूर्वभागः)

१६. स्यामन्तकम्

१७. मञ्जुलमञ्जीरं(रामायणकथा)

१८. बलिविजयम्

१९. अमूल्यमाल्यम्

२०. अप्रतिमप्रतिमम्

२१. मणिहरणम् (भासकृतोरु-भङ्गस्योत्तरभागः)

२२. यौवराज्यम्

२३. प्रसन्नकाश्यपम् (अभिज्ञान-शाकुन्तलस्योत्तरभागः)

२४. संयुक्ता

२५. वीरसौभद्रं (भासकृत-दूतघटोत्कचपूर्वभागः)

२६. प्रतिज्ञाशान्तनवम्

२७. नवजीमूतम्

२८. अनङ्गदाप्रहसनम्

२९. व्रतफलम्

३०. कलिकालुष्यम्

३१. दाशरथिदर्शनम्

३२. वितीर्णामृतम्

३३. निम्नतापसम्

३४. मुग्धकुन्तलम्

F

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

# प्रस्तावना

परश्शतं पद्यकृतो ऋक्षाणीव नभस्थले ।
हृद्यानवद्यगद्यस्य कर्ता राजेव राजते ॥

इह खलु जगति जन्तवो विषयैषिणो यदि पृच्छ्यन्ते किं सारम् ? इति, " असारे खलु संसारे सारं सारङ्गलोचना " इति उत्तरयन्ति । विषयविरक्ता यद्यनुयुज्यन्ते " असारे खलु संसारे सारं सर्वेशसंस्मृतिः" इति वदन्ति । " काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् " इति-वदत्रैव जीवन्तो मुक्तकल्पा धीमन्तः " असारे खलु संसारे सारं सारस्वतामृतम् " इत्युद्घोषयन्ति ।

तच्च विविधं विद्योतते काव्यरूपकविभेदेन । काव्यञ्च गद्य-पद्यात्मना द्वेधा भवति । रूपकञ्च " नाटकं सप्रकरणं " इत्यादिरीत्या दशधा विभिन्नम् । तत्र केचन "रीतिरात्मा काव्यस्य" इति, "वाक्यं रसात्मकं काव्यम् " इति, " वक्रोक्तिः काव्यजीवितम् " इत्यादिचानु-सन्दधते ।

ध्वनिप्रस्थापनपरमाचार्यो ह्यानन्दवर्धनः "काव्यस्यात्मा ध्वनिरिति बुधैर्यस्समाम्नातपूर्वः " इत्यादिना " ध्वनिरेव काव्यस्यात्मा " इति परमप्राचीनैरेव निर्णीतम् । स च रसभावतदाभासभावशान्त्यादि रूपेण नैकधा भवति । इति च सदृष्टान्तं सिद्धान्तयति ।

सर्वत्र काव्येषु नाटकेषु वा यः कोऽपि रसः प्राधान्यमावहति । इतरे च यथायथं तदङ्गताम् । स च रसः " रसो वै सः " इत्यादि-श्रुत्या ब्रह्मास्वादसहोदरः । स एवानन्दयति सकलानपि लोकान् ।

F

ईदृशकाव्यकरणनैपुणे सुशिक्षयितारः केचनैव गुरवो लभ्यन्ते कवेस्सौभाग्यवशेन । गुरूणामेतादृशानां बोधनचातुरीचर्चितचित्ता-शिशष्यास्तु लोकशास्त्रकाव्यादिषु सुशिक्षितास्सुकवयो भवन्ति ।

अयञ्च बालधन्विकुलकलशजलनिधिकलानिधिः जग्गु वकुलभूषणश्चे-दृशः कश्चन महाकविः। यतश्चेदृशोगुरुस्स्वपितृव्यपादः स्वगृह एव समुपलब्धः कविनानेन। अमरकोशाद्यारभ्य रसगङ्गाधरादिपर्यन्ता-स्सकला अपि ग्रन्थास्तत्सकाशादेव सम्यगधीताः । सांख्ययोगसूत्र-भाष्यादयश्च ।

तदातदा यावद्यावन्नाटकादयो लिखिताः, तावत्तावच्च स्वपितृव्य-पादानां सम्मुखे पठिताश्चासन् । एवं सुशिक्षितेन पथा प्रतिपदमाक्रम-माणस्सरससरलकविताकामिनीमाधुरीधुनीप्रस्रवणधुरीणतां प्रपेदे ।

स च गुरुर्बालधन्विकुलाम्बुधिपूर्णचन्द्रमाः साहित्यकलाकुशलः, परम्परागतसरससरलकविताकामिनीसमाकृष्टकेशपाशः, सरससाहित्य-सुमान्यवगाह्य तलनिलीनमधुरमधुधुनीं विरतझङ्कृति सविमर्शं पायंपायं सुहितो मत्तचित्तवृत्तिर्भृंगराजः, दुरूहश्रुत्यन्तरहस्यार्थग्रन्थिविश्लेषणचतुर-चारुमतिः, साहित्यालङ्कारसांख्ययोगोभयवेदान्तविद्वत्पदमधितिष्ठन्, सांख्यतीर्थोपाधिना च परिष्कृतः, श्रीमन्महीशूरमहाराजश्रीजयचामभूप-वितीर्णस्वर्णकटकराङ्कवद्वयसहितसाहित्यरत्नबिरुदः, यादवाद्रि श्रीयति-राजमठास्थानदत्तशास्त्रकविरत्नविरुदः, श्रीमान् बालधन्वि जग्गुवेङ्कटा-चार्यः, अनुपमबोधनचातुरीसमावर्जितशिष्यगणहृदयो विराजते स्म ।

"क्रिस्तस्यैकोनविंशशताब्द्यां यादवाद्रौ, यादवाद्रिमहाचार्य, मधुर-मङ्गलंएम्बार्जीयर्, यादवाद्रि नाटम्पळ्ळि अनन्तार्यप्रभृतयो विद्वांसः प्रसिद्धा आसन्। ततः विंशतितमशताब्द्याः प्रथमपादेऽपि श्री कुप्पण्णा-स्वामिनः, मण्डयं आळ्वार्स्वामिनः, तिरुवाय्मोळितिरुनारायणाचार्याः इत्यादयः संभाविताः पण्डिताः आसन् ।

ततः विंशतितमशताब्द्यां नैजपाण्डित्येन प्रधानतमाः चत्वारः पण्डिताः । इयल्पिळ्ळै वरदाचार्यः, जयरामवेङ्कटाचार्यः, मण्डयं लक्ष्मीतातार्यः, बालधन्वि जग्गुवेङ्कटाचार्यश्च । वरदाचार्यः श्वेतशार्दूल इव दोषदर्शनमात्रेणैव परानाक्रामति स्म । जयरामवेङ्कटाचार्यस्तु असित-भल्लूक इव शास्त्रग्रन्थिषु बद्धमुष्टिः । लक्ष्मीतातार्यस्तु पट्टाभिषिक्तो गज इव गाम्भीर्यागारः । बालधन्वि जग्गु वेङ्कटाचार्यस्तु काननसिंहः इवासीत् । यतस्तस्य सन्निधौ विद्वांसः विद्यार्थिनश्च स्वस्वमर्यादां नोल्लङ्घितुं प्रभवन्ति ।" इति स्वपिता तिरुवाय्मोळिरामानुजाचार्यः असकृदाह स्म " इति वि टि. तिरुनारायणैय्यङ्गार्यः अद्यापि तदातदा वदति ।

एतेष्वपि असंख्यशिष्यगणशिक्षणे परीक्षणे महाप्रबन्धनिबन्धने चायमेक एव बालधन्वि वेङ्कटाचार्यः स्वदेशे विदेशेष्वपि प्रख्यातः शिष्यैर्विद्वद्गणैश्च बहुमानितः परां काष्ठामानन्दस्यानुबभूव ।

एवंस्थिते कदाचिदयं कविर्वकुलभूषणः बेङ्गळूरुनगरे स्वपितृष्वसुः पत्युर्जयरामवेङ्कटाचार्यस्य गृहे वसन् स्वीयमद्भुतांशुकनाटकं मुद्रापयति स्म । तदानीं वेङ्कटाचार्यः कविना पठितं नाटकं श्रुत्वा कविमवदत् । "यद्यपि नाटकान्तं कवित्वं" इति सुव्यक्तम् । तथापि "गद्यं कवीनां निकषं वदन्ति" इति कवित्वस्य नाटकान्तत्वेऽपि गद्यस्य कविता-निकषत्वं सुस्पष्टम् । यदि गद्यकाव्यकरणे सम्पन्नो भविष्यसि तदा कविरिति विश्वसिमः" इति सोपहासमब्रवीत् । तदायं कविः उपहास-वचनेन खिन्नः प्रोत्साहितश्च पूर्वमेव लिखितं गद्यकाव्यं श्रावयामास तम् । ततस्संतुष्टो बभूव जयरामवेङ्कटाचार्यः ।

अस्य गद्यग्रन्थस्य शय्यापाकादिगुणग्रहणविद्धो ह्यस्य कवेः परमप्रीति-पात्रं सुहृन्मणिः महीशूर विश्वविद्यालयसंस्कृतप्राध्यापकः वि. टि.

तिरुनारायणैय्यङ्गार्यः प्रथमलहरीमात्रं केवलं पञ्चाशद्रूप्यकैः मुद्रापयामास । तथैव शाकुन्तलशिरोभूतं प्रसन्नकाश्यपमपि ।

गद्यस्यैव प्राचीनतमता च सुस्पष्टमवगम्यते । यथा—सरस्वती चानुष्टुभेन छन्दसा स्तुतवन्तं निजगाद स्वपुत्रं सारस्वतेयं काव्यपुरुषाभिधम् । "वत्स त्वत्तः पूर्वे हि विद्वांसो गद्यं ददृशुर्न पद्यम् । त्वदुपज्ञमथातः छन्दस्वद्वचः प्रवर्त्स्यति" इति । अनेन वचसा प्राचीनतमता गद्यस्यैव । सारस्वतेयसम्बन्धादुशनाः द्वैतीयीकतया छन्दस्वद्वचः प्रायुङ्क्त । अतोऽस्यैव दिव्यः कविरिति व्यवहारः पप्रथे ।

ततो वाल्मीकिरादिकविर्भुवि प्रथामवाप । ततो व्यासादयः अद्यतनाः अपि लक्षणया कवय इति व्यवह्रियन्ते । एवं गद्यकाव्यकर्तुरपि कवित्वं भाक्तमेव ।

एवं संस्कृतवाङ्मये परश्शतं पद्यकवयो विद्योतन्ते । गद्यकवयः केवलमङ्गुलिमात्रगणनीयाः वर्तन्ते । अतः कविषु मूर्धन्यता गद्यकवेर्निराबाधैव ।

कर्णाटककविरपि मुद्दणः स्वगद्यकाव्यप्रस्तावनायां वक्ति । "पद्यं वध्यं गद्यं हृद्यम्" इति । अतो गद्यकाव्यस्याग्रगणना स्वकामेनाप्यङ्गीकरणीयैव । किं बहुना—वेदविभागात्पूर्वं सर्वोऽपि वेदः यजूरूपः गद्यात्मक एवासीत् किल ।

अस्य च कवेः कवितावैखरी ववृधे स्वभ्रात्रा शिङ्गरार्येण सह स्पर्धयैव । अन्यश्च भ्राता रामानुजार्यः निर्णयसागरमुद्राक्षरशालायां शोधनकार्यं कुर्वन् तिलकमञ्जर्यादिकान् ग्रन्थान् मुम्बापुरीतस्संप्रेष्य प्रोत्साहयामास । गद्यकाव्यकरणे प्रेरकमपरमिदम् । यद्यादवाद्रौ भगवतस्सम्पत्कुमारस्य सन्निधौ पठ्यमानं श्री रामानुजार्यानुगृहीतं गद्यत्रयम् । तथा भगवतः निदाघचङ्क्रमणोत्सवे (कल्हारोत्सवे) आचार्यपुरुषैः पापठ्यमानं चूर्णिकादिकञ्च ।

अस्य च कवेर्जयन्तिकाकर्तुः नाटकसंविधानादिषु परिपक्वकल्पना-वैखरीषु च यादवाद्रिनित्यवासी पेरियण्णाजिनामकः कश्चन रङ्गस्थल-सूत्रधारः प्रेरको बभूव। यतस्स्वबाल्य एव तस्य नाटकादिकं अभ्यास-समयेषु प्रदर्शनसमयेषु च तदा तदा वीक्ष्य भावयन्नयं कविः स्वकाव्येषु नाटकेषु च संविधानादिक्रमं योजयामास। बालानां कथाकथनसमयेषु कवेरस्य पत्नी यग्गम्मनाम्नी इमां जयन्तिकाकथां कथयतिस्म।

जयदेवकविः स्वकीये प्रसन्नराघवनाटके प्रस्तावनायां प्रस्तौति :

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरः
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय॥ इति।

अत्र च कविः चोरमयूरभासकालिदासहर्षाणां कविताकामिन्याः चिकुरनिकरकर्णपूरहासविलासहर्षस्थानीयतां निर्वर्ण्य "हृदयवसतिः पञ्चबाणस्तु बाणः" इति कामिनी कान्तत्वापादकप्रफुल्लमनःपरिस्फुरन्मनोभवस्थानीयतां बाणस्य निर्वर्णयति।

अनया च वाचा स्वाभाविकनिरर्गलनिर्गलद्वाग्वैखरीविलसदमल-कविताकामिनीसमाश्लिष्टेषु कविकुलतिलकेषु तिलकोपरिविन्यस्तसुवर्ण-बिन्दुकल्पोऽयमनल्पकल्पनाचातुरीविदग्धः दवदहनधग्धगहननिपातित-हर्षकरवर्षधारया लोकमाप्याययन् वर्षुकवलाहक इव सहृदयलोकमाप्याय-यन्नयं कविः कविनिकरशिरःपरिस्फुरद्रत्नमयवरकिरीटप्रायतां भजत इति सुस्पष्टमभिहितं जयदेवेन।

अन्योऽपि कश्चन कविरेवं श्लाघते भट्टबाणम्।

"श्लेषे केचन" इत्यारभ्य,

"आस्सर्वत्र गभीरधीरकविताविन्ध्याटवी चातुरी-
सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥" इति।

एकैकस्मिन् श्लेषादिविशिष्टविषय एव निपुणाः केचन कवयः । परन्तु आः! इत्याश्चर्यं ख्यापयति । सर्वत्र—श्लेषयमकानुप्रासादिसर्वविध-शब्दालङ्कारेषूपमाद्यर्थालङ्कारेषु अनंतपदगुम्फगुम्फनान्तर्निलीनध्वनिसमा-वर्जितसहृदयहृदयेषु ध्वनिकाव्येषु च चातुर्यं नैपुण्यञ्चास्यैवेति वर्णयति ।

"कण्टकादिभिर्दुर्गमासु महाटवीषु चरणे चातुर्यमावश्यकं किल ! तत्रापि गभीरतरविन्ध्याटवीसञ्चारे चातुर्यमत्यावश्यकमेव । तत्र च स्वेच्छया सञ्चरन्ति मतङ्गजाः । तेषां कुम्भस्थलभेदनचतुरः पञ्चाननः चातुर्येणैव सञ्चरति । कविमतङ्गजानामपि कविताटवीसञ्चारे चातुर्यम-स्त्येव। तथापि गभीरधीरकविताख्यविन्ध्याटवीसञ्चारे चातुर्यातिशयोऽ-स्यैव। तत्रापि च स्वेच्छया सञ्चरतां मत्तमतङ्गजानां शिरःपाटनपटुः पञ्चा-ननोऽयमेक एव बाणः" इति । "अनेन सकलविधकवितामार्गेऽप्ययमेक एव सर्वानप्यतिशेते" इति । "बाणस्तु—कविकुम्भिकुम्भभिदुरः पञ्चाननो बाणः पञ्चमुखश्शरः" इत्यपि भावः ।

किं बहुना ! उदासीनो हि नैयायिकशिरोमणिः जयन्तभट्टः स्वीयन्यायमञ्जर्यां चतुर्थाह्निके वेदापौरुषेयत्वहेतोरप्रयोजकत्वं साधयन् प्रकरणात् कालिदासं भट्टबाणञ्च श्लाघते ।

"अमृतेनेव संसिक्ताः चन्दनेनेव चर्चिताः ।
चन्द्रांशुभिरिवोद्घृष्टाः कालिदासस्य सूक्तयः ॥" इति ।

"प्रकटरसानुगुणविकटाक्षररचनाचमत्कारितसकलकविकुलाः भट्टबाणस्य वाचः ।" इति च । सकलकविकुलान्यप्यस्य रसानुगुणशैलीचमत्कार-विद्धानि । इति भावः ।

एवमुत्कलिकाचूर्णिकादिगद्यभेदस्सर्वोऽपि तत्रतत्र प्रयुक्तो भट्टबाणेन। "कादम्बरी–हर्षचरितम्" इति गद्यप्रबन्धद्वयमपि काव्यसिंहासना-सीनस्य भट्टबाणस्योभयतः संवीज्यमानं चामरद्वयमिव कविचक्रवर्ति-त्वमस्य ख्यापयति ।

अस्य च कवेर्वंकुलभूषणस्य आदौ स्वभ्रात्रा सह निबद्धा स्पर्धा भ्रातर्यङ्कुरिता भट्टनारायणे पल्लविता विशाखदत्ते शाखायुता भासे कुसुमिता कालिदासे शलाटुतामाप्ता भट्टबाणे फलिता बभूव ।

बाणानुच्छिष्टतां स्वप्रबन्धस्य ख्यापयतानेन कविना कादम्बरी-प्रतिस्पर्धितया जयन्तिका हर्षचरितप्रतिद्वन्द्वितया यदुवंशचरितं च गद्यप्रबन्धद्वयं निरमायि। तत्तद्रसानुगुणसन्दर्भैपूत्कलिकाचूर्णिकादिगद्य-वैविध्यं सन्दृब्धम्। हिमाचल, शिवपार्वती-नगरादिवर्णनेष्वस्पृष्टं बाणेन वर्णितम् ।

कविकाव्यविमर्शकास्सहृदयाः यथायथं कविद्वयस्य चातुर्यं नैपुण्यं ग्रन्थानां परस्परसंवादञ्च स्वयमेव विमृशन्तु। किञ्च कविद्वयं गद्यद्वयञ्च धनुर्धरौ रामलक्ष्मणाविव निजभुजद्वयशिखरे निवेश्य नन्दत्वित्याशास्महे।

इति

सदयसहृदय हृदयदयापात्रं

**श्री बालधन्वि जग्गु सुदर्शनाचार्यः**

साहित्यवेदान्तविद्वान्

विश्रान्त विशिष्टाद्वैतवेदान्तप्राध्यापकः

राज्यप्रशस्ति विजेता

प्रमोद संवत्सर

पुष्यशुद्धद्वादशी

स्थिरवासरः

29–12–1990

| पृष्ठे | पङ्क्तौ: | शुद्धम् |
|---|---|---|
| 10 | 11 | यशसि-समुद्गमे |
| 10 | 19 | निजाभिजात्यः |
| 20 | 17 | उपालभमानः |
| 21 | 22 | स्नपित |
| 23 | 7 | विलसन्तीस्त्रिचतुराः |
| 24 | 14 | तस्य तव |
| 29 | 12 | नमस्कुर्वत्या |
| 32 | 18 | अभ्यस्यद्भिः |
| 33 | 18 | प्रतिषेधन्ति |
| 38 | 25 | शिशुमती |
| 44 | 9 | स्वादुतरौदनं |
| 44 | 12 | शिरस्युष्णीपं |
| 58 | 10 | दैवविलसितं |
| | 15 | शिबिकामेतां |
| | 20 | अस्मत्पक्ष्यं |
| 60 | 5 | तयापि जायया भवितव्यम् |
| 61 | 24 | बहुजुगुप्साकरीं |

अत्र प्रयुक्ताश्शब्दाः प्रायशः अमरकोशस्था एव। अतः तत्रैवार्थो द्रष्टव्यः ॥

॥ श्रीः ॥

श्रीरामशर्मणा श्रीमान् जग्गुर्वकुलभूषणः ।
कविनेव कविः कीर्त्या चित्रं सम्भाव्यतेऽधुना ॥

यश्च कविकुलभूषणं वकुलभूषणः कुलभूषणं, वकुलभूषणाशयश्च नारायणपादपङ्केरुहमधुरमधुपानमत्त इव गुञ्जन् मधुकरः, भासमान-भारतीमहिम्ना समानभासोऽप्यसमानभासोदितः, कालिदासदर्श-नीयोऽपि लक्ष्मीदासदर्शनीयः, वाल्मीकिवाचां अतिशयप्रतिशब्दपर्वतः, पुरातनस्य व्यासविज्ञानपुञ्जस्य नूतनस्समासः, मूर्तिमानिव सरस्वती-कलितकलवल्लकीवाद्यनूतनविनोदनादः, विश्वकर्मणा करेण वोढुमक्षमेणेव नाकलोकान्निपातितायाः चित्रतूलिकाया इव संस्कृतप्रकृतिकस्सजीवो विग्रहः,

यश्च चतुर्मुखमुखपुण्डरीकावासमधुकरी देवी सरस्वती सादरमुप-सेवते, हरिहृदयमहेन्द्रनीलपञ्जरान्तरकनकशुकी देवी महालक्ष्मीरप्यनु-ग्रहेणेक्षते, शर्वसर्वस्वमपि सर्वमङ्गळा कापि राजकलावती सरसमिति श्लाघते, तन्महाफलं रसिकलोकमृद्वीकालतावलयस्य,

येन च सारस्वतकवीन्द्रसन्तानतानितेन, लक्ष्मीलक्ष्मणोऽनवधि-कातिशयासंख्येयकल्याणगुणगणजलधितरंगान्तरंगेण, सर्वमङ्गलासर्व-स्वदेहद्वयार्धसंघटनकर्मनिर्माणनिपुणस्येव प्रेमातिशयस्य मूर्तिमतेव रूपेण नानानाटकार्ध-सम्पूरणकरण-निपुणस्वनाटकार्ध-संघटनातिशयकारिणा, बाणानुकारिणापि हृदयसुखहेतुना बालधन्विनाऽपि महालक्ष्येण, बहुधा समाराधिता दिव्यतुरगाननाकारब्रह्मतेजोमयी पितामहप्रसादिता विद्याधिदेवता स्वपितृव्यश्रीवेंकटगुरुवरप्रतिपादिता च विद्या भवोद्भव-तरलधनदरिद्रतोपद्रवतमस्तिरस्करणनिपुणा निपुणधिषणेन,

यस्य च भाषा भारवेरिव सार्थतयैव काव्यकमलाकरश्रियं सखी-मिवालिङ्गति, दण्डिन इव ललितदण्डिनी काव्यशिक्षाचार्यकमाचरति,

कुशिककुलतिलकमुनिगोत्रसमुद्भवाऽप्याजानपावनब्रह्मास्वादरसवसिष्ठता-मापादयति सकलजीवलोकस्य,

स किल नानानाटकनिर्माणजृम्भमाणया प्रतिभया गद्यप्रबन्धदुर्ग-मार्गेऽप्यकुटिलसुखसञ्चारया पद्यपद्यामपि स्वयमासेवमानयाऽनया चिरं-तनकविपरम्परां पूरयन्, अविच्छिन्नरसामेव तां ताञ्च संरक्षन्, प्रत्नकवि-रत्नकलाकोटिशतसहस्रकल्पित इव कमलासनेन, यदुशैलश्रृंगश्रियं भारत-राष्ट्रपतिप्रतिपादितां पाण्डित्यप्रशस्तिपातित्रत्यश्रियमपि पूर्वापरवयस्सह-चरीं रविरिव कविस्सुवर्णवर्णिनीं पुष्णाति ।

इति कवेर्वंकुलभूषणस्य षष्ट्यब्दपूर्तिमहोत्सवे ७–११–१९६२ तमे वत्सरे कृतोऽयं प्रबन्धोऽद्यविस्तारितो मयैव ७–१२–१९९० तमे प्रमोद वत्सरे श्रीरामशर्मणेति ।



# FOREWORD

I have great pleasure in associating myself with the publication of *Jayantikā* a prose romance composed by Sri Jaggu Vakula Bhushana by way of this foreword expressing my appreciation as well as admiration not only for this work but for the entire literary output of this unparalleled contemporary Sanskrit poet of the 20th century.

Earlier I had the privilege of writing a brief foreword to his Mahakavya Adbhutadutam. I also had the pleasure of delivering a special lecture at Shantiniketan University on the works of this poet, and presenting a paper on this poet in the Seminar on the 20th Century Sanskrit Literature organised at Bharatiya Vidyabhavan's College, Andheri, Bombay. This paper is published in Bharatiya Vidya. There were a few other occasions on which also I talked on the works of this poet. I never miss an opportunity to express my appreciation and admiration for the contribution of this poet to the field of Creative Sanskrit Literature of this Century. He is a distinguished poet who kept the tradition of Sanskrit poetry continued in the 20th Century with the same grandeur and depth with which it flourished in earlier centuries. The texture of the style and language of this poet cannot be easily separated from that of the classics of the early centuries.

I

The present work *Jayantikā* is a prose romance. The structure of the Story is modelled on Kadambari of Bāna. The style is aslo similar to it. The hero and the heroine assume two births viz., Chāruvaktra and Saugandhini,

Jivasena and Jayantikā. The work is named after the second name of the heroine. The main story is narrated by Chandadanstra a Gandharva who was born on the earth as a result of a curse. As the story proceeds different characters go on narrating the story. The narration is mostly of flash-back type. At each turning point the past story of the hero or heroine or some other important character is given. Thus the story proceeds in a winding way unfolding events within events. This keeps the interest to read further and further inspite of highly scholastic and descriptive style. In between there are refreshing dialogues and instructive passages, plenty of mythological and cultural references are found by way of comparison, metaphor and contrast all along.

The main story of this Prose romance is arranged in five laharis or sections. In the first three sections the first phase of the story, Chāruvaktra and Saugandhini story, is narrated. Chāruvaktra who was the son of Vimatakesari the king of Vaijayanti had to live in Dandakāranya forest with his mother Varamalini as his father was killed by Vrishaskandha who pretended to be his father's friend but had an evil eye on his mother. Therefore, his mother had to leave the palace and live in the forest to bring up her child Chāruvaktra. He learns this fate of his mother and himself from his mother and proceeds to acquire a suitable weapon by performing penance in order to destroy his father's enemy and get back the kingdom. Pleased with his severe penance the gods Indra, Siva and Brahma take interest in him and approach Narayana to help him.

Intervention of the divine personalities in human affairs may look strange and unreal to a modern reader; but for Sanskrit classics there is nothing new or strange about it.

These divine personalities intervene in such a natural way that they are as good as human personalities. Co-operation between divine personalities and human personalities is so naturally presented in Sanskrit classics that no element of unreality is felt. The mix up of myth and reality in these stories does not affect the impact or the lessons of these stories on the reader's mind in any way. The cleavage between the myth and reality is never made an issue to receive the impact or draw the lesson. Same is the case when the supernatural elements or miracles are introduced. This prose romance is a mix up of myth and reality. There are some supernatural elements and miracles also. But these are not due to lack of creative talent to create at realistic level, nor do these hinder the impact or the lessons to be drawn from a creative work in a realistic way. These are a part of Classical Sanskrit style. The emotions are delineated and the events described do invoke a realistic response. One feels as if one reads a real story accepting the supernatural element and the miracles without much jarring. Readers of Sanskrit classics are very much used to these. The author of the present Prose romance has introduced some supernatural elements and miracles to progress his story and to create a vigorous emotional impact.

## II

Chāruvaktra obtains a boon from Narayana, undertakes a Vijayayatra over several countries, builds up a large army and ultimately kills Vrishaskandha, who was responsible for his father's death and the mother's misery. He is received at the capital of his father's Kingdom viz., the City of Vaijayanti by the old Minister Marunmāla and coronated. His mother Varamālini is very happy. This part of the story is covered in the first two Laharis or Sections.

In this part of the Story there is a beautiful description of the Himalaya mountain, lord Chandrasekhara, Satyaloka and Narayana. As in Kadambari, mouthful adjectives, roll behind the substantives in long series and present the majesty of the Sanskrit language. Though many of these adjectives, metaphors and similes involved in them are quite familiar to readers of Sanskrit Prose romances and Champu kavyas our poet has introduced a freshness and a new import into them using his own ingenuity. While describing Narayana his religious sentiment is manifest. The Vijayayatra description and the killing of Vrishaskandha are couched in expressions appropriate to the sentiment of heroism. On the human side, the wickedness of Vrishaskandha, the tender feelings of Varamālini and the spirit of adventure of Chāruvaktra are beautifully delineated.

The mother's advice to Chāruvaktra when he returns after obtaining the bow from Narayana and proposes to proceed for detsroying Vrishaskandha reveals deep insight into human nature and mundane world :

तदवधारय शठप्रायं जगत्, स्वापतेयदासो लोकः, खलबहुला भूतधात्री, कृतघ्नताकलुषितं जनहृदयं, नैर्घृण्यकठोरः प्रपञ्चः, वञ्चनैकताना बंधुता, शूरप्रणयिनी लक्ष्मीः, प्रणिधिचक्षुषः क्षितिभृतः, क्षौद्रपटलमिव राज्यं नाम दुर्ग्राहम् ।

These expressions have the charm of both the sense and the sound. Such a charm is found all along this work. Some of observations here and also elsewhere in this work reveal the poet's personal experience as revealed from the events in his life.

After coronation Chāruvaktra undertakes a hunting expedition. He unwillingly hits a beautiful maiden. This

girl was Saugandhini who was to marry Chāruvaktra but who is unfortunately hit by the very Chāruvaktra now. Saugandhini who was hit by Chāruvaktra recognises Chāruvaktra and narrates her story to him. She informs him that she was brought up by one Dhamana until her ninth year. Then he died. Later one Dirghasatra brought her up. This Dirghasatra thought of giving her in marriage to Chāruvaktra whose bravery and physical features were described to her by him. Dirghasatra also had told Saugandhini that she was the daugher of one Sugandhana the King of Madhurā and Kānchanamālini a charming woman who met Sugandhana on a river bank. This Kānchanamālini had left her when she was born on the river bank and was picked up by Dhamana. After narrating her story Saugandhini who was hit by Chāruvaktra collapses. Chāruvaktra also dies in grief. But Indra appears in the form of a hunter and revives the life of Chāruvaktra and Saugandhini. However, these two were revived in the form of Children. Then the hunter asks the Asrama boys of Dirghasatra to hand over the Child Chāruvaktra to Vajrabāhu the King of Aribhikarapuri and the Child Saugandhini to Hemavati the Queen of Hemapur King. Dirghasatra sends a message to Varamālini the mother of Chāruvaktra to be hopeful about the return of her Son Chāruvaktra. This part of the story is covered in the third Lahari.

In this part of the Story, the past story of Saugandhini has no relevance to the main story nor brings out any special feature of her character. The ground for the attraction that Saugandhini develops for Chāruvaktra is not fully developed. The hunting expedition is intended to provide

an opportunity for the two to come together. The death of the two puts a curtain to the first phase of the story. Their revival as Children again initiates the second phase. The description of the hunting expedition is quite charming.

## III

In the Second phase of the story the Child given to Vajrabāhu is named as Jivasena while the Child given to Hemavati is named as Jayantikā. The two grow. Jayantikā sees Jivasena's picture and falls in love with him. Jivasena comes to know about it and proceeds to Hemapura. The two meet privately. However, after their meeting Jivasena disappears. Jayantikā wanders in search of him and meets a Tāpasi. She lives with the Tāpasi in her cave. The Tāpasi herself was Sukesha the Son of Veeraketu the king of Chitrapura, but was cursed to become a woman. Jayantikā who lived with her delivers a male child. The boy grows but unfortunately is lost in the forest. The Tāpasi gives a miraculous Ratnamalā to Jayantikā and asks her to become Sukesha with its help and become the King of Chitrapura. Tāpasi also goes with her. Here the fourth Lahari closes.

Jayantikā (who is now Sukesha) wanders in search of her son and husband. She loses her Ratnamalā. Both Tāpasi and Jayantikā wander in search of it. They go to a Durgā temple and despatch servants in all directions to trace the Ratnamalā. It is found with a cowherd boy. The boy is brought and handed over to a butcher to kill him. The boy was the Son of Jayantikā and the butcher was her husband Jivasena himself. Both the boy and the butcher tell their story after they were lost in the forest. The

butcher cuts the head of the boy as a matter of his duty and cuts his own head also. Jayantikā proceeds to cut her own head. Goddess Durgā appears and revives the life of all the three. Jayantikā who had assumed the form of Sukesha reverts back to Jayantikā. Tāpasi who was originally Sukesha becomes Sukesha. This real Sukesha is put on the throne at Chitrapura. Then, Jivasena proceeds to meet his mother Varamālini who lived in an Asrama outside the city of Aribhikara. He enters the city welcomed by the old Minister and ascends the throne. Hansadhvaja who was temporarily put on the throne in view of the long absence of Jivasena vacates. Virasena the son of Jivasena is made to ascend the throne at Hemapur since Satyakirti the father of Jayantikā had no male issue. Thus the story ends with a happy note.

This part of the Story has in it more supernatural elements and miracles. Change of Sex which is no longer a miracle nowadays is brought about here by supernatural means.

Some of the well-known motifs current in Indian epics and folk tales such as an orphan child being brought up by a compassionate person, Father going to the extent of killing his own Son in discharge of his duty, the husband being lost in the forest leaving the wife alone are introduced here. In the stories of Sakuntalā, Harischandra and Nala these motifs are fully developed. The author of this Prose romance has brought these together in one Story and put them in a different setting altogether. Lusty men being aggressive towards charming women and its leading to adverse consequences to both is delineated in this work more than once. Women and Children suffering because of the folly of men is also depicted. But the women

characters here are courageous and hopeful. The Children as they grow become adventurous. All along the story it is women and young boys who lead the story through the major events. The emotions of Vira and Adbhuta i.e., heroism and wonder dominate. The emotions of pathos and love intervene here and there. There are no evil or wicked characters excepting one or two who are lusty and suffer for the same. No doubt the story starts because of the wickedness of one person i.e., Vrishaskandha but all the tragic turns later are due to unexpected circumstances and beyond human control. *The truth that the journey of life is full of unpredictables is the lesson that can be drawn from this prose romance.* We have already mentioned that presentation of the majesty of Sanskrit language and a series of rolling adjectives constitute the special features of the style in this work. This work is also rich in giving the information on arts, culture, ethics and human nature. We may quote one or two passages to give an idea of this aspect.

(i) क्रमशः प्रवर्धमाना जयंतिका वादित्रे चित्रे भरतशास्त्रे स्त्रीपुरुषलक्षणपरीक्षायां लवनकर्मणि अशेषभाषासु नानावेषेषु नूतनाख्यायिकादिकथानिर्माणे नर्मालापे वीणावेण्वादिवाद्यकलापवादने गाने विचित्रपत्रभङ्गकर्मणि प्राणिशास्त्रे लवने लङ्घने विचित्रविविधक्रीडासु गम्भीरतरपरिहासे पत्रिकानिर्माणे काव्यपठने सरसोपन्यासे राजनीतौ कटुजनहृदयावर्जनभाषणे विविधविद्यासु च कौशलमवाप—

Though the list appears to be conventional a few new items reflecting contemporary life are found here.

(ii) किमपराद्धं मया नापहृतं परद्रव्यं, न हिंसिताः प्राणिनः, नोक्तानि अनृतानि, नापि चिंतिता मनसापि परपीडा, न कृतः कापुरुषसहवासः, न वञ्चितो लोकः, नाचरितं क्रूरं कर्म, न विघ्नितं अवदातं कर्म।

These are the lamentations of the Cowherd boy who was about to be killed by the butcher.

Good many such passages that are very instructive are introduced in this work. Thus the two aims of poetic compositions viz. Ananda (delight) and Upadesha (instruction) are served by this Prose-romance well.

Normally a foreword records only the appreciation of the work. It does not give a narration of the contents. But in this case appreciation without narration would not highlight the depth of the contribution of the poet fully. Therefore, a narration of the main story is also attempted above. This will also help to get the threads of the story which is immersed in highly scholastic language and difficult to follow easily because of its winding nature.

It may not be out of place to quote from the appreciation of a senior Scholar Sri Govinda Ramanuja Yogindra here.

क्वचित्पदगभीरतां क्वच पदार्थगम्भीरतां
क्वचिन्नवनवाढ्यतां नवरसात्मतां च क्वचित् ।
क्वचिज्जगदुदंततां क्वचिदपूर्वदृष्टांततां
विलोक्य विवशं मनो भ्रमति गद्यकोशे मम ॥

## IV

As stated above, my admiration for this poet is not merely for the Prose-romance Jayantikā narrated above but for his entire literary output. Therefore, I cannot resist the temptation of including a few remarks about his other works in this foreword. As stated in one of my articles referred to in the beginning of this foreword his compositions are in the six areas of Drama, Mahakavya, Prose Romance, Champu, Lyrics and Stotra. The total number of his works

comes to about sixty-five. Among these the dramas have the major share. He has twenty-two dramas to his credit.

The special features of his dramas are: many of these are either prologues or epilogues of the well known classical dramas. These prologues and epilogues resemble the style and mood of the respective dramas so closely that one does not feel that a different poet has written these. His Prasanna Kasyapam is an epilogue to Sākuntala. It depicts the events after the reunion of Dushyanta and Shakuntala. Similarly Maniharana is an epilogue to Urubhanga of Bhasa. Adbhutamsukam and Pratijna-kautiliyam are the prologues to Venisamhara and Mudra-rakshasa respectively. Veerasubhadram is also a prologue to Dutaghatotkacha. His other dramas derive their theme from the Epics and Bhagavata. Most of these are one or two-act plays. He has dramatised Rishyasringa's episode in his drama Nighna Tapasa while Samyuktā is a historical play dealing with the story of Prithviraja. Anangada Prahasana is a Prahasana form of play.

Adbhutadutam is a major Mahakavya of our Poet. It is in fifteen cantos and deals with Sri Krishna's efforts to effect a reconciliation between Pandavas and Kauravas. The poet reveals his devotion to lord Sri Krishna profusely here. It is more a Bhakti Kavya than a Sandhāna Kavya. Good many figures of speech are employed here. Particularly, the Arthāntaranyāsa and Virodhabhāsa are very effective. Karunarasa Tarangini is his earlier poem. It deals with Kāliyamardana episode. Pathikoktimala is a Lyric. The poet wrote it to sustain a temporary separation from his wife when he was on a journey. In Upākhyanarathna manjusha he recounts a number of Upākhyanas selected from different Puranas.

Since I have said a lot about his one Prose romance viz., Jayantikā I need not say much about his other Prose romance viz., Yaduvamsa Charitam. This is a historical prose dealing with the family history of Mysore royal family. This was written at the instance of the last Mysore ruler of Odeyar family. In all these works, his creative talent, profound scholarship and command over the Sanskrit language are fully revealed.

My student Dr. S. R. Leela has recently written an article in Kannada reviewing all the works of this poet. She has highlighted the merit of each work vividly. She has also quoted the appreciative observations of Prof. Hiriyanna, Dr. Raghavan, Dr. Krishnamurthy and myself. I wish this article is published in English or Sanskrit.

V

Sri Jaggu Alwar Iyengar, the author of Jayantikā and Sixty-four other works was born in 1902 at Chitraghosha near Melkote the well known pilgrim centre of Srivaishnavas sanctified by the holy presence of Sri Ramanujacharya himself. His grandfather was a great scholar in Visista-dvaita Vedanta and also a poet. Thus Sri Alwar Iyengar inherited his poetic talent and the scholarship from his ancestors. He obtained the Vidwan title in Sahitya and Samkhya yoga. He served on the staff of Sanskrit Colleges at Bangalore and Melkote. He was honoured by a gold medal by H. H. Krishnaraja Wodeyar of Mysore. He received Karnatak State award for eminent Scholars in 1981 and the certificate of honour from the President of India in 1985. He is also honoured by the Vidyavisharada title by Karnatak Sanskrit Sahitya Parishat.

However, his greatest honour is in terms of sixty-five literary works which is a substantive contribution both in quality and quantity to 20th Century Sanskrit literature. He started his literary career when he was only 18 years old and continues the same when he is 88 now. With three sons and one daughter, he has managed a large family with a much larger number of literary children.

It is a pleasure and honour to me that I am in close association with him for the last 25 years since I came to Bangalore. I wish a full critical appreciation of his works is undertaken by a Ph.D. student and a well annotated bibliography of his works is published.

**Prof. K. T. Pandurangi**
*Former Prof. of Sanskrit*
Bangalore University
Upakulapathi, Poornaprajna Vidyapeetha
President, Mythic Society and
Chairman, Karnatak Sanskrit
Sahitya Parishat.

Bangalore
1-1-1991

## श्रीवादिकेसरिरम्यजामातृगोविन्दरामानुजयोगीन्द्रानुगृहीतं

# प्रशंसापत्रम्



वालधन्विकुलाब्धीन्दुः कविः वकुलभूषणः ।
सर्वोपकारिणीं चक्रे गद्यरूपां जयन्तिकाम् ॥ १ ॥

साहित्यरसिकानन्दसन्दायिपदमेदुरा ।
अदृष्टश्रुतपूर्वेयं गद्यरीतिर्विराजते ॥ २ ॥

आबालवृद्धसकलाभिनिवेशदायी
लोकानुभूतपरमार्थविशेषवादी ।
नानाप्रकारगुणवर्णनवाक्यशाली
भूयाद्दिगन्तविततो भुवि गद्यकोशः ॥ ३ ॥

क्वचित्पदगभीरतां क्वच पदार्थगम्भीरतां
क्वचिन्नवनवाढ्यतां नवरसात्मतां च क्वचित् ।
क्वचिज्जगदुदंततां क्वचिदपूर्वदृष्टान्ततां
विलोक्य विवशं मनो भ्रमति गद्यकोशे मम ॥ ४ ॥

शय्याविहीनकठिनाध्वनि निद्रितार्थाः
व्याख्यानवंदिपरिबोधितवास्तवार्थाः ।
सर्वे पुरातनकवीरितगद्यकोशाः
जाता अनेन कविना भुवि दीर्घनिद्राः ॥ ५ ॥

गद्येषु वैजयन्तीं
जयन्तिकां वीक्ष्य कौतुकावेशात् ।
श्रीवादिकेसरिमुनिः
व्यतनोदामोदपत्रिकामेताम् ॥ ६ ॥

विरोधिवत्सरे कन्याशुक्लपञ्चम्युपेयुषि ।
सोमे विशाखासंयुक्ते लिखितामोदपत्रिका ॥ ७ ॥

J-1

|| श्रीः ||

|| शुभमस्तु ||

श्रीमते रामानुजाय नमः ||

श्रीमते हयग्रीवाय नमः ||

# || जयन्तिका ||

श्वेतं यस्य शरीरं निवसनवसनासनानि च सितानि ।
सोऽयं मनसि रमेशो निवसतु सततं तुरङ्गवदनो मे ॥ १ ॥

नारायणार्यतनयो यदुशैलवासी
श्रीशिंगरार्यविदुषस्सुकवेश्च पौत्रः ।
लेभे च वेंकटगुरोस्स्वपितृव्यवर्यात्
विद्याः कवेर्वंकुलभूषणनामको यः ॥ २ ॥

अष्टादशाब्ददेश्यः सोऽहं गद्यप्रबंधरचनायां ।
कुतुकी हन्त ! नितान्तं प्रौढकवीनां यशो लिप्सुः ॥ ३ ॥

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सशान्तरसमिश्रितमुच्चभावम् ।
नव्यं तनोमि सुमनोहृदयातिसेव्यं
काव्यं मनोज्ञपरिकल्पितवस्तुभव्यम् ॥ ४ ॥

बाल्ये तावदनेन निर्मितमिदं काव्यं त्विति प्राकृताः
ये मात्सर्यविमूढबुद्धिविभवा निन्दन्त्वदृष्ट्वैव ते ।
बालेनेरितमेतदित्थमिति ये नन्दन्ति सन्तस्सदा
तेषामेव मुदः परं पिशुनयन्त्यस्य प्रकर्षाढ्यताम् ॥ ५ ॥

आसीद्विविधकुसुमभरितपरिमळबहुळप्रताननीमंडितारामा अभ्रंकष-केतनालंकृतनिकेतना निजवैभवन्यक्कृतसुरनगरी गरीयसी भासुरा अरिभीकरी नाम नगरी ।

## प्रथमलहरी

आसीच्च तस्यां साम्राज्यलक्ष्मीसमालिङ्गितविग्रहो रिपुशमनशमितविग्रहस्सशरीरश्शंबराररिव सौन्दर्यैकवसतिरधरीकृतनिखिलनृपालो धर्मायत्तचित्तोऽप्रमत्तः प्रजापरिपालने अप्रदत्तदुरितप्रवेशावकाशो द्वादशात्मेव काशमानस्तेजसा सुधांशुरिवाह्लादितप्रजाहृदयो जीवसेनो नाम नरपतिः। यस्य च तरुणस्यापि विवाहे विमुखतया हिरण्याक्षपातनं पुराणे न क्रीडायां, चुम्बनं वेणुवादने न मदनोत्सवे प्रकम्पः पापकर्मणि न रमणीसमाकर्षणे कंठग्रहो मित्रमंडलेषु न वनितासु पयोधरकुम्भस्पर्शनं मंगलकार्येषु न मृगाक्षीवक्षस्स्थलेषु कंचुकनिर्मोचनं समीकेषु न योषाजनेषु प्रह्वत्वं गुरुजनेषु न प्रणयकुपितकामिनीजनेषु समुद्गतरोमजालाकुलितशरीरता शिशिरसलिलावगाहने न नववधूसमालिंगने धवळिमा यशसा न मनोव्याधिसमुद्गमेन समभवत्।

स नरपतिः विमुक्तकरनिकरे रक्तीकृतपश्चिमदिगन्तरे भगवति दिवाकरे निमज्जति निरन्तरतरंगपरंपरामनोहरे पारावारे नक्षत्रमालालंकृतस्य नक्तमपत्यस्य तमोऽशनायानिवारणाय निर्मुक्तैकभागवलाहककंचुके परिलिप्तरागरक्तपटीरे कलंकमेचकचूचुके पीयूषक्षीरपूरिते राकेन्दुपयोधरे पूर्वदिगंगनया प्रकाशिते निर्वर्तितसंध्याविधिस्सुहृन्मण्डलपरिवृतो भुक्त्वा किंचिदिव व्याहरन्नर्मालापान्विसृष्टसुहृन्मण्डलो निद्रासुखमनुबभूव।

तदनु संभवति तृतीये यामे विजयी भव अभिभूतराजराजवैभव! महाराजोत्तिष्ठोत्तिष्ठ कलानिधिकुलललाम! निखिलनृपालमंडलमौलिलालितपदकमल! महासेनसमानमानातीतपराक्रम! जीवसेनप्रभो! चक्रवर्तिन्नित्याद्युन्नमितकरवन्दिवृन्दपरिपठ्यमानबिरुदावलिमवकर्ण्योत्थाय च कोमलतरात्तल्पात् परिमृज्य च करकमलतलाभ्यां नयनयुगलं विमलचीनचेलावगुंठितविग्रहो निर्गत्य च शयनागाराभ्यंतरात् नृपालो द्वारपालप्रदर्श्यमानमार्गः,

कुत्रचिदुशीरनिकरपरिमलीकृतशीतलसलिलतुन्दिलविमलस्फटिकभाजनं कुत्रचिदुष्णोदकभरितरुचिरकनककलशकमनीयं कुत्रचिन्निष्पिष्टामलामलकफलपिण्डमण्डितं कुत्रचित्परिमलहृदयङ्गमस्नानचूर्णविशेषपरिकलितपात्रं कुत्रचिन्नात्युन्नतशशांककान्तशिलापीठं कुत्रचिद्दन्तधवलमसृणशङ्कुलम्बितधौतकौशेयं कुत्रचिज्जलपात्रहस्तप्रशस्तवनितानिवहस्पृहणीयं मज्जनगृहमविशत् ।

प्रविश्य च तत्रेन्दुकान्तशिलापीठमधिरुह्य स्नापितो वनिताभिस्स्वयं च करिकलभ इव स्फटिकद्रोणिकासलिले क्षणमिव क्रीडन्धौतवस्त्रपरिमृष्टमूर्तिः सुरापगाफेनपिण्डधवलकौशेयपरिधानः सूक्ष्मारुणातिमसृणकौशेयकोद्गमनीयश्चोपरिनिपतितबालातपारुणितकैलास इवाष्टमीशशांकानुकारिणि ललाटफलके विरचितकुंकुमस्थासकोऽलिकतलदेदीप्यमानलोचनो हर इव मज्जनगृहान्निर्गत्य क्वचिन्निक्षिप्तकनकभाजनविनिहितसुगन्धबन्धुरविविधवर्णकरम्बितप्रसूनमालं क्वचिच्छातकुम्भस्तम्भबिलसन्निस्तरलदीपपल्लवं क्वचिद्धवलधूपधूमलतावितानितधूपवर्तिसम्भारं क्वचित्पीतनैलाचूर्णकृतघ्राणतर्पणार्णःपूर्णसुवर्णकुम्भं क्वचिदाम्नायपारगभूसुरवरवर्गं देवमन्दिरं प्राविशत् ।

तत्र तुहिनविशदस्पृहणीयतिरस्करिणीकृतप्रतीहारपिधाने विशदकौशेयोल्लोचमध्यलम्बितस्थूलमुक्ताफलकलापे प्रत्नवररत्नमालालङ्कृतगाङ्गेयगोपानसीपर्यन्ते कुशेशयकोरकाकारकनककलशपंक्तिपरिष्कृतशिखरदेशे चतुष्कोणयोजिततपनीयपताके चतुर्भिर्मसृणमरकतस्तम्भैरुपशोभिते रत्नकल्पितनेत्रैः विवृतकरालवदनकुहरैश्चतुर्भिः कनककेसरिभिरुह्यमाने मण्टपे विराजमानं सुदर्शनपाञ्चजन्यकौमोदकीनन्दकादिदिव्यायुधमण्डलपरिमण्डितचतुर्भुजदण्डं मकुटमकरकुण्डलग्रैवेयककेयूरहारनूपुरादिदिव्याभरणालंकृतं मृगमदतिलकसुन्दरमुखारविन्दं श्रीभूनीलासमेतं परमपुरुषं नारायणं समभ्यर्च्य परिपठ्यमानस्वरसुभगाम्नायकण्ठान्धृतधवलोद्गमनीयकमनीयकायानूर्ध्वपुण्ड्रभासुरान्भूसुरान् प्रणम्य च,

कुत्रचित्सिताभ्रानुकारिमल्लिकामालाकलापं कुत्रचिद्वर्षर्तुवलाहक-सुषमासोदररमणीयमरकतमणीरितमालामनोहरं कुत्रचिन्नक्षत्रसदृक्षही-राभरणगणद्विगुणिततेजोविशेषं कुत्रचिदिन्द्रचापसच्छायनवरत्नमयग्रै-वेयकं कुत्रचिद्विविधवर्णशबलितमसृणतरमृदुलपट्टांशुकहृदयंगमं कुत्र-चिन्मलयजरसभरिततपनीयप्रतिग्राहं कुत्रचिच्चक्राकारविन्यस्तप्रशस्तकीर-कायकान्तिनीकाशनागवल्लीपल्लवतल्लजप्रफुल्लप्रदेशं स्वकीर्तिधवलिताष्टकाष्ठां-गनाभिरिव श्वेतद्वीपवासिनीभिरिव कलानिधिलोकललनाभिरिव गौरीमन्द-हासविरचिताभिरिव मल्लिकाकुसुमपरागकल्पिताभिरिव परिधृतधवल-दुकूलाभिः मौक्तिकमालालंकृताभिर्विशददन्तसमुत्कीर्णवलयालिर्ललितमणि-बंधाभिरष्टभिर्वारविलासिनीभिः धवलितमध्यप्रदेशमलंकारनिलयमलंचकार।

तत्र ताभिरलंकृतोऽयं तस्मान्निर्गत्य च प्रतीहारीकरकोकनदोपरिवि-निहितवामेतरपाणिपुंडरीकश्चाजानुबाहुपरिलंबमानविशदकंचुकावगुंठितपूर्व-कायैः आगुल्फावसक्तधवलतरचंडातकैर्मेखलीकृतारुणांशुकैःरक्ताम्बरविर-चितोष्णीषैरंसोपरिविन्यस्तकनकदंडैः प्रांशुभिस्सावधानं पश्यत, दूरं दीयतां मार्गावकाश इति तारतारं व्याहरद्भिः कंचुकिभिर्दापितमार्गावकाशः स्फटिकशिलाफलकनिर्मितावदातविशालभित्तिपरिगततया प्रसृमरकौमुदी-कांतिमिव इंद्रनीलमणिफलककुट्टिमतलप्रतिबिंबितसमस्तवस्तुतया सलिल-भ्रांतिमुपजनयंतीं समुत्कीर्णानेकप्रताननीस्पृहणीयानां स्तंभानामग्रभागेषु धृतपाटलकंकटकैरागुल्फावसक्तरक्तचंडातकैर्निश्चलतनुभिः करविधृतकोश-वर्जितकृपाणैः परिजनैर्विसृष्टनिर्मोकैः कृष्णकाकोदरहस्तैस्समुत्कीर्णसुपर्ण-विग्रहैरिव विराजमानां धराधीशदिदृक्षयाभीक्ष्णं विवलितकन्धरैर्गम्भीर-प्रकृतिभिस्सामन्तनरपतिभिरुपशोभमानां कुत्रचित्संगीतवीणावेणुकलापार-दृश्वभिः कुशीलवैरलंकृतांकणां कुत्रचित्पदवाक्यप्रमाणज्ञैर्वेदान्तवाद-विशारदैस्सशरीरैश्शान्तरसैरिव नृपसभप्रवेशोचितवेषैः पंडितप्रकांडैः परि-मंडितां सभां बलारातिस्सुधर्मामिव प्रविश्य, समुत्थितान्कोरकितकर-

सरोरुहान्सभास्तारानतुमोदमानश्शिरसैव कटाक्षप्रसरणेनैवानंदयन्नुदयगिरि-शिखरं दिवाकर इव रत्नमयं सिंहासनमारुरोह।

अधिरूढे च तस्मिन्राजनि वारसुन्दरीकरारविन्दवीज्यमान-विशदचामरकलापे प्रणिपतदनेकावनीपतिमकुटमालामणिरुचिनीराजित-चरणकमलयुगले वीणादिविविधानवद्यवाद्यसंमोदितमानसे, प्रविश्य च सभां द्वारपालः प्रणिपत्य सविनयं देव! मखप्रियो नाम तपोधनश्चतुर्भिरंते-वासिभिस्समं देवदिदृक्षया द्वारि तिष्ठति। एतदवकर्ण्य देवः प्रमाणमिति अभिधाय विरराम। तत्क्षणमेव सभ्यैस्सममुत्थाय गत्वा च नरपतिर्द्वारदेशं प्रह्वभावेनाबद्धपिंगजटमानाभिलम्बमानकूर्चकलापमावेष्टितकक्षतलनिक्षिप्त-कृष्णाजिनं दर्भपवित्रसनाथानामिकांगुलिना दक्षिणहस्तेन गृहीतकमंडलु-मक्षमालावेष्टितमणिबंधेन वामपाणिना विधृतयोगदंडं आजानुचीरचेला-बद्धकच्छं द्वादशोर्ध्वपुंड्रमंडलधिक्कृतदंडधरदंडभयं प्रवयसं तेजसा तिरस्कृत-वैश्वानरं लंबमानपाटलजटैः कृष्णाजिनपरिधानैर्निरन्तराम्नायाभ्यसनश्रमकृश-तनुयष्टिभिर्मूर्तिमद्भिर्विनयैरिव चतुर्भिश्शिष्यैः परिवृतं तं मखप्रियं नमस्कृत्य मुनिवरं नीत्वा च सभाभ्यंतरं ब्रुस्याच्छादिते कनकपीठे समुपवेश्य च यथाविधि समभ्यपूजयत्। ततश्च तेन विनयाभिरामेण नरपतिना अपि कुशलं? कच्चिन्निर्विघ्नं तपः? इति कृतानुयोगो योगीशस्सभ्येषु तद्भाषित-शुश्रूषया समधिगतेषु जोषंभावं गभीरया गिरा भो! राजन्! त्वयि परिपालयति विश्वम्भरां सर्वमपि सम्यगस्माकं प्रचलत्येव। तथापि चण्ड-दंष्ट्रो नाम चण्डपराक्रमः क्रव्यादो मदाश्रमस्यानतिदूरे पर्यटन्नसकृदभिपत्य तपोविघ्नमाचरति। निरन्तरायं तपः कर्तुं नैव शक्नुमः। तदधुना भवतैव स निहन्तव्य इति व्याहृत्य निरगच्छत्सभांकणात्।

तदनु स जीवसेनस्सचिवायत्तीकृतभुवनभारः करकमलकृतकरवालो वाजिवालचामरप्रकटितराजभावः समुद्दंडकेतुदंडकोटिचलपटपरिमंडितं

पांडरघोटकचतुष्टयसनाथपुरोभागमग्निवर्मनामकसूताविरहितपुरोदेशं द्वारदेशस्थितं रथमधिरुह्य वृत्रासुरवधबद्धादरः पुरंदर इवाराजत ।

तदनु सारथिना परिचोदितास्तुरंगमाः किंचिदिव विवृतवदनाः खलीनमसकृज्जिह्वामूलेन चालयंतस्सितफेनपिंडाकुलितसृक्कभागाः निश्चलोर्ध्वश्रवणपुटाविनमितकश्यदेशाः निजोदरेण स्पृशंतो धरातलं स्तोकोन्नमितवालकलापास्स्वेदसलिलस्नापितविग्रहाः परस्परसंघर्षणजनितघर्मजलसमुत्थितफेनचर्चितोरुमूलाश्चात्यर्कवाजिवायुवैनतेयजवाः सुदूरपरिदृश्यमानानपि महीधरमहीरुहान्क्षणादेव पृष्ठतः कुर्वंतः तां निशाचरावासभूमिमगमन् ।

स तु जीवसेनः परितः पश्यन् निशम्य च प्रधावतां सैंधवानां खरतरखुरपुटरटितममर्षेणापतन्तं सन्ध्यातपारुणितशिखाद्दलपरंपरं जंगमं नारिकेलतरुमिव शिरोविलसत्पाटलकुटिलजटापटलं स्थूलपनसफलसंकाशस्थपुटितोत्तमांगं सरीसृपफणांतःप्रदेशप्रतीकाशनिम्नललाटतटमरुणतरप्रसृमरभ्रूदंडविडबितदेवजग्धकसंमार्जिनीसंभारमत्यल्पनेत्रापहसिततिंत्रिणीपत्रवैभवं शूर्पायतलंबमानरोमपिहितश्रोत्रयुगलं पृथुलतरप्रसृतकुटिलघोणगह्वरं गजगंडस्थलानुकारिसमुद्दंडगंडभित्तिविडंबितगंडशैलंशैलदरीसोदरभयंकरवक्त्रविवरं गुहोभयपार्श्वनिपतन्निर्झरप्रतीकाशनिशितसितायतदंष्ट्रायुगलं सालतरुमूलदेशसोदरपीवरकठोरतरकंधरं स्कंधपीठधिक्कृतोद्दंडगंडशैलं खदिरपीवरशाखानुकारिभयंकरभुजदंडं गिरिसानुशिलातलविशालव्रणकिणस्थपुटितवक्षस्थलं स्तंबेरमशुष्कसिराबद्धशार्दूलाजिनतटलंबमानपीवरोदरं स्थूलस्थूलवलगन्मांसलासितसक्थिस्तंभं करिचरणोच्छूनजंघाकांडं परस्परप्रोतारालांगुलिकुटिलविशालकठिनचरणं प्रांशुशूलप्रोतमृतविविधवन्यमृगारुणरुधिरबिंदुसिच्यमानबाहुमूलं कलिकालमिव सशरीरं दुरितनिकरमिवैकत्र संघीभूतं द्वितीयमिव यमं हरमिव धृतत्रिशूलं महासेनमिवाद्भुतशक्तिं पुण्यजनाभिनन्दितमपि पुण्यजननिंदितं प्राणिहननैकबुद्धिमपि सदावनसरणिसंचरणोत्सुक-

बुद्धिं सुरारिमपि सुरातिप्रीतिं मन्युजन्मभूमिमपि मन्युशत्रुं तं चंडपराक्रमं चंडदंष्ट्रमद्राक्षीत् ।

तत्रांतरे तरसा तरसादनस्स्यंदनोपरि निपत्य समवर्तिसमीपवर्तिनमतानीत्सूतमाजिदुर्मदैर्वाजिभिस्समम् । तत्क्षणमेव शतांगादुत्प्लुत्य क्षितितले स्थितस्य राज्ञः खड्गधारा वाजिधारामयं रुरोधेति रुषेव तस्य यातुधानस्य शरीराद्रुधिरधारामपारामुदपादयत् । तथापि न्यक्कृत्य क्षतबाधां राक्षसोऽयं रोषादुत्क्षिप्तरूक्षाक्षिपक्ष्मा क्षितिरक्षकमुत्क्षिप्य रूक्षकराभ्यां निक्षिप्य च कठोरे स्कंधपीठे पादाक्षेपेण क्षोणीतलं क्षोदमिव कुर्वन्नखर्ववर्ष्मा निजगहनगुहाभिमुखं प्रतस्थे ।

तादृक्षं रक्षस्समीक्ष्य समीकदक्षः क्षितीशस्तत्क्षणं कौक्षेयकधारया धरायां तत्कंधरां न्यपातयत् । कृत्तं तदुत्तमांगं परिस्रवद्रुधिरकलुषितकंठान्नृत्यद्रुधिरधारारुणकिरणनिकरं निपतदंगारकग्रहमंडलमिव पपात वसुमत्यां । क्षणादेव गंडूषायमाणबुद्बुदाकुलरुधिरकलुषितकंठान्नृत्यतः कबंधात्कोऽपि नयनपथार्गलायमानस्तेजस्समुदयस्समुत्थाय प्रसृमरपद्मरागरुचिररक्तादुदयगिरिशिखराद्दिवाकर इव मुहुः परिचलच्चामीकरपक्षयुगलं दिव्यमणिमयं कनककलशकांतशिखरं प्रसृमरपरिमलाकुलपारिजातकुसुममालातोरणं समुत्कीर्णस्वर्णचारणं मेरुसमानं विमानं समारुरोह । अधिरुह्य च तत्र विराजमानं दिव्यवारसुन्दरीकरारविन्दवीज्यमानचामरं दिव्यालंकारं दिव्यपुरुषाकारं तेजोवारं स नरपतिस्सविस्मयं समवलोक्य प्रणिपत्य च कृतांजलिस्सविनयं समुन्नमितवदनारविंदः देवगन्धर्वयक्षकिन्नरेषु एवंविधनिहीननिशाचरजन्मनः किंवा निदानं ? कस्त्वं निवेदयतु भवान् मदनुजिघृक्षया । श्रोतुकामोऽस्मि । निवेदय दययेति पप्रच्छ ।

तदनु स तेजोमयः पुरुषः प्रत्युपकारार्होऽयमिति मनसि कृत्वा सानुकंपमेवमाह । वत्स ! यदि कुतुकी शृणु तावत् । नक्तमालतमाल-

रसालसालाश्वत्थदधित्थादिविविधवृक्षषंडमंडितस्य शुकपिकादिनानाविध-शकुनिनिकरकलकलरवमुखरितस्य सुन्दरीमुखस्येव तिलकालंकृतस्य विट-कुलस्येव गणिकासनाथस्य मिथिलापत्तनस्येव वैदेहीजन्मस्थलस्य विष्णु-वक्षस्स्थलस्येव लक्ष्म्याक्रांतस्य पाकशासननगरस्येव विरचितरंभावासस्य महेश्वरकेतनस्येव वृषभालंकृतस्य द्वारकानगरस्येव मुसल्यधिष्ठितस्य वैकुण्ठ-स्येव विराजमानमुकुन्दस्य अलकापत्तनस्येव विलसत्कुबेरकस्य लङ्कापुरस्येव पलाशगणसमाक्रांतस्य नराधिपोत्तमांगस्येव सितच्छत्रालंकृतस्य श्रीनन्द-कुमारकरतलस्येव वेणुरमणीयस्य युद्धांकणस्येव विजृंभमाणशरनिकरस्य राघवबलस्येव मर्कटकुलनिचितस्य पद्माकरस्येव पुंडरीकषंडमंडितस्यापि भयंकरस्य नगरस्येव भूदाररक्षितस्यापि परित्यक्तजनतावासस्य गगनतल-स्येव पर्यटद्दक्षपतेरपि कृच्छ्रदर्शनीयस्य अवरोधस्येव महिषीमंडलमंडि-तस्यापि विविक्तस्य विष्णुपदस्येव हरिकृतावासस्यापि पर्यटन्निशाचरवर्गस्य स्वर्गस्येव कौशिकाक्रांतस्य रमणीयाप्सरसश्च पातालस्येव तमालांधकारस्य नागाकुलस्य च शवशतनिचितस्यापि समारब्धशिवामितक्रमस्य च दंड-कारण्यस्य मध्ये विराजमानायां गिरिगुहायां वरमालिनी नाम नरपति-दुहिता द्वादशाब्ददेश्येन चारुवक्त्रनाम्ना तनयेन सममुवास। पदेपदे स चारुवक्त्रो लवित्रखनित्रपाणिर्नखंपचरजोराजिरूक्षे आतपतापिते काननकापथे तत्रतत्र पर्यटन्कंदमूलफलान्यन्विष्य पिटकमापूर्य चासाद्य गुहां समर्प्य च तानि जनन्यै तया दत्तैः कंदमूलफलैः सुहितस्तावदविदितनिजाभिजात्य-मतिररण्यमेव शरण्यं मन्वानः कालमतिवाहयामास।

एकदा तादृक्षं भोगैकभाजनमपि कठोरतरे कान्तारे परिभ्रमन्तं तं सुकुमारं राजकुमारं निरीक्ष्य स्मृतिपथाधिरूढनिरतिशयसौधसौभाग्यपरम्परा दुःखैकभाजनं रुदती तैलसंस्कारविहीनतया धूलिधूसरितकेशपाशा विमुक्त-मुक्ताद्याभरणा परिधृतधौतांशुका कन्दमूलफलाहारतया कठोरातपसंचारेण चातिकृशग्लपिततनुयष्टिः क्लिष्टा च कांतारवासेन सा वरमालिनी नितरां

दुःखिता मलिनमलिनं तनयमाश्लिष्य निरर्गलं निर्गलतातितीक्ष्णतरेण बाष्पपूरेण न्यषिंचत्कोमलतरं तत्कपोलतलम्। तदा स चारुवक्त्रस्तीक्ष्णतराश्रुसलिलव्यथितकपोलफलकस्सपदि समुत्थाय विलपन्तीं निजजननीमवलोक्य सविनयमम्ब! कुतो रोदिषि? कुतो वा विमुंचसि नयनाभ्यां तीक्ष्णतरामश्रुसलिलधारां? निवेदय मे दयया दुःखनिदानमित्यपृच्छत्। पृष्टा च सा वरमालिनी चेलांचलेन परिमृज्याश्रुधारां समस्तमपि दुःखं गूहमाना गदितुमारभत शोकनिदानं। वत्स! किमनेन श्रुतेन? तथापि निवेदयामि। शृणु तावत्।

अस्ति हि समस्तोद्भवदद्भुतभूमिरलकेव धनसमृद्धा सुकृतिजनलालिता च सुरनगरीव शतमन्युपरिरक्षिता दानवारिसंमोदिता च नारायणतनुरिव समस्तवस्तुमयी विलसल्लक्ष्मीविलासमंजुला च वैजयन्तीराजिविराजमाना वैजयन्ती नाम राजधानी। यस्यास्सदनशृंगाणि कुर्वन्ति कुशलानुयोगं नाकलोकस्य। यस्यां च कानिचिदगाराणि दूरीकृतताराममरीचिरुचिरुचिरहीरावलिनिचितानि मेचकजीमूतस्तोमसमावेष्टितावलग्नान्यनुकुर्वंति कानिचिन्नीलांबरस्य कानिचित्प्रत्युप्तमरकतमणिनिकरचामीकरप्रसृमरसुषुमाप्ररोहाणि परिहसंति मन्दिराणींदिराकान्तकान्ततनुकांतिम्। यस्यां च विकलांगापत्यात्ययवैधव्यदौर्गत्यदस्यूपनिपतनादिक्लेशानां वार्तापि न याति प्रजानां श्रवणसरणिं। या च रसालबंडीलपाटलवकुलमालिकामलकतिलकपिच्छिला नक्तमालतमालमालतीपलाशनवमालिकाचंपकचांपेयमल्लिकानागवल्लीपूगमागधीकुन्दसिन्धुवारकरवीरकरीरजंबीरफलपूरबीजपूरादितरुलतादिभिरभिरामेष्वारामेषु शुकपिककलरवशिखावलकलविंकादिशकुनिकुलकलकलनिनदैर्मरन्दनिष्यन्दसुन्दरारविन्दबृन्देन्दिन्दिररावसुन्दरतटतटाकतरंगपटलपर्यटत्करेटुचटुलवरटापटलमरालसारसबकक्रोकादिविविधविचित्रजलचरपतगनिकरारावैः कुसुमापचयोत्सुकललनाजनकरचरणाद्याभरणरणितैः कुसुमपरिसरपरिभ्रमच्चंचरीकचयचारुझंकारैश्च मुखरीक्रियते॥

तस्यामासीदखिलनरपतिमकुटतटघटितरुचिरनवमणिगणकिरण - निकरानुषंगादिवारुणचरणपल्लवः पाकशासन इवाद्भुतायुधविध्वस्तसमस्त-महीभृत्पक्षविजृंभो मेरुरिव रत्नकटकश्शंकर इव राजमौलिस्सवितेवा-सुलभदर्शनश्शरत्काल इव राजहंससंसेवितस्तार्क्ष्य इव सत्पथसंचारो भुजग-वल्लभ इव विधृतभुवनभारः प्रथमयुगविलास इव धर्मैकवसतिःचित्रपटः इव विविधवर्णोपलालितो दशरथ इव सुमित्राविरहितश्चंद्र इवाह्लादित-सकलजनहृदयः दर्शनसंदर्शनविमलहृदयो विमतकेसरी नाम राजा तव पिता वृषस्कंधाभिधेन सुहृदा समम् ।

यस्मिंश्च राज्यलक्ष्मीश्चंचलेति चिरकालानुवर्तमानामपकीर्तिं परिहर्तुकामेव स्थिरतामवाप। यस्य च कविरिव पदातिचिंतनकृतसंधि-विग्रहस्सरित्पतिरिव राजलक्ष्म्युदयहेतुश्शुक्लपक्ष इवाभिवर्धितराजो योगीव मंत्रबलप्रत्यक्षीकृतसकलविषयः पूर्णसुधांशुरिव सकलकलास्पृहणीयो निजधिषणान्यक्कृतधिषणधीवैभवो मरुन्मालो नाम भूसुरवरस्सचिववरः। यश्च वृषस्कंधेन विना प्रमदवनविहारं सलिलक्रीडां मधुरतररसभरितमशनं मृगयामक्षक्रीडां मनोहरहारादिभूषणं स्पृहणीयभाषणं स्नानमेवमन्यानि च निजकार्याणि नाचरति स्म भार्यासंश्लेषणावसरमेकमंतरेण ।

एवं स्थिते कदाचित्परिलिप्तसुगंधितैलैः प्रसाधिनीप्रसाधितैश्च केशपाशैर्विरचितभोगिभोगनिभायतवेणीं तदुपरि विनिहितपरिमल-स्पृहणीयषट्चरणगणमुखरितपिंडीकृतप्रसूनमालां चूर्णवासितोर्मिसधर्मललि-तालकावलिमनेकवर्णमयूखाभिभूतनयनहीरमयकर्णिकालंकृतकर्णपाशां मृग - मदतिलकालंकृतविशालललाटफलकां कंदर्पकोदण्डडंबरहरोन्नतभ्रुवमंजनां-चितखंजनेत्रीं दर्पकदर्पणायमानकोमलतरकपोलफलकां चामीकरचंपककोर-ककमनीयनासिकां तांबूलचर्वणारुणिमबंधूकगर्वसर्वंकषलावण्यमधुराधरां मलयजरसपरिमळीकृतकंबुकंधरां नवरत्नमालामंडितपयोधरमंडलां जात-रूपापादितहंसमिथुनसनाथपर्यंतकांतदुकूलालंकृतां मेचककौशेयकंचुलिका-

वंचितवलाहकसुषुमातिशयां मयूराकारकेयूरभासुरबाहुलतां विविधतनुतर-विचित्रमणिमयवलयश्रेणीस्पृहणीयमणिबन्धां विचित्रपत्रभङ्गतरंगितांगुलीय-कालंकृतांगुलिपल्लवां चञ्चच्चञ्चलारुचिकांचनकांचीदामांचितवंचितपंचशर-चापलस्तकप्रशस्तावलग्नां नूपुरमनोहरचरणसरोरुहां अवदातदंतसमुत्कीर्ण-सालभंजिकापुंजमंजुलं समास्तीर्णक्षीरगौरतल्पं रत्नराजिपरिष्कृतपर्यंतं पर्यंकमधिष्ठितामेकाकिनीमवलोक्य स वृषस्कंधहतकः पञ्चशरशरविशीर्ण-हृदयो ममोपकण्ठं कंठालिंगनेच्छया मंदमंदं भीतभीत उपससर्प ।

विलोक्य चोपसर्पंतं भीता त्रपयोत्थाय पर्यंकात्किंचिदिव कुंचितवदना मंदमन्यतो गंतुमुद्यताभवम् । स तु तदा मदनमंदीकृतमतिरतिमात्रं प्रकंप-मानगात्रः प्रसभमर्गलीभूय साध्वससमुद्गलत्स्वेदबिंदुदंतुरितमुखमंडलः शश्व-दवरोधमभितः पश्यन्नीरसरसनांचलालिह्यमानाधरोष्ठपुटः परिस्फुटितस्खल-दक्षरगणघटितमनुलपन्किमपि किमपि मुखवैवर्ण्यप्रकटितनिजदुष्प्रवृत्तिसा-ध्वसो दैन्यादेवं जल्पितवान् । अयि ! सुधांशुधिक्करणचणवदनारविंदे! चित्र-मेतत्त्वन्मुखचन्द्रदर्शनमात्रेण मोहांधकाराकुलित इतिकर्तव्यतामूढोऽस्म्यह-मुन्मत्त इव स्प्रष्टुमुद्यतस्साध्वसेन निर्व्यापारो जोषमस्मि । क्षणादेव शंबरारिशरनिकरविशीर्णहृदयः स्प्रष्टुकामोऽस्म्येवमेव स्प्रष्टुमपि त्यक्तुमप्य-नीशस्सांत्वयामि परिक्षुभितं हृदयं । किमु न ते नते मयि कृपा ? क्षणमात्रं निपातय कटाक्षं कृपयेति दुर्विदग्धो दैवदग्धो बहुधा प्रलपन्मत्पादयोः प्रणिपत्य समुदतिष्ठत् ।

तदा किमिदमेवं ? किं कर्तव्यं ? किं वक्तव्यं ? किमति-संधानेन वंचयेयं? किमथवा सांत्वोक्त्या परावर्तयेयं? कथमीदृशस्संवृत्तोऽयं ! न हि चक्षुः कामस्येति सत्यं । अनेन नावकाशो दीयते बहिर्गन्तुमपीति दुःखेन साध्वसेन कोपेन च जर्झरितहृदयायां मयि चिंतैकतानायां खल ! गोमुखव्याघ्र इव शादपिहितकूप इव च प्रदर्शितविस्रंभस्सुहृदिव समासा-द्यानवद्यहृदयमस्मद्वल्लभं निर्लज्जो जननीसमानां मामभिलषसि नृशंस! प्रशं-

ससि संसदि परिशुद्धात्मानमात्मानम्। कथय विकत्थनपर!कस्मादन्यस्माद्वा परावर्तसे दुष्कर्मणः ? धिग्जीवितमीदृशं। न कदापि भवतश्श्रुतिपथमागतः किमु परयोषाभिलाषिणां चपलमनीषाणां पुरुषाणां पुरुहूतपौलस्त्यप्रभृतीनामुदंत इति सावेगं निगदंत्यां, तत्रांतरे मत्सखीमापतंतीं मकरिकामवलोक्य स दुरात्मा त्वरया निरगात्। गते च तस्मिन्नुपविश्य पर्यंके रुदती निपतदश्रुकणिकाकुलितकपोलफलका दुःखभरजर्झरिताक्षरा ससांत्ववचनमसकृत्पृच्छंत्यै तस्यै मकरिकायै प्रचलितमखिलमपि वृत्तं न्यवेदयम्।

सा तु मकरिका समाकर्ण्य कर्णकर्कशं कापुरुषस्य तस्य शाठ्यं साध्वसकंपितहृदया रोषकषायितलोचना गत्वा च सरभसं भवत्पित्रे विमतकेसरिणे निवेद्य मद्दुःखमात्रं सद्यस्तमानयति स्म मदुपकंठम्। स तु तव पिता रुदतीमवलोक्य च मां मत्पार्श्वे एव निषण्णो विषण्णहृदयश्चेलांचलेन परिमार्जयन्कपोलतलपतितं बाष्पसलिलं समुत्सारयन्करकमलैर्विलुलितां चूर्णकुंतलावलिं निवारयन्मधुरया गिरा हृदयगतमपरिमितं संतापं परामृशन्मृदुलतरेण करकमलतलेन मूर्धानं मंदमप्राक्षीत्। सुदति! कुतो रोदिषि ? इति।

पृष्टा चाहं वेपमानहृदया बद्धांजलिपुटा प्रह्वभावमवलम्ब्य नाथ! सविनयमिदमेकमभ्यर्थये। नितरां बिभेमि निवेदयितुं। स्त्रीहृदयविजृंभितमिति नोपेक्षणीयं। चंचलप्रकृतिकृतमिति नाप्यनादरणीयं। परस्परमैत्र्यसहनोक्तिरियमिति नैवाविश्वसनीयं। निजसौन्दर्यदर्पप्रकटनपरीवाह इति न दूरीकरणीयं। असंभावितमिदमिति न तिरस्करणीयं। पैशुन्यप्रकार इति नाप्युदासितव्यं। अश्रद्धेयमिति नैव निराकरणीयमार्यपुत्रेण मद्वचनं। नाहं मिथ्यावादिनी; न च पश्यामि प्रयोजनमसत्यकथनेन। योषितः पातिव्रत्यैकधना हि! तद्यथाकथंचिदपि कुलांगनयाभिरक्षणीयं पातिव्रत्यं। तदत्यये त्वभिजातामपि तृणाय मन्यंते। सत्पुरुषाः गर्हंते। नाप्याभाषंते। तदहमावेदयामि भवदेकशरणा। शमीतरुरिव

बहिर्निखिलवृक्षसाधारणोऽप्यंतर्निहिततैक्ष्ण्यस्सुहृदाभासस्ते परिपंथी वृषभसधर्मा स वृषस्कंधो मामकामयत। नाथ! कथमहं निर्भयं भुजंगकृतावासे वासे वसामि ? तदद्य बहिर्निस्सारय तं। नान्यथा प्राणिमीति न्यवेदयम्।

निशम्य च कर्णकठोरां गिरमुदीर्णां तव पिता संधुक्षितकल्पानलकल्पानलपामर्षपरिघूर्णितलोहितलोचनो भ्रूभंगभीकराकारः परस्परसंघर्षणविकटकटकटरटितमुखरितरदनश्रेणिः परिस्पंदमानारुणाधरःप्रादुर्भवद्दिवाकरबिंबः इव ताम्रतरमुखमंडलो गिलन्निव भुवनं तन्वन्निव पादाभिघातेन गर्तमुर्वीतलं चालयन्निव करतलास्फालनरवेण कुलाचलकुलं क्षोभयन्निव हुंकारेण महोदधिं दहन्निव क्रोधानलेन त्रिभुवनं तिरस्कुर्वन्निव प्रलयकालशूलिनं विडंबयन्निव नरकंठीरवं रिपुहननभीकरं निजावलग्नलग्नात्कोशात्सरभसमाकृष्य परिस्फुरंतीं सरीसृपसंकाशां करवाललतां तज्जिघांसया जांघिको निर्जगाम।

ज्ञातोदंतः प्रविदारणदारुणः कृतघ्नताप्रकटनकटुतरहृदयो दयादूरीकृतः स तु वृषस्कंधहतकः सरभसमापतंतं श्येनपातं तव तातं विलोक्य वेगातिशयेन यावदंतिकाभिगमनं तावदेकत्र निश्चलतया स्थित्वा स्थिरचित्तो निर्भयं क्रोधाधीनचेतसि सन्निहिते तव ताते मल्लतल्लजः इव सरभसमपसृत्य दृढमपरांगे तद्भुजदंडयुगलं पाणिनैकेन गोधारग्रहं गृहीत्वा परेण च करेण भवत्पितृमुष्टिबंधादाच्छिद्य मंडलाग्रमुग्रबाहुस्तेनैवाच्छिनदुत्तमांगं तव तातस्य।

क्षणादेव निजवल्लभात्ययजनितशोकातिरेकोन्मस्तकवैराग्यपरिगृहीतकाषायांबरायामिव रुधिरधारासारारुणायां धरायां निपत्य परिस्फुरंतं समुद्गलद्रुधिरबुद्बुदबन्धुरां कंधरामसकृद्विवृतवदनकुहरं स्तोकपक्ष्मान्तरितसाचीकृतलोचनकनीनिकं परिलुठत्तव पितुरुत्तमांगं च दर्शंदर्शं शोकपारावारनीरनिमग्नहृदयेषु तत्रत्येषु सद्यःपाटितवनकरिकुंभपीठात्कंठीरवादिव रोषकषायितचक्षुषस्तस्मान्नृशंसाद्वृषस्कंधाद्भीतभीतेषु बाष्प-

सलिलपरिप्लावितलोचनेषु मूकेष्विवोररीकुर्वत्सु जोषंभावं अहं तावत्साध्वसेन शोकेन च वेपमानगात्रयष्टिर्बाष्पधारापूरपरिपूरितनयनतया अदृश्यमानलक्ष्या गाढांधकारमध्यवर्तिनीव निखिलैरप्यलक्षिता निजपरिजनैरपि दूरीकृता निरवलंबना लतेव भुवि लुठंती परित्यक्तसकलरमणीयाभरणा हृदयजनितशोकानलेनेव शोषितसलिलतया शुष्करसना परिधृतधवलांशुका निर्गत्य च प्रासादादेकाकिनी तेनैवांशुकप्रांतेनावगुंठितमस्तका विरलतरमनुजसंचारेण नगरमार्गेण निरगच्छम्। तत्रत्याः केचिदप्यपरिचिततया दौर्गत्यसमुचितवेषतया च न मामज्ञासिषुर्नरपतिमहिषीति।

निर्गत्य च नगरादसूर्यंपश्याप्यहं गगनमध्याधिगतसहस्रदीधितितया निरंतरापरिमितातपपरितप्यमानमस्तकोन्मस्तकशोकविहस्ता च स्मारंस्मारं भवत्पितरं विदीर्यमाणकठिनहृदया दयाहीनं पापिनं परिपंथिनं तमनुस्मृत्य च भयद्विगुणितस्वेदसलिलस्नापिता तृणेऽपि चलति तमेव पापिनं विशंकमाना पातिव्रत्यैकरक्षणपरा व्यथामंदीभूतगमनापि कथंकथमपि प्रयत्नबलकृतदूरप्रयाणा पदेपदे स्खलंती क्वचिन्नखंपचरजोराजिरूक्षे क्वचिदतिनिशितकंटकपटलकटुतरे क्वचिच्छार्दूलखरतरनखरोत्खातवातायुशोणितबिंदुदंतुरे क्वचिच्छललीशातशिखाशलाकाकंटकिते क्वचिदतिहरितापरिमितशादसंदोहसंदानितमरकतकुट्टिमसंदेहे क्वचिन्नमेरुतरुतलप्रच्छायशयानैः समारब्धरोमंथैः कुरंगमंडलैरुपशोभमाने क्वचित्करिकलभकुलपरिपातितैस्सल्लकीपल्लवैररुणीकृते क्वचित्सुदूरं निबद्धपंक्तिभिः पिपीलिकापरंपराभिः कालीकृते क्वचित्कोलकुलकलुषितैः कर्दमप्रायैः पल्वलैश्शीतलतले क्वचिद्विविधकंटकनिचितलताजालजटिलतया दुष्प्रवेशप्रदेशे क्वचिद्विषधरनिर्मुक्तनिर्मोकजालधवलितरंध्रप्रांतैर्वल्मीकैरतिभयानके क्वचिज्जंभारिदंभोलिपातितपक्षैः पर्वतैरिव कंठीरवखरनखरकरताडितकुंभपीठैरुपरतैःकुंजरैराच्छादिते क्वचित्स्थपुटिते क्वचित्कंटकिते क्वचिच्छर्कराकुलिते क्वचिद्गर्तदुर्गमे वनमार्गे सुदूरं धावंधावं

कृच्छ्रेण स्वेदजलधारास्नापितप्रतीका अप्रतीकारानिर्वचनीयक्लेशा तृषया भिया व्यथया च शुष्कवदना कोष्णबाष्पैकसारा निराहारा खरतरकिरणातपपरितप्ततलपरिस्फुटितचरणतला रोदनैकप्रतीकारा वनभूमिमेनामागमम् ।

आगत्य च पृथुलविद्रुमानुकारिणीभिः फलमंजरीभिरतिरमणीयस्य पाटलफलनिकटसंभूतैरविरलहरितपलाशपटलैररुणचंचुपुटानां शुकनिकराणां भ्रांतिमुपजनयद्भिर्भासुरस्य विविधविचित्रशकुंतनिवहकलकलनिनादैश्शब्दापितस्य स्थिरतामाकल्पमुत्पादयितुमिव विरचितपृथुलस्तंभैः प्ररोहसहस्रैस्सनाथस्य वनदेवतावासविशालशालासंकाशावकाशसमुपशमितदिनेशांशुतापस्य विंध्यस्येवारविंदबंधुसुधांशुमार्गार्गलीभूतशिखरस्य वटविटपिनोऽवरोधवधूजनमिवासूर्यंपश्यं रसातलमिवांधकारपरिवृतममरावतीपत्तनमिव कौशिककृतावासं पृथुलतरं मूलतलमविशम् । प्रविश्य च समुपविश्य मूलशिलातले शीतले परिश्रांता श्रमजलमखिलमपनीय वदनतले समुन्मिषद्वसनांचलेन निर्मानुषतया द्विगुणितात्युल्बणशोका भीतभीता परितो दत्तदृष्टिरदृष्टायतिशाता मनस्येवमचिंतयम् ।

निखिलजनविगर्हितं दुःखैकभाजनं वंचितसुखलवसंकल्पं मंगलकार्येषु मनसाप्यचिंत्यं महोत्सवेषु कटाक्षेणाप्यनवेक्षणीयं बंधुजनेष्वपि समुपजनितलाघवं पलाशप्रसूनमिव निष्फलसौन्दर्यं चित्रगतयुवतिशरीरमिवोपभोगानर्हं यौवनमामरणवर्ति वैधव्यं तावदिदं अतर्कितोपनतं मामभ्यभवत् । यदनवरतमपि अबलाजनमव्रणं व्यथयति । अनामयं क्षपयत्यनाश्रयाशं दहति । अविकलांगं विरूपयति । यच्चाभिमतं बंधुजनमिवाभरणजालमपि दूरीकरोति । केशपाशमिव हृदयमपि स्नेहहीनं तनोति । यदभिभूतायाश्च योषितो मुखमंडलं रक्तांबरायाः प्राचीदिशस्समुद्यन्मार्तंडमंडलमिव प्रभाते दर्शनपथात्परिहरंति जनाः । यदभिभूताश्च परिमलहृदयंगमानि प्रसूनानि स्मरशिलीमुखभियेव नावेक्षंते मृगेक्षणाः । हन्त ! न जाने दुस्तरं वैधव्यमीदृशमनुभवंत्या धृतप्राणया मया यापयितव्याः कति

समया इति । अथवा कथमपि जीवंती न किमपि प्रयोजनं पश्यामि । किंत्वनर्थमेव । तदधुनैव त्यक्ष्यामि प्राणानिति विचिंत्य च तस्मादुत्थायें-धनानि तत्रतत्र निपतितानि समाहृत्याहृत्य विरचय्य विशालामुच्छ्रितां च चितां दृषदा दृषदमभिहत्य तज्जनितं तस्यां न्यक्षिपमनलम् ।

निक्षिप्ते च तस्यामग्निकणे निजसख्यास्सुरापगायाः कुशलानुयोग-चिकीर्षया समुद्गच्छन्निव यमुनासलिलप्रवाहोऽत्यधिकतया निर्भिद्य धरणि-मपि वेगादूर्ध्वं निस्सरन्निव रसातलादंधकारो नंदनवनश्रीदिदृक्षयेव आस्वर्ग-मुपचीयमानस्तमालतरुनिकरो मनुजानां दिगंतरालेषु दिगंगनाकेशपाशसंदेहं नीलकंठानां वियदंकणे कादंबिनीभ्रांतिं घूकानां आमोदं चक्रवाकानां शोकं च समुपजनयन् व्याघ्रचित्रकायप्रभृतीनां वनसत्वानामंतकायमानः कांतार-मखिलमपि नीलसांद्रपटावगुंठितमिव वितन्वन् समंतात्समुदचरद्धूमनिकरः ।

तदनु फूत्कारायमाणेन समीरणेन क्रमेण प्रतिबोधितः प्रथमं चितांतरांतरा प्रसृमैर्ज्वालापल्लवैः किसलयशंकामुपजनयन्क्रमक्रमसमा-क्रांतसकलेंधनो दिशिदिशि विप्रकीर्णस्थूलस्फुलिंगनिकरो ज्वलदुदग्रशिखर-ज्वालाकरपल्लवैर्माणिक्यघुटिकानिकुरुंबमर्पयन्निव दिग्वधूभ्यः विजृंभमाण-ज्वालमालो लिहन्निव गगनतलं चटचटात्कारवाचालितहरिदंतरालस्स-मंततः प्रसृमरस्थूलबाहाभिरालिंगन्निव दिगंगनाः विसृत्वररोचिर्दूरीकृतकुंज-पुंजांतर्लीनतमःपटलः पाकशासनचाप इव विविधवर्णस्पृहणीयोऽरुण इव रक्तप्रभाप्रकाशिताकाशतलः विरिंचिरिव कमलयोनिः राधेय इव स्पर्शन-लब्धविकासो योध इव प्रकटिततीक्ष्णतरविचित्रहेतिः वारांगनाविलासः इवापहृतपल्लवसौभाग्यश्शाकुनिक इव निहतानेककुलायगतशकुनिनिकरः भीष्मनिशितशरशतहतिकुपितपार्थसारथिरिव प्रदर्शितचक्रज्वालः काभि-श्चिदचिरनिहतदैत्येंद्ररुधिरसिक्तनरकेसरिकेसरकलापानुकारिणीभिरतिर-क्ताभिः काभिश्चिन्मरकतशलाकासंकाशाभिर्हरितसुषुमाभिः काभिश्चिदिंद्र-नीलद्युतिगर्वसर्वंकषाभिः काभिश्चित्सुरापगापरीवाहनिभाभिर्विशदप्रभाभिः

ज्वालाभिः कंदलितविचित्रतरप्रकाशस्संत्रासितपत्ररथव्रातो वीतिहोत्रो नितरां जज्वाल ।

एवं ज्वलंतं तमाश्रयाशं प्रदक्षिणीकृत्य तस्मिन्यदा निपतितुमुद्यताभवं तदा वैहायसं वृत्तमानुष्टुभमिदमश्रौषम्—

राकेन्दुवदने ! कुक्षौ तवाद्य निवसन् शिशुः ।
अग्रेऽविष्यति मा भीस्ते तन्मा प्राणानिमांस्त्यज ॥

इत्याकर्ण्य च तदतिविस्मयेनाहमर्चिंतयम् ।

अहो ! विधिविलसितम् ! विज्ञायते प्राणपरित्यागेऽपि नैवाशयो दैवस्येति । हन्त ! अहं कथमिव पतिविरहिता धृतप्राणा निष्करुणा कान्तारेऽस्मिन्कालमतिवाहयामि । हा ! नियते ! विधाय च मामेवंविधदुःखस्य भाजनमिह मन्निधनमपि नानुमन्यसे । हन्त ! अथवा जन्मान्तरकृतस्य दुरितकर्मणः फलमिदमनुभूयते । न हि रसालफलमुपभोक्तुं शक्यते निम्बबीजमुप्तवतात्र । अहो ! परिणतस्य कर्मणो महिमातिशयः । भोग्यजातोपभोगैकलोलुपां मनसाप्यनालोचितक्लेशां मामचिरादेवं विधायारण्यानीमनीनयत् । न तावत्स्वप्नेऽपि तर्कितमीदृशी दुर्दशा मामभिभवतींति । को वा जानाति भवितव्यतां इति बहुधा विचिन्त्य च दयितशोकदम्यमानकंठा बाष्पकलुषितोच्छूनलोचना कृच्छ्रेण गुहामिमामविशम् ।

तदनु भगवति मार्तांडे कुड्मलीकृतकमलषंडे चितानलज्वालातितप्ततयेवारुणमंडले रक्तीकृतपश्चिमदिग्भागे अभ्रंकषचितानलज्वालासंतापासहिष्णुतयेव विसृज्यांबरांकणमधिगतवति चरमसरित्पतिपरिसरं समंतादभिपतद्भिरंधकारनिकरैरिव डयमानैर्वायसमंडलैर्निजकुलायाभिमुखं प्रस्थितैः कलरवकलविंकादिविविधविचित्रपतत्रिव्रातैर्बहुतरकलरवमुखरितदिगंतरैस्सलिलाद्रींकृतपक्षयुगलैः कदलीवनाभिमुखैः कट्टुचक्रकादंबप्रभृतिभिर्जलचरपतगैश्च वितानितं गगनतलम् । तदनु क्रमेण प्राप्ते च पतंगमंडले सलिल-

निधिं गुहाभ्यंतरेभ्यो बहिर्निस्सरतां घूकानां घूंकारघोषैस्तत्रतत्र पर्यटतां वनमशकपटलानां सूक्ष्मतरकलक्वणितैरतिनृशंसानां वनसत्वानां भीकरघोषैश्च मुखरीकृतमटवीतटम् ।

अहं पुनः परितो दत्तदृष्टिस्साध्वसेन वेपमानगात्रयष्टिर्निराहारतया निरंतरपरिधावनद्विगुणितपरिश्रमतया निरतिशयव्यथाक्वाथ्यमानमानसतया च दीनदीना अविरलमभिपततश्श्रवणयुगलं नयनपथं सशब्दं वनमशकान्वसनांचलेन परिहरंत्युपधानीकृतदक्षिणबाहुतला दरीद्वारशिलातलमधिशिश्ये । अहो ! नियत्या निद्राप्यपहृता । निर्निद्रैवानिर्वाच्यदुःखभरेणनयनकोणद्रोणीनिरर्गलनिर्गलद्बाष्पधारासारपूर्यमाणश्रवणविवरा विधिहतक ! निरनुक्रोशोऽसि ! न हि ते हृदि लेशोऽप्यार्द्रभावः । यतो निजवैभवापहसितवासवप्रासादे प्रासादे सादरं भुजिष्याजनपरिकल्पिते तुषारसंततिसोदराविरलजालजटिलतनुतरतिरस्करिणीमध्यवर्तिनि यन्त्रव्यजनजनितमन्दमारुतान्दोलितसितविततशरदभ्रविभ्रमहरमनोहरदुकूलवितानसंताने कल्पतरुकोमलकिसलयकल्पे तल्पे मधुरगानकुशलकुशीलवकुलविस्तृतप्रशस्तरागपरंपरामाधुरीपरिप्लावितस्वांतं कृतनिद्रामेनां मामेकाकिनीमधुना घोरतरे कांतारे कठिनतले शिलातले शायितवानसि । इति कंचित्कालं विधिमुपालंभमाना वराकि ! वरमालिनि ! न पर्याप्तमिदं तावत् दुःखम् ; क्षत्रावतंसदुहितुः परिगृहीतचक्रवर्तिपाणिपल्लवायास्ते । यतश्च तादृशदयितात्ययकंदलितशोकानलसंधुक्षिततापदह्यमानादप्यपरिस्फुटितान्नाधुनापि तव हृदयादपयांति प्राप्तपुटपाकाः प्राणाः । चिरमनुभव दुरितानुगुणं फलम् । इति कंचित्कालमात्मानं विगर्हमाणा नृशंसापशदेन कृतघ्नेन तेन निकृत्तं घोरतररुधिरधारासारकल्माषितं दुर्निरीक्षविकारप्रमुषितसौन्दर्यं दयितवदनं शोकातिरेकात्कंचित्कालं स्मरन्ती निरन्तरप्रसृमरतिमिरपटलतया नीलिमसमीकृतगर्तान्तरामुन्नतानेकानोकहनिवहनिबिडपलाशषंडद्विगुणितनैल्यां नीरंध्रध्वान्तनिरुद्धावकाशतयेव झिल्लिकानिकरताररताराखकैतवेन विलपंती

परिपतद्भासुरतारापदेशेन पतिताश्रुजलबिंदुसंदोहां तिमिरमयतया भियेव संकुचिताकारां निरुद्धश्वसनां निशीथिनीराक्षसीबंदीकृतामिव स्तब्धां अरण्यानीं कंचित्कालमालोकयंती मुहुराविर्भवच्चिन्तासन्तानतरंगितस्वान्ता कथंकथमपि शोकपरंपरामिव चिन्तासन्ततिमिव च दीर्घदीर्घां तां विभावरीमत्यवाहयम् ।

तदनंतरमुषसि प्रसभं प्रलोभितहृदयव्यापारया बलाद्घटितपक्ष्मपुट्या निद्रया विस्मारितशरीरां मामुदयगिरिशिखरस्तम्भोत्थिते निजकरालकराग्रविदारितांधकारहिरण्यकशिपौ रुधिररक्तमुखभागे तोषितद्विजव्रजे नरकेसरिणीव विलसति भगवति भास्वति समुद्धूयमानपक्षपुटाः उन्नमितकंठाः नीलकंठाः केकानिनादैः पक्षत्युदरसमुत्सारितेन निवार्य चरणेन शिरःकंडूं विवल्य च कन्धरां त्रोटिपुटेन समीकृत्य च बर्हकलापं निजकुलायेभ्यः प्रस्थिताः पत्ररथव्राताः श्रवणसुभगैः कलकलरसितैः वंदिनः इव प्राबोधयन्माम् ।

प्रबोधिता च समुत्थाय नातिदूरवर्तिनि शर्करिलप्रायतीरदेशे प्रान्तप्ररूढनलपटलदुष्प्रवेशे संफुल्लकमलकल्हारप्रसवप्रकरप्रसृमरकषायगंधकल्पितघ्राणतर्पणे जलचरपतत्रिनिकरकलकलरववाचालिते विमलसलिलतरंगशीकरवाहिवातशीतलितप्रांतप्रदेशे सरसि स्नात्वा परिधृतार्द्रवसना कथंकथमपि कान्तारकापथे पर्यटन्ती कन्दमूलफलान्याहृत्य च सुगंधीनि कुसुमान्यपचित्य निक्षिप्य च पत्रपुटे गुहामेनामासाद्य समभ्यर्च्य च भगवन्तं श्रीमन्तं नारायणं तैरेव कन्दमूलफलैः परिपूर्य च दयितनिधनद्विगुणिताशनायं जठरपिठरहतकं निर्व्यापारतया मदीयामिमां दुर्दशां भावयन्ती कोष्णबाष्पधारास्नापितस्तनमंडला विषण्णहृदया शिलातले सानुकंपमुपकंठमुपेत्य परिपृच्छंतीभ्यः अनतिदूरपक्कणवासिनीभ्यः पुलिंदसुंदरीभ्यः निगदंती विस्तरशो मदुदंतं कालमत्यवाहयम् ।

तदनु दशमे मासे मामाश्वासयितुमपारशोकवैश्वानरपरिप्लुष्टाद्धृदयादवतीर्णस्संकुचितशरीरो निजापराधशंकया विमतकेसरीव कर्कशतरदुःखदावानलसमाक्रांततया निरवकाशादभ्यंतराद्‌दुत्प्लुत्यागत इवानंदग्रन्थिर्भवानजायत। प्रादुर्भवति त्वयि मन्देतरानन्दतुन्दिलपुरन्दरादिवृन्दारकवृन्दकरारविन्दविमुक्तनन्दनवनभवमन्दारसुमसन्दोहस्यन्दमानमरन्दागतेन्दिन्दिरबृन्दसन्दानितमुदिरसन्देहो गन्धर्वगानपुरन्दरवारसुन्दरीनृत्यबन्धुरो देदीप्यमानारविन्दबन्धुर्मन्दमन्दस्पन्दमानचन्दनाद्रिगन्धवहोऽमन्दानन्दकन्दलितकुसुमकन्दुककुर्दनस्यन्दमानघर्मजलबिन्दुसुन्दरमुखारविन्दपुलिन्दसुन्दरीसन्दोहस्स वासरो रराज। तदानीं दवदहनपरिप्लुष्टारिष्टतरुकिसलयकुटिलतरधूमगन्धेन द्विजवर्गक्रियमाणश्रुतिमधुरनादेन दवदह्यमानसर्पनिर्मोकधूपेन कन्दरद्वारशिखरनतविटपिविटपकोटिरसालपाटलपल्लवपटलतोरणेन च विधिनैव सौधसूतिकागृहरक्षानिर्विशेषो विपिनेऽपि रक्षाविधिः कल्पितः। तव तदा स्निग्धमुग्धाश्च शबरललना एव धात्र्यः। व्रततिततिनिबद्धांचलेन चेलेन डोलाकर्म। तारतारकोमलकोकिलालापा एव निद्रानिदानगानविशेषाः। तत्रतत्र पर्यटंतः खद्योता एव मंगलमणिदीपाश्चाभवन्। क्रमशश्च निजतनुतनुकान्त्यपहसितनवरसालकिसालयलावण्यः कोकनदकोशसंकाशदृढमुष्टिबंधमुकुलित स्पृहणीयपाणिपल्लवः कुटिलीकृतभ्रूयुगलमनिमित्तारब्धरोदनो विलुलितवलिललितमृदुलतरतनुरसकृदधोमुखं निपतन्सादरं शबरनितंबिनीभिरुत्तानितस्सरभसमुद्धूयमानकरचरणसरसिजः करतलतालशब्देन समाश्वासितश्च रविरिवादशनवदनस्सृकभागान्निस्सरंतं लालाजलबिंदुसंदोहं मुक्ताफलच्छविमपि पद्मरागमणिमिवारुणाधरप्रभया विरचयन्जहसिथ।

एवं वसन्त इव पल्लवारुणः परिस्पन्दमानभ्रमरकावलिमंजुलकमलमुखः कुसुमलोभनीयकान्तिर्निजसौन्दर्यापहृतवनवासिनीहृदयश्च प्रतिदिनमपि पुलिंदनितंबिनीजनाभिलालितोऽभवः। तदनु जानुकरकमलसाह्येन क्रमेणोपक्रांतचंक्रमणस्तत्रतत्र परिपतन्पुलिन्दसुन्दरीभिस्समुद्धृतश्च समा-

श्लिष्टश्च समुत्क्षिप्तश्च प्रार्थितःप्रचुंबितश्च सादरं शिरसि समाघ्रातश्च सकौतुकं बाहुलतायां शायितश्च सप्रमोदं सदंतपीडं निजशिरसि समारोपितश्च पीनपयोधरतटे नर्तितश्च संप्लुष्टया मधुरया गिरा मामंबेत्याह्वयन्नस्माक-मुत्सवमयमिव दिवसमखिलमपि हर्षमयमकार्षीः ।

ततश्च शाद्वलतले क्रमेण पर्यटन्कृकलासकुलमनुकुर्वन्निव वल्गितोत्तमांगो निजबाल्यानुगुणं ससंभ्रमं परिभ्रमन्नात्युन्नतं शिलाशिखरं समवलंब्य बला-दुत्थाय च संध्यातपारुणिते गगनतले विलसंत्यश्चिचतस्रस्तारा इवात्यरुणे वदनतले निर्निमित्तहासावसरे प्रकटयन्रदनकलिकाः समुन्नमितमुखपुंडरीको वल्गितवलिविलुलितमांसलोरुदण्डो मंदमंदं नृत्यंस्तासां शवरवनितानां दृढमवलंब्यांगुलिपल्लवं पाणिना व्यत्ययविनिहितचरणकिसलयस्तत्रतत्र समुड्डीयमानानां विचित्रपत्ररथव्रातानां कलकलरसितं श्रावंश्रावं चित्र-पतंगव्रातं दर्शंदर्शं च हासविकसितवदनकमलस्त्वन्मुखारविन्दसौंदर्या-पहृतहृदयाभिस्ताभिरेव पुलिन्दसुन्दरीभिश्चारुवक्त्रनाम्ना समाहूतश्च प्रासाद इव कान्तारे सुसुखमवर्धथाः ।

तदनु चरणाभ्यामेव कृतचंक्रमणः काननकटुकुटिलवर्त्मना संचर-माणः कुंजपुंजोदरेषु शयानैश्शार्दूलकेसरिकिशोरकैस्सह कृतक्रीडस्तत्कर-खरतराग्रस्पर्शक्षतक्षरत्क्षतजधारारुणितं शरीरं स्वयमेव दर्शंदर्शं रुधिरारुण-वर्णवर्णनोदीर्णदीनपरिदेवनो वनोद्देशादासाद्य सद्यस्सकाशमस्माकं प्रदर्श-यन्विशीर्णनिजांगमादरार्पितेन स्वादुना फलेन समाश्वासितो हर्षप्रकर्ष-संफुल्लमुखपुंडरीको हृदयमस्माकं स्नैग्ध्यदिग्धमिव व्यधाः ।

एवं बहुविधां स्पृहणीयां तावकीं बाल्यलीलामनवलोक्यैवोपरतं तव पितरं स्मारंस्मारं महाटवीपर्यटनेन निष्ठुरं कष्टमनुभवंतं भवंतं दर्शंदर्शं च दीनदीना दुःखितास्मीत्यकथयत् । निशम्य च परुषतरमेनमुदंतं स चारुवक्त्रो मुहूर्तमिव शोकातिरेकेतिकर्तव्यतामूढतया स्तंभीभूतगात्रो

निष्पंदनयनारविंदनिर्गलनिर्गलदश्रुजलधारासारपरिबाधमानाधरकिसलयः किसलय इवामर्षेणारुणमूर्तिः कंपमानश्च गंभीरप्रकृतिरपि प्रकटितदीनभावो मनसि विचार्य दीर्घमुष्णं च निश्वस्य प्रणिपत्य च जनन्यै बद्धांजलिपुटो दुःखभरनिरुध्यमानाक्षरस्सविनयमंब ! क्रियतामाशीः। भयानकं विरचय्य तपः करुणापूर्णस्य भगवतो नारायणस्य प्रसादेन विजितनिखिलनृपालो निर्जित्य च तं नृशंसं वृषस्कंधं पातयिष्यामि भवच्चरणकमलयोः। करिष्यामि च भवतीं वीरमातरम्। बहुधा जल्पितेन किमिति प्रतिजज्ञे।

सा तु तदा वरमालिनी दुःखभरदम्यमानकंठा सगद्गदं पयोधर-तटपरिपतनत्रुटिताश्रुशीकरनिकरपरिषिक्तांशुका वत्स ! जैवातृक ! यत्कृते सोढोऽयं पतिविरहः समनुभूतश्च वनवासक्लेशः रक्षिताश्चेमे प्राणाः कृताश्च शबरावला बांधवाः समाश्रितश्च तापसीभावः तृणीकृता शरीरपीडा समव-लंबितं दौर्गत्यं उररीकृतं च वैरूप्यं असह्यमप्युद्व्यूढं वैधव्यं विरुद्धमपि तावदंगीकृतं शरीरपोषणं आभिजात्याननुगुणाप्यनवरतं संतापजनन्यपि स्थितिरनुमता च मया निर्भाग्यया। वत्स ! चारुवक्त्र ! तव मनोहरं मुखकमलमवलोकयन्ती विस्मृत्य चोपरतदयितशोकं कथंकथमपि कालमति-वाहयामि।

प्रयाते च त्वयि तपसे न जाने कथमतिवाह्योऽयं महान्कालः ; कः पुनरालपनीयः कथं मनो विनोदयितव्यं यद्यपि हृद्योऽयमुद्यमस्ते; क्षत्रवतंसेन भवता कर्तव्यमेव विपक्षमूलोत्पाटनं प्रकाशयितव्यं शौर्यं समार्जनीया कीर्तिः अनुवर्तनीया कुलमर्यादा प्रकटनीयो वंशमहिमा संपादनीयं प्राज्यं राज्यं आवर्जनीया राज्यलक्ष्मीः अवर्जनीयं प्रजापरिपोषणं लालनीय-माश्रितबंधुबृन्दहृदयसन्तोषणं अनुरंजनीयो लोकः समुत्पाटनीयो मच्छोकः क्षिप्रमेव दानवारिप्रसादेन समुत्सारयतु चामरस्तव शरीरोपरि परिपतितमिदं रजःपटलं; निवारयतु श्वेतातपत्रं चित्रभानुकर्कशमयूखातपसन्तापं; प्रशमयतु शतांगः कठोरकान्तारकापथसञ्चारखेदं; अरुणयतु सामंतनरपतिकिरीटकोटि-

घटितपद्मरागराजिमयूखः विपिनसरणिधूलिधूसरितांश्चरणनखरान्नवजीमूतव्रातसच्छायगजघटापुष्करप्रसृमरमदसलिलशीकरतारकिते निशिततरशिलीमुखनिकरकंटकिते करवाललताजालजटिले प्रथननिशीथिनीसमये भवंतमभिसरतु राजलक्ष्मीः; निरीक्षंतां भवत्कटाक्षं विपक्षपक्ष्या अपि क्षितीशाः; समुन्नमय धर्मेण समं विजयवैजयन्तीं; अवनमयाधर्मेण समं समुद्धतक्षितिपतिततिमूर्धानं ; धवलय भुवनमंडलं यशसा ; अपनय मर्यादारक्षणेन वर्णसांकर्यं इत्यभिधाय दृढतरमाश्लिष्य शिरस्याघ्राय च तं चारुवक्त्रं तपश्चरणायानुमेने ।

लब्धानुमतिश्च बालोऽपि ध्रुव इव निर्भीको निर्गत्य च निपतन्निर्झरझरीपरीतोभयपार्श्वतया पार्श्वयुगलडोलायितविशददुकूलालंकृतमिव गैरिकादिधातुरंजिततया नवहरिचंदनचर्चितमिव प्रसूनप्रचुरप्रताननीजालावलीढस्कंधतया कुसुममालामंडलमंडितमिव हरितदूर्वानिवहविच्छुरिताधःप्रदेशतया परिधृतहरितकौशेयमिवेद्दशेन वेषेण प्रकटयन्तमिव महीभृत्त्वं बृंदारकसेनाबृंदमिव पुरस्कृतगुहं रणांकणमिव प्रसृमरसिंहनादं नारायणमिव वनमालालंकृतं चंद्रमिव शशधरं वारसुंदरीविग्रहमिव भुजंगालिंगितं जलनिधिमिव निपतद्धुनीध्वनितं विशालपादमपि विगतसंचारं अत्युन्नतशृंगमप्यवृषभं नात्युन्नतं शिखरिणं समधिरुह्य तत्र च निश्चलविग्रहस्समधिगतेंद्रियनिग्रहः घोरतरं तपश्चचार ।

सुचिरं तपश्चरतश्चास्य तपोवेगेन परिक्षुभिते भुवनत्रये निजपदभ्रंशभिया संत्रस्तस्सुत्रामा गीर्वाणगणपरिवृतो निर्गत्य च निरंतरामेयानिर्वचनीयसुखाकरान्निजनगरात्प्रस्थितश्च अपरिहार्यनीहारराशिनिरुद्धजनसंचारं मदकलकुररकुलचर्व्यमाणमरिचिपल्लवं प्रसृमरगंधबंधुरं जाड्यपरिजिहीर्षया समुन्नतशिखरशिलापरंपरासु निषण्णैरासेव्यमानसूर्यातपैः किन्नरमिथुनैरुपशोभमानं तत्रतत्र धवलमृदुललोमकवचितपृथुलतनुमूषिकाविशेषक्रियमाणसुषिरपरंपराकरंबितं तत्रतत्र सुगंधबंधुरविततदलदूर्वाविशेषकृतघ्राणतर्पणं

कुत्रचित्तुलसीकाननपरिमलाकृष्यमाणजनताघ्राणं कुत्रचिद्विविधविचित्रवर्ण-प्रसूनप्रकरविडंबितनवरत्नकुट्टिमं कुत्रचित्क्षुद्रशिलोच्चयनिशितशिखरनिकर-विशीर्यमाणदिनकरकिरणद्रवीकृतघनतरप्रालेयप्रवाहरयसमुत्कीर्यमाणशीकर-संक्रांतत्रयीतनुमयूखतया नवरत्नमालालंकृतमिव कुत्रचित्सुरधुनीपरी-वाहकलकलनादश्रवणोत्कंठनीलकंठस्तोकाकुंचितकंठं समुपचीयमानहिमा-नीपिहितगिरिकंदरतया ससंभ्रममन्विष्यमाणनिजकंदरं परिभ्रमद्भिर्वन-मानुषैः विशदतुहिनसावर्ण्याद्रसितानुमेयहंसकुलं कुत्रचिन्मिहिकानिवहा-वगुंठितसमुन्नतशिखरिनिपतितसूर्यातपतया कनकफलकनिचोलितमिव कुत्र-चित्तुहिनकरंबितनिपतन्निर्झरझरीनिपतितरविकिरणतया रजतद्रवधुनीशंका-मुपजनयंतं कुत्रचिद्विचित्रवर्णशबलितपृथुलमंडूकप्लुतिमुद्रितचरणरेखास्थपु-टितकर्दमदेशं कुत्रचिदेलालवंगलवलीपिप्पलिकाप्रायतरुलतासंकटं कुत्रचित् परिणतपतितविततपत्रपटलमर्मररवमुखरिते भूर्जतरुतले शयानैः कोरकित-लोचनैः समारब्धरोमंथैः वातायुव्रातैरभिरामं कुत्रचित्पर्यटद्भिर्वालकलापो-त्सार्यमाणनीहारैश्चमरीमृगैरतिरमणीयं कुत्रचिन्मृगयुगणपरिधाव्यमानपरि-श्रान्तकस्तूरिकामृगनाभितलप्रसृमरगंधसुरभितं कुत्रचिद्भयंकराकारशाखा-मृगगणपरिचाल्यमानसमुन्नतदेवदारुतरुदीर्घतरपृथुलशाखाशिखरसमुत्सा-र्यमाणतुषारसंततिं कुत्रचिदुच्छ्रितशिखरादसकृत्सनिर्घोषं परिपतद्भिर्गंडशैल-निकरैरतिभयानकं कुत्रचित्कुसुमापचयोत्सुकानां कुसुमशंकया लताशिखर-लग्नेषु तुहिनपुंजेषु विनिहितकरपल्लवानां वनदेवतानां हासरवमनोहरं कुत्र-चित्तापसपर्णकुटीरवाटीदर्शनीयं कुत्रचिद्धवलभल्लूकपरंपरांबूकृतलालाबुद्बुद-जालजनिततुहिनसंततिशंकं तत्रतत्र कैश्चिदुन्नमितबाहुभिः दक्षिणोरुतल-विनिहितवामचरणैरविरलचीरांबरधारिभिः अवनिविनिहितप्रपदैः कैश्चि-दाबद्धपद्मासनैः लंबमानपाटलजटैः निभृतोन्नमितपूर्वकायैः बद्धांजलिपुटैः निमीलितलोचनैः कैश्चित्कौपीनमात्रवसनैः पवनाहारतया कृशांगकैः उन्नमितोरस्स्थलास्थिपंजरैरधोमुखं तपश्चरद्भिश्च तापसजनैस्संसेव्यमानं

कुत्रचित्तिर्यक्चर्चितभस्मत्रिपुंड्रधवलितललाटैर्लोचनोपांतपरिलिप्तसितभसितैः भस्मोद्धूलितशरीरैरजिनकृतकौपीनैः परिलंबमानदीर्घकूर्चैश्चक्राकारनिबद्ध-पाटलतरजटाजटिलोत्तमांगैः रुद्राक्षवलयाश्लिष्टकंधरैर्योगदंडशिखरविनि-हितबाहुमूलैश्शिवशिव ! हरहर ! शंकर शंकरेत्युच्चैः कूजद्भिः लब्धरुद्रता-द्रूप्यैः शैवैर्दंतुरप्रांतं, कुत्रचित्प्रालेयबिंदुसंदोहदुर्दिनतया विटपिपटलांध-कारिततया च स्खलंत्या क्वचिदुन्नतशिलातलात्पतंत्या क्वचित्कंटकित-लताजालोपरिसंचारेण शतधा विशीर्णया अर्णवाभ्यर्णजिगमिषयाभिसारिक-येव क्वचिच्छिलारंध्रसरण्या निस्सरंत्या जह्नुर्निजश्रवणसरण्या मामेवं व्यसृ-जदिति प्रदर्शयंत्येव क्वचिद्भगीरथप्रार्थनया नाकलोकादवतरंती मां परपुरुषः पस्पर्शेति शंकरश्शिरोरुहेणाबद्धवानिति च लज्जया रुषा च व्यथया च भृगुपतनमाचरंत्येव क्वचिदुन्नतशिलोपरिसमुत्पतंत्या समधिरुह्य चोच्छ्रितं शिलोच्चयं पश्यंत्येव निजवल्लभं उदन्वन्तं क्वचिन्महागर्ते निस्त-रलतया विचिंत्य दयितं संकल्पयंत्येव क्वचिदतिघोषतया प्रलपंत्येव क्वचिदनवरतसंचारेण दूरीकृतनिद्रयेव क्वचिदासूक्ष्मतरप्रवाहतया लब्ध-कार्श्ययेव क्वचिन्मंदगमनतया जगदखिलमपि तृणाय मन्यमानयेव क्वचिद्धावंत्या निर्लज्जयेव क्वचित्खरतरदिनकरकिरणनिकरपरितप्ततया संजातस्मरज्वरयेव क्वचित्स्थपुटिततलसंचारेण प्रनृत्यंत्येवोन्मत्तया क्वचि-त्क्षितितले परिलुठंत्या समुद्गिरद्धवलफेनया विवल्यमानशैवालकचकला-पया समुद्धूयमानदीर्घतरतरंगभुजलतया तारतारमाक्रोशंत्या मूर्छितयेव सतत-मप्यनुभवंत्येव मदनावस्थां योगिमनोवृत्त्येव निर्मलया श्रितजनसता-पापहारिण्या राज्यश्रियेव राजहंससंसेव्यमानया पद्मिन्येव रविकिरण-संवर्ध्यमानया अपहृतत्रिविक्रमचरणारविन्दनखरनिकरप्रभयेव धवलप्रभया सिद्धचारणसुंदरीपयोधरतटपटीरपरिमलवाहिन्या सुरवाहिन्या समावेष्टितं, सिद्धचारणप्रभृतिभिर्देवगणैरुपशोभितं, तत्रतत्र गुहासु सुप्तोत्थितैः कोर-कितपिंगललोचनैः करतलमुदरदेशं च शोणतरजिह्वापल्लवाग्रेण शश्वदालिह्य

कृतांगभंगतया दीर्घतरविग्रहैः जृंभावसरप्रकाशितनिशितनिशाकरकला-कुटिलधवलदंष्ट्रैरुपक्रांतमंदचंक्रमणैरसकृद्विवलितकंधरैराकेकरया दृशा दिश-मभितो दर्शंदर्शं पर्यटद्भिस्तारविरावमुखरितहरिदंतरालैः केसरिभिरति-भयानकं, कुमारशरविदारितक्रौंचगिरिविवरसरणिविनिर्गतैश्चंचुपुटलंबमान-मानससरोवरसंजातजातरूपतामरसविसैरुद्धूयमानधवलपक्षपुटतरंगपरंपरैर्ड-यमानैर्गगनतलेऽपि स्वच्छतरसलिलपूरितस्य पद्माकरस्य संदेहमुपजनयद्भिर्म-रालमंडलैः परिमंडितं, पूर्वापरपारावारयोः कुशलानुयोगं एकदेव कुर्वंतं देवतास्वरूपं भिषजमिव दिव्यौषधिसनाथं हरमिव गंगाधरं पार्थसुतमिव परिगृहीतोत्तरं महान्तं हिमवन्तं ददर्श ।

दृष्ट्वा च तयैव सरण्या प्रस्थितो विलापितरजतद्रवसौभाग्यहरावदा-तोदकं पर्यन्तप्ररूढसुवर्णसहस्रपत्रतया कनकसमुत्कीर्णपत्रभंगतरंगचित्रित-प्रांतं विमलतरं तुहिनमहीभृदवलोकनायोत्तानशायितं मुकुरमिव हरिततर-विततनलिनीदलमध्यपतितधौतसलिलबिंदुनिकरतयामरकतफलकान्तरप्रत्युप्त मुक्ताप्रकरनिबद्धभूमिभ्रममुपजनयंतं निरंतरचामीकरमहीरुहनिकरोदरप्रसृमर-दिवाकरकिरणगणपिंगलितकांतारप्रांतांतरं हंसचंचुपुटचालितचामीकरसर-सीरुहनिवहविनिर्गतपरागपिंजरितावकाशतयानवरतमपि तपनबालातपपरी-तमिव कनकवालुकातलनिषण्णमरालपोतपंक्तिकिंकिणीक्वणितस्पृहणीय-रणितरमणीयतटदेशं उषःकालावतीर्णसप्तर्षिमंडलस्नानपवित्रिततीर्थोदकं जलकेल्युत्सुकविबुधनितंबिनी शिथिलितधम्मिल्लविगलितपरिजातकुसुमवास-नावासिततटसलिलं सलिलप्लवमानमंदारप्रसूनासवास्वादकांक्षापरिपतदिंद्र-नीलकांतिकांतचंचरीकचयझंकारसुभगं भंगुरतरंगपरंपराप्लवमानकलहंस-लंबितारुणचरणदीर्घतरप्रतिबिंबसंदानितविद्रुमलतासंदेहं शैत्यसौरभ्यादि-गुणापहृतसकलहृदयेन सततपरिभ्रमणखेदपरिजिहीर्षयेव मिमंक्षुणा पद्मिनी-वल्लभेन प्रतिबिंबच्छलात्कृतावगाहमिव निरंतरमभ्यंतरसंचरत्कांचनमय-पीनमीनसमुदयसमुपजनितसौदामिनीविभ्रममद्भुततरसन्निवेशसौन्दर्यप्रलोभि-

तजनमानसं मानसं नाम सरोवरमतिक्रम्य,

वप्रक्रीडैकतानैकदंतसंघर्षणजनितसानुगर्ततलद्विगुणितधवलिमसंक्रांतार्यमसरीचिभासुरमभ्रंकषतेजोमयशिखरसहस्रापहसितसवितृकिरणसंपर्कभासुर शरदंबुदबृंदविलासं कैलासं समासाद्य, विनायकवाहनाखुनिखातमहाबिलद्वारतलकनकवालुकाराशिमासाद्य च तत्र मणिमयदिव्यपीठसमास्तीर्णशार्दूलचर्मसमलंकृतमिन्द्रायुधपरिगतशरत्कालांबरतल इव रजतगिरिशिखरे निषण्णमूर्ध्वमुखाबद्धपाटलजटापटलजठरविद्योतमानशशांककलालंकृतोत्तमांगमिंदुकलाकलित संध्यातपशोणितान्तरिक्षप्रदेशमिव शिरःप्रासादारोहणाय कलानिधिकलाविलासिन्याः परिकल्पितस्फटिकशिलासोपानैरिव तिर्यक्चर्चितत्रिपुंड्रकैरलंकृतललाटं देदीप्यमाननयनभासुरालिकमध्यदेशं विराजमानमार्तंडमंडलसमुज्ज्वलन्नभस्स्थलमध्यं शारदं दिवसमिव प्रभुर्मम सप्रतीकः कृपया करणीयः इत्यभ्यर्थनाय नमस्कुर्वत्या द्वैधीभूय तृतीयलोचनाय स्मरचापलतयेव भ्रूलतया विराजमानमुन्नसं आकर्णविश्रांतनयननलिनं विशालश्रवणजाहं लंबमानाहिरत्नकलापप्रतिबिंबितबन्धुराभ्यां चुंबनावसरसंक्रान्तगिरिजाधरपल्लवतांबूलरागद्युतिभ्यामिव धवलतरकपोलफलकाभ्यामुपशोभमानमीषद्विरचितमंदहासतया प्रतिबिंबितधवलदंतपंक्ति तुषारबिंदुदंतुरं प्रवालमिवाधरपल्लवमुद्वहंतं मरकतमणिभरितधवलकाचचषकेणेव गरलसंभृततया मेचकेन कंठेन प्रकटितजगदवनधुरंधरभावं भुजांतरमंतरेण धृतगजाजिनतया तत्प्रतिबिंबविच्छुरितार्धभागया पांडरकरोटिमालया परिष्कृतं कैशोरकेलिलोलुपस्य बाल्यानुगुणमुपरिनिपतितस्यैकदंतस्य दंतांकुरकोटिसंघर्षणपरिस्फुरद्व्रणकिणस्थपुटितमतिविशंकटं विशदतरं वक्षस्स्थलं प्रतितरंगप्रतिबिंबितार्धग्रस्तशशधरमालमच्छसलिलपूरितं सर इवोद्वहंतं विषधरावेष्टिततया चंदनविटपान्विडंबयद्भिर्धृतशंखचक्रवलयतया नारायणकरकमलमनुकुर्वद्भिर्दंडधरस्यापि दंडायमानैर्भवानीकंधरायां धवलप्रसूनमालायमानैः पृथुलवर्तुलैश्च चतुर्भिर्भुजदंडैर्विराजमानं शार्दूलाजिनपरिधानं पुरो-

विनिहिते वर्तुले प्रसृमरनखरकिरणारुणितप्रांते स्फटिकशिलाफलके पांडररुचियाचनाय चरणपरिचर्यामाचरति चन्द्रमंडल इव विनिहितचरणसरसिजयुगलं निजवल्लभविडंबनायेव मेचककचकलापकैतवेन शिरसा यमुनासलिलमुद्वहंत्या कालिंदीतरंगपरंपराजठरतलतरलेन मृणालेनेव सीमंतेन विलसंत्या पुंडरीकभ्रमेण वदनोपांतमुपागतैः भ्रमरकैरिव भ्रमरकैरुपशोभमानया मृगमदतिलकरेखापरिष्कृतविशाललाटफलकया मेचकलोचनपरिवेषाभ्यामिव श्यामलभ्रूलताभ्यां विराजमानया तरलतरकुवलयरुचिरमेचकलोचनाभ्यां कटाक्षयंत्या चंपककोरकसंकाशनासिकया सुरतावसरमुखकमलसौभाग्यावलोकनाय मन्मथपरिकल्पितहीरमुकुराभ्यामिव दंतच्छेदगौरमसृणलावण्यपूर्णाभ्यां कोमलकपोलफलकाभ्यामतिमनोहरया प्रियस्सकलंक इति विहाय विहायसि दोषाकरं वदनचन्द्रमवलंब्योभयतस्सेवामाचरद्भिस्तारानिकरैरिव भासुरहीरमणिगणरंचिताभरणैरलंकृताभ्यां निजवल्लभसमुपदिष्टराममंत्रश्रवणपवित्राभ्यां श्रोत्राभ्यां भासुरया मंदस्मितावसरप्रतिबिंबितावदातदंतकांतिपंक्तिदंतुरितमत्यधिकतयामृतबिंदुसंदोहं बहिस्समुद्गिरंतमिवाधरपल्लवमुद्वहंत्या चर्चितमलयजरससुरभितकंबुकंधरया वलिपरंपराविलुलितसितमृदुलदुकूलावगुंठितेन तरलतराविरलमुक्ताहारमनोहरेण पयोधरयुगलेनोपरिप्रसृमरतरंगपरंपराविलुलितसुरापगास्रोतसा स्वच्छतरबुद्बुदमालाविच्छुरितेन हिमगिरिपरिसरवर्तिना गंडशैलयुगलेनेव प्रकाशमानया शरीररुचिनीरवीचिरेखाभ्यामिव दीर्घाभ्यामैरावतदंतसमुत्कीर्णाभ्यामिव च बाहुलताभ्यामतिमनोहरया परिधृतधवलदुकूलतया रुचिरुचिरहीरमयाभरणजालपरिष्कृततया च कौमुदीविशदेन भासुरतारानिकरविच्छुरितेन शारदेन सुरसरणिचत्वरेणेव शरीरेण विराजमानया प्रणयकलहावसरप्रणिपतितगंगाधरोत्तमांगमंदाकिनीधुनीप्रक्षालिततयेव धवलतरेण मंदगमनाभ्यसनायेव संक्रांतहंसकालंकृतेन चरणसरसिजयुगलेन विलसंत्या गिरिजया परिमंडितवामपार्श्वं, पृथुलकुंभपीठेन मुहुश्चाल्यमानविततश्रवणपुटनिरस्तकरटमदजल-

पानलंपटषट्पदपटलवाटेन कुंतनिभैकदंतेन मोदकभ्रांत्या शशांककलादित्सया शश्वन्नीलकंठमस्तकोपकंठप्रसारितनिजशुंडादंडेन गंडमंडलस्यंदमानदानधाराद्विगुणितसौरभमनोहरमलयजरसावलीढवक्षस्स्थलेन प्रसृमरामोदमोदकखादनामोदितहृदयेनाष्टमीसुधांशुसन्निभमोदकपरिमंडितपाणिपुंडरीकेण पिचंडिलेन सकलशास्त्रपारदृश्वना विघ्नाचलाशनिना गणाधिपेन परिमंडितदक्षिणपार्श्वं समुन्नताभ्यां पृथुलतरमूलाभ्यां कलधौतकलशकलितशिखराभ्यां विषाणाभ्यां रमणीयोत्तमांगेन तुषारगिरिविशालशिलाफलकानुकारि विशदतरमंतरान्तराघटिताष्टमीचन्द्रलेखाभरणपंक्तिभिः कनकशृंखलिकाराजिभिर्मनोहरं ललाटफलकमुद्वहता ललाटफलकेन दर्शनीयेनोन्नमितभ्रूतरंगपरंपराभिर्विराजमानेन मेचकतारकाभ्यामसितपक्ष्मांचलाभ्यां दरकोरकिताभ्यां लोचनाभ्यामुपशोभमानेन श्यामलनासिकातलेन रोमंथासक्ततया लंबमानपांडरफेनपिंडपरिमंडिततुंडप्रान्तेन कलधौतघंटापटलवाचालितश्यामलरज्जुनियोजितपृथुलकिंकिणीमालालंकृतमांसलधवलस्कंधपीठेन लंबमानां वलिविलुलितां सुरापगास्रोतस्तरंगमिव बिडम्बयन्तीं सास्नामुद्वहता रजतगिरिशिखरवरसदृशककुदा विशदपट्टांशुकपिहितपुष्टशरीरेण अतिशक्तितया स्थपुटितोरुद्वयेन मांसलतया च सरीसृपाधिपभोगानुकारिनीलतररोमपुंजमंजुलाग्रायतवालेन निषण्णेन वृषभवरेण विराजमानपुरोभागमीशानापदानगनैकताननंदिनर्तनदर्शनजातमंदहासं तेजोमयरजतांचलप्रतिबिंबिततया द्विगुणितैर्विविधविचित्रभेरीपटहपणवादिवाद्यवादनसमुपजनितघोरताराराव शब्दापितदिगंतरालैर्विचित्रनानाविधवन्यमृगमुखैः अद्भुतभयानकवेषभाषैस्तीक्ष्णतरत्रिशूलपाणिभिः प्रारब्धतांडवाडंबरैर्भस्मोद्धूलितदेहैर्भूतप्रेतगणैस्संसेव्यमानं सुरसरिदुपांतप्ररूढपादपमिव गंगातरंगशीकरसिच्यमानजटं शुक्लपक्षमिव चंद्रिकाधवलं त्रिनेत्रमपि दिगंबरं भूत्यवलिप्तमपि भिक्षाटंतं श्मशानवासनिरतमपि सदासन्निहितसर्वमंगलं सर्वज्ञमपि पशुपतिं जटाजटिलोत्तमांगमपि वृषाकपिं नीलकंठमपि लालितलेलिहानकुलं चंद्रशेखरमपश्यत्।

तदनु नंदिमुखावगतेंद्रागमनश्चंद्रशेखरः किरीटकोटिघटितमणिगण-राजिरंजितहरिदंतरैर्विविधभूषणभूषितवर्ष्मभिरतिक्रांतनयनसरणिभिः दिव्य-रूपैः वृन्दारकबृंदैः पुरस्कृतमवतंसितसंतानसुमसंततिपरिसरसंचरच्चञ्चरीक-चयरसितवाचालितमौलिं दंभोलिग्रहणकंदलितकिणकर्कशपाणितलं तेजः-प्रकाशितत्रिभुवनावनदाक्ष्यं निजरूपप्रकटितद्रष्टृजनवैलक्ष्यं समंदस्मितं सहस्राक्षं मधुरया गिरा कृत्वा च कुशलानुयोगमागमनकारणमपृच्छत्। पृष्टश्च पुरुहूतश्चारुवक्त्रवृत्तमुदीरयामास।

तदनु मृत्युंजयो नवांबुदसंदोहश्यामं पुष्करायताक्षं रथांगशंखा-सिगदादिदिव्यहेतिसमलंकृतचतुर्भुजं कमलाविलासविलसद्वक्षस्स्थलं भक्त-वत्सलं श्रीवत्सलांछनं नारायणमनुस्मरंतं तं चारुवक्त्रं कथमिव तपसा विघटयितुमीशोऽहमीशोऽप्यनीश एव। तदधुना पितामहमुपेत्य तेन सह क्षीरपारावारतीरमाश्रयाम इत्यभिधायावरुह्य च रजतगिरिशिखरादपरमिव-रजतगिरिमुत्थितं वृषभवरमधिरुह्य सुरपतिसहचरः प्रतस्थे।

प्रस्थितश्च समतिक्रान्तभुवस्सुवर्महर्जनस्तपोलोकः तत्रतत्र तत्रत्यैरेतदव-लोकनकुतूहलसंभ्रमसंघीभूतैर्देवविशेषैस्समुपलब्धसपर्यो मर्यादातीतप्रमोदो होमधूमलताकुलितशिखरतयानवरतमपि जटामिवोद्वहद्भिः पृथुलमुक्ताफल-मालातोरणालंकृततया धृतस्फटिकाक्षवलयैरिव श्रुतिप्रतिरवच्छलेनाम्नाय-मिवाभ्यसद्भिः शुभ्रांशुधवलभित्तितया विधृतधौतवसनैरिव तपोधनसमुदय-मिव विडंबयद्भिस्तेजोमयैरनिर्वचनीयभोग्यवस्तुसंभारदर्शनीयैरत्युच्छ्रितैः दर्शनमात्रसमुपजनितप्रसादैः प्रासादैरभिरामं समस्तशास्त्रपारदृश्वभिः पर्यट-द्भिरिव पुण्यप्रकरैः स्त्रीशब्दपराङ्मुखैरपि त्रय्यनुरागिभिः ध्यानाहारैश्च प्रांशुभिस्तेजोमयैर्ब्रह्मनिष्ठैः ब्राह्मणोत्तमैर्विच्छुरितममंदगंधबंधुरस्वादुतरपृथुल-विविधफलभारभुग्नलंबमानविटपिविटपकोटिसंकटैरुत्फुल्लामलकलधौतकमलक ल्हारपुंडरीकादिदिव्यकुसुमषंडपरिमंडितसरस्तीरविराजमानराजहंसराजिराव-रमणीयैः विविधविचित्रपतत्रिकुलसुभगैः तारतरनादसंदानितमधुरगीय-

मानसामगानसंदेहैश्चश्चरीकसंदोहैः परिवार्यमाणदिव्यप्रसूनप्रचुराणां मंदार-तरूणां मूलतलनिबद्धदिव्यरत्नफलकवितर्दिकातलनिषण्णैः प्रणिधानपरा-यणैर्निजतेजःप्रकरतिरस्कृतभास्करतेजःपुंजैस्त्रिविष्टपं तृणाय मन्यमानैर्मान-सास्पृष्टमानैस्तपोधनैः पवित्रितैः कीरकायसच्छायप्ररूढदर्भपत्रव्रातजठरप्रवि-ष्टेनाष्टापदमयाजिनतेजःपुंजतिरस्कृततटित्पटलप्रकाशेन कृतसुकृतैरेव जनैः दृश्येन दिव्यकुरंगनिकुरुंबेण प्रकाशमानैः परस्परक्रियमाणश्रुत्यर्थसंदेहैः अन्योन्यालप्यमानातिथिसत्कारक्रमैः कीरकुलैरतिहृदयंगमैरुपवनैर्दर्शनीयं सरित्पतिमिवान्तर्निहितबाडवं शुक्लपक्षप्रदोषमिव सुधादीधितिधवलितमत्रि-मिवानसूयावर्जितहृदयं हरिश्चन्द्रमिव रोहिताश्वपोषणकृतादरं भारतकथा-जातमिव देवव्रतवृत्तपवित्रितं सत्वगुणदूरीकृतनिंसर्गवैरं विस्मयावहमव-जगाहे सत्यलोकम् ।

यत्र च ब्रह्मनिष्ठाः कोकिलचक्षूरागमपि विनिन्दन्ति । द्विजपक्ष-पातमपि न सहन्ते; लताकौटिल्यमपि नानुमन्यन्ते; धूममालिन्यमपि विगर्हन्ते ; पल्लवचांचल्यमपि धिक्कुर्वन्ति । सलिलभंगमपि नोत्सहन्ते। पादपमूलाधोगतिमप्युद्विजन्ते ; द्विरेफक्रियमाणमधुपानमपि दूषयन्ति । दर्भमुष्टिग्रहणमपि कलहनिदानं जानन्ति। समिन्निमित्तं शस्त्रधारणमपि प्रतिषेधन्ते ।

प्रविश्य च सुधाहृदाभिषिक्त इव प्रसन्नमानसः क्रमेण कनककवाट-घटितवातायनसहस्रसंकुलं सिद्धपुरुषपरिष्क्रियमाणविचित्रतरदर्शनीयसाल-भंजिकाराजिकरतलनिषण्णैर्निगमपारदृश्वभिश्शुकशारिकाप्रभृतिभिश्शकुनि-भिरभिरामं क्षौमसहस्रोपशोभितं अब्जयोनिविमानीभूतराजहंससंततिलीला-शातकुंभमयसोपानालिस्पृहणीयसरोवरशतपरिवृतमस्पृष्टदुरितगंधगंधर्वानुभव योग्यभोग्यतरसौरभ्यभव्यदिव्यभृंगझंकारमुखरितविचित्रसुवर्णप्रसूनमनोहर-महीरुहाभिरामैरारामैर्हरितायमानमानातीतपर्यन्तप्रदेशं कुत्रचित्प्रत्युप्तप्रत्न-

नवरत्नप्रसृमरप्रभामंडलमध्यविस्तृतबर्हकलापशिखावलक्रियमाणोंकाररूपके-कारवेण कुत्रचिदिंदुधवलस्फटिककल्पितक्रीडाशैलशिखरनिषण्णराजहंस-मिथुनततिक्रेंकारमुखरितेन कुत्रचिच्छीतलसलिलशीकरसिच्यमानलतामंडप-कुहरनिलीनशुकशारिकासमारब्धमधुरतरालपेन कुत्रचिद्दन्तसमुत्कीर्णविचित्र पुत्रिकासहस्रसमुपजनित निरन्तर सन्निहित गृह देवता सन्देहेनो पप्रासाद शतेन परिवृतं देदीप्यमानेन गांगेयप्राकारेण चतुर्मुखदिदृक्षया समयमनुपालयता सुमेरुणेव समावेष्टितसीमाभूमिं मेरुमिव कनककलशसहस्रसंकुलं उपरक्त-मार्तंडमंडलमिव केतुपरिवृतं नारायणमिव कमलासनालंकृतनाभिदेशं कमलासनविमलालयमविशत् ।

प्रविश्य च तत्रतत्र गौरवप्रदर्शनार्थं स्फोतांसतलार्पितकरवालैस्त-तइतः पर्यटद्भिश्शरदभ्रशुभ्रकौशेयकंचुकपरिष्कृतैः पृथुलमुक्ताफलमाला-लंकृतकन्धरैर्दीप्रप्रत्नरत्नमकुटोत्तमांगैः केयूरभूषितभुजदंडैर्द्वारपालैर्दत्ताभ्यनु-ज्ञस्समतिक्रान्ताद्भुततरसप्तकक्ष्यान्तरस्समधिगत्य सभाद्वारं कमलासनाय निवेदयितुमन्तः प्रेषयामास द्वारपालम् ।

प्रेषितश्च द्वारपालो दर्शनावसरमनुपालयन्मंदमुपसृत्य प्रणिपत्य च करतलपिहितवदननासातलस्सविनयमवनमितोत्तमांगस्सपरिवारमागतं सस-हस्राक्षं विरूपाक्षं द्वारि स्थितं निवेद्य वेधसे तेन च दत्ताभ्यनुज्ञः पितामहाव-लोकनकुतुकिनं पिनाकिनं नाकिना पाकशासनेनांतः प्रावेशयत् । प्रवेशि-तश्च भूतेशः पुरुहूतसमेतः पितामहदर्शनाय समयमनुपालयद्भिस्सभाप्रती-हाराभ्यन्तराजिरगतैर्विश्रान्ताधिकारैर्जनोलोकादागतैः पुरन्दरैरभिवन्दितः ससंभ्रममुत्थितैष्षड्दर्शनमार्गदर्शिभिः कपिलकणादप्रभृतिभिः कृतांजलि-पुटैर्महर्षिभिरनुगम्यमानो निखिलमुनिगणसंसेव्यमानचरणसरसिजं चतुः-किरीटतरणिस्तोमं विशालोन्नतरमणीयशंखं भ्रूपरंपराकल्लोलाकुलमूर्णावर्तसंकुलं चञ्चललोचनराजीवराजिविराजमानसमुन्नतनासिकाद्वीपं दीप्रतररदनपंक्ति-

मुक्ताफलदंतुरमधरोष्ठविद्रुमलतासनाथं चतुराननमंडलमुदन्वंतमिवोद्वहन्तं आम्नायचतुष्टयावसथैः कंठैरुपशोभमानं निगमशाखानुकारिभिश्चतुर्भिर्भुजदंडैः परिमंडितं स्वच्छतरानतिस्फीतस्फटिकमालिकाकपटेनान्तःपूर्णश्रुतिवर्णश्रेणिमिव बहिःप्रकटयदायतमुरस्थलमुद्वहन्तं चतुराननकमलतया चतुःकरसरोरुहतया च कमलवनमिव प्रदर्शयन्तं विशददुकूलप्रान्तलंबितमुक्ताफलकलापस्य समुत्कीर्णस्वर्णमयचारणपाणिलंबितडोलायमानसौरभसमाकृष्टदिव्यचंचरीकनिकरमधुररवमुखरितदिव्यकुसुममालांचितस्य नात्युन्नतविचित्रमणिमयस्तंभचतुष्टयस्य मंडपस्य मध्ये विलसति प्रत्नरत्नप्रभापिशंगे विमलमृदुलतरदुकूलालंकृते कलधौतकमलविष्टरे निषण्णमुभयपार्श्वोद्धूयमानकाशकुसुमकेसरसंकाशचामरपवनपरिनर्त्यमानतनुतरविमलदुकूलपरिधानं ब्रह्मोद्याः कथाः कथयद्भिस्सनकसनंदनसनत्कुमारैः परिचर्यमाणं भुवनत्रयप्रतीक्ष्यैर्दक्षचाक्षुषमनुप्रभृतिभिः प्रजापतिभिस्संसेव्यमानं निरवद्यविद्याहृद्यैस्सप्तर्षिभिस्समर्प्यमाणया सपर्यया समधिगतमर्यादातीतप्रमोदं कैश्चिदृग्वेदपारायणपरैर्नुतिचतुरैः कैश्चिद्यजूंषि पठद्भिः कैश्चित्प्रशंसापरसामगानैकतानैः कैश्चिद्याक्रियमाणक्रतुक्रियामन्त्रतन्त्रैः कैश्चित्प्रकटीक्रियमाणधनुर्वेदैः कैश्चित्परीक्ष्यमाणजीवातुमूलिकास्तोमैः कैश्चिन्निर्दिश्यमाननवरत्नगुणदोषैः कैश्चिदुपदिश्यमानप्राणिशास्त्रैः कैश्चित्प्रकाश्यमानभूगर्भनिधिदर्शनोपायैः कैश्चिद्विलिख्यमानश्राद्धकल्पैः कैश्चिदुच्यमानग्रहनक्षत्रचारफलैः कैश्चित्प्रदर्श्यमानकठोरविषभेदकार्यतदुपशमनविधानैः कैश्चित्क्रियमाणाथर्वव्याख्यानैः कैश्चिदुच्यमानकामतन्त्रैः कैश्चिज्जगदुपकृतिकलाप्रकटनपरैश्चतुष्षष्टिकलापारगैर्जगदुपकृतिपरायणैः महात्मभिर्महर्षिभिः विच्छुरितप्रांतप्रदेशं, "आस्तांतावत्! त्रिदशालयरसातलवैभवम्। कलिपुरुषसार्वभौमवशीकृतस्य मर्त्यलोकस्य किंचिदिव निवेदयामि वैभवम्। तदवधारयतु भगवान् भवान्। तत्र तावच्चित्रपट इव बहुमन्वते वर्णसांकर्यं ब्राह्मणाः। परित्यक्तक्रतवोऽपि स्थपतयः। गृहिणोऽपि वर्णिनः। अद्वैतवेदान्तार्था इव मिथ्या-

वादिनः। सोमपीथिन इव सोमसेविनः। निजपरिवेत्तृत्वं प्रागल्भ्यनिदानं कथयंति। मनुस्मृतिमरसिकोक्तिं जल्पंति। चार्वाकमतमर्वाचीनानुगुणमिति श्लाघन्ते। परसेवामेव जीविकाहेतुमीहन्ते। सौन्दर्यैकसारान्दारानभिलषन्ति। द्रविणमात्रसाधिकां विद्यामभ्यस्यन्ति; नत्वपवर्गनिदानज्ञानसाधिकाम्। तावदेव पितृगुरुजनविश्वासः; यावन्न गृह्णन्ति करभोरुकरपल्लवम्। तथाहि निजमत्तकाशिनीविभ्रमवशीकृतहृदयास्तदेकतानाः निजनित्यक्रियामिव जननीमपि दूरीकुर्वंति। प्रथमाश्रममिव पितृवचनानुवर्तनमपि परित्यजंति। बाल्यकेलिमिवानुगतां सहोदरावलिमपि परिजहति। आगन्तुकेन तारुण्येनेव भार्याबंधुजनेन समाश्लिष्टा मोदंते। द्रविणाय व्रतिनः। जीविकायै यतिनः। रतिसुखानुभवायैव गृहमेधिनः। परित्यक्तनिजधर्मकर्माणः सर्वधर्मान्परित्यज्येति गीताचार्यवचनमुदाहरन्ति। कृतप्रजावतीपरिग्रहाः द्वैपायनं दृष्टान्तयन्ति। कृतपंक्तिभेदाः विभक्तामृतं नारायणमुदाहरन्ति। मांसाहारपराः पुरातनान्मुनिजनाननुवदंति। गुरुदारसक्ताः द्विजराजं निदर्शयन्ति। प्रयत्नशतालब्धविषयसुखा एव वेदांतिनः। भद्राकरणद्रविणविरहिता एव दीक्षिताः। धृतविहितपुंड्रलांछना एवाचारशीलाः। अविनाशितवृद्धकल्पितधर्मप्रचारा एव धर्मरताः। अनपहृतभगवत्स्वापतेयाः एव वंद्याः। पर्युदंचनवस्तुप्रतिपादनपरा एव वदान्याः। अनुज्झितनिजपितृश्राद्धक्रिया एव कर्मठाः। अभुक्तप्राभातिकाभ्यवहारा एवोपवासिनः। दिवापरिहृतनिधुवना एव जितेन्द्रियाः। दोषाकरा एव दिवोज्ज्वलाः। पद्मिनीवल्लभा अपि नक्तं विलासिनः। सदागतयोऽपि भुजंगस्नेहपराः। तिष्याश्लेषासक्ता अपि पुनर्वसुपराः। हन्त! बहुशो जनाः कश्यपाः प्रजापतयः कुशासनाश्च। ललनास्तु स्रोतस्विनीस्रोतः प्रान्तशिला इव बहिर्मसृणाः। शाल्मलितूलकल्पितशय्या इवोपभोगकालमृदुलाः। धूमलता इव दर्शनपथं मलिनयन्ति। रक्तानपि धवलयन्ति। आचारशीलं बालिश इत्युपहसन्ति। निजविभ्रमचातुर्येण वल्लभमपि

प्रलोभ्य प्रत्यक्ष एव परेण रमन्ते। शुष्के वेणावपि चुंबनेनांगुलिकिसलयास्फालनेन च रागानभिवर्धयन्ति। शुष्कं काष्ठमपि गुणानारोप्य निजांकतले शाययित्वा नखमुखास्फालनेन समुपभोगार्हमाकलयन्ति। आपगा इव नीचगामिन्यः। पतिमपि न दीनमुपयान्ति। विश्वस्ता अपि घ्नन्ति निर्घृणाः भ्रूणं विविक्ते।

भूदेवेष्वेवं स्थितेषु किंपुनः कथनीयमितरवर्णेष्विति" आवेदयतो नारदस्य गिरमवकर्ण्य वाममुखकमलेनैकेन प्रकाश्यमानमंदहासं सावित्र्या च सरागं परिपठ्यमाने वाल्मीकिमुनिपुंगवप्रेषिते श्रीरामायणे पौलस्त्यापहृतजानकीविरहानलसंधुक्षितदुःखविह्वलितचेतसः उन्मत्तवन्मार्तंडचंडातपपरिक्षुभितकांतारकापथपर्यटनपरस्य दाशरथेः प्रलापप्रघट्टकं निशम्य सानुतापमात्मानमेव परमपुरुषतादृशदारुणशोकनिदानमनुसंधाय बाष्पदिग्धमुखपुंडरीकेणैकेन प्रकटीक्रियमाणवैवर्ण्यं कालपुरुषवाच्यमानजीववर्गकर्मानुगुणशरीरवितरणप्रकारश्रवणादपरेण मुखांबुजेन प्रदर्श्यमानानुतापं किंचिदाकुंचितमुखकमलया स्तोकमिव भ्रुकुटितभ्रूलतया वीणासोपानावलिपरिचलत्कोमलांगुलिपल्लवानुगमनैकताननतया तरलतराभ्यां स्पृहणीयाभ्यां नयनकुवलयाभ्यां मनोहरया गायत्रीपाणिपल्लववीज्यमानचामीकरचामरसमीरपरिनर्त्यमानपूर्वकायसिचयतया दृश्यादृश्यजपाकुसुमसवर्णकौशेयकंचुलिकया करकिसलयास्फाल्यमानवीणातन्त्रीगणतया परिस्पंदमानतुंगपयोधरया निजांकतलशायितवीणादंडया सरस्वत्या सुमधुरवाद्यमानानवद्यहृद्यनादं निशम्य दक्षिणेन वदनसरसिजेन समंदस्मितं प्रकाश्यमानश्लाघाप्रमोदं पक्षत्युदरप्रवेशितत्रोटिपुटेन दीर्घैकारुणचरणस्थितेन विमानीभूतेन स्वपता राजहंसेन विद्रुमारुणपादपीठेन कलधौतप्रतिग्राहेणेव विराजमानपुरोभागं पितामहमद्राक्षीत्। दृष्ट्वा च भक्तिभरनम्रोत्तमांगेन निजनामकीर्तनपुरस्सरं पुरंदरेण सह प्रणिपत्य बद्धांजलिपुटस्सविनयमुपससर्प सर्पभूषणः।

एवमुपसर्पंतं कपर्दिनं नारदस्सादरमानीय कुशलानुयोगपुरस्सरं

नातिदूर एव चतुर्मुखपार्श्ववर्तिनि भद्रासने समुपवेश्य च तत्पार्श्ववर्तिनि पीठे पाकशासनमप्येतदागमननिदानं न्यवेदयत्कमलासनाय । स च विरिंचिः समंदमधुरस्मितं स्तनितगभीरयागिरा अपि कुशलं ? किमागमनकारणं ? निवेद्यतामित्यपृच्छत् । परिपृष्टस्स पिनाकी सविनयं विदितमेव खलु भगवतो देवस्य सकलमपि; तथापि किंकराणामस्मादृशामनुगुणमेव हि निवेदनं नाम । तदधुना किंकरता मन्मनः प्रतिबोधयति निवेदयितुम् । भगवन्भुवि चारुवक्त्रतपसा दग्धकल्पमखिलमपि जगत् । अतश्श्रुतिप्रथितनुतिशतैस्समभ्यर्च्य भगवंतं गरुडकेतनं विघटयिष्यामस्तपसस्तं चारुवक्त्रं इति ।

तत्क्षणमेव धात्रा प्रतिबोधितो मरालराजोऽपि मुक्ताफलवलयालंकृतां कंधरामुदस्य सरस्वतीमंजीरमंजुशिंजितस्पृहणीयनादस्समुद्धूयमानधवलपक्षपुटस्सिद्धोऽस्मि गंतुमिति निगदन्निवाराजत । तदनु समधिरुह्य गीर्वाणगणपरिवृतसहस्राक्षविरूपाक्षपरिष्कृतोभयपार्श्वश्चतुराननस्त्वरया निरगात् । निर्गत्य च पुनरपि मां मथितुमागतस्सुरनिकर इति साध्वसादिव कल्लोलकैतवेन सुदूरमपसरंतमिव शश्वल्लोलकल्लोलजालैर्धीरतरं चोदिततयेव सनिर्घोषं सामर्षं च युयुत्सया तीरगतान्सुरनिकरानभियांतमिव परस्परतरंगपरंपरास्फालनपरिस्फुरच्छीकरनिकरासारधूसरितवासरमुत्तुंगशेषफणामंडलायमान - फेनोल्लोचनिचिताभोगं निरंतरप्रसृमरपयःपूरधौतश्लक्ष्णतरतीरसैकतं समुच्छ्रितदीर्घतरोर्मिशिखरविकीर्यमाणपृथुलमुक्ताफलप्रकरं भयानकगाधेतरावर्तगर्तोदरपरिभ्रमद्विचित्रयादोव्रातं लोकमात्रा श्वशुरेति तातेति चाहूयमानं सगरमिव प्रसूतानंतसंतानं कपर्दिनमिव धृतकपर्दं धीवरमिवान्तश्चंचलमत्स्यजालं वर्षर्तुमिव घनतरंगविकीर्यमाणशीकरदुर्दिनीकृतं मूर्छितमिव समुद्गिरद्धवलफेनं प्रासादमिवाभ्यंतरावासितमहीभृत्कुलं विलासिनीहृदयमिव चन्द्रोदयदर्शनानंदतुंदिलं आनकदुंदुभिमिव विधुजनकं शिशुवतीपयोधरमिव क्षीरपूरितं बालकमिव सततचञ्चलं तरुणमिव गभीरतरं

स्थविरमिव वलितरंगाकुलं नारायणमिव धृतावर्तचक्रं सततविद्रुममपि प्रसूतकल्पद्रुमं प्रह्लादजनकमपि नरसिंहोपलालितं कृष्णाक्रांतमपि सुधाधवलं धृतविविधानर्घरत्नराशिमपि दरिद्रमिव बहिःप्रकटितवराटिकाशुक्तिशङ्खमालं नितांतजलजंतुसंतानाकुलितांतःप्रदेशं अपारं क्षीरपारावारमद्राक्षीत् ।

दृष्ट्वा च सरसिजासनो हरिदंतरप्रसृमरकिरीटकोटिघटितपृथुलपद्मरागारुणकिरणद्विगुणितशोणिमभिः पाणिपल्लवैःमूर्तिमद्भिरुन्मस्तकानुरागैरिव कृतांजलिपुटैर्निभृतगात्रयष्टिभिर्भक्तिसमाश्लिष्टांतरंगैर्गीर्वाणसंघैरित्थमस्तावीत् ।

जयजय देव ! संसाररोगापहारातिधीरत्रयीदिव्यजीवातुसंरक्षणायातिकल्लोलमालाकुलीभूतरत्नाकरांतःपरिभ्रांतलक्ष्मीविशालाक्षिसंकाशकांतोच्चकायप्रकाशप्रकाशीकृताशामुखाश्चर्यचर्यानिदानांडजातप्रकांडावतार ! जयजय देव ! भगवन्कूर्मावतारात्युदारायतोच्छूनजीमूतसच्छायबंहिष्ठपृष्ठप्रदेशोढमंथानशैलातिसंभ्रांतिसंभूतपूतप्रभूतामृतादानदत्तावधानाननार्यान्प्रतार्यादितेयाभियातीन्सुधासंविभागेऽतिगांभीर्यसौंदर्यसंपूर्णनिर्णिक्तपूर्णेंदुवक्त्रावतारेण चावर्तगर्तादुपारूढया प्रौढया सारसागारया पद्मया विद्युदुद्योतितांभोदसंकाशबाहांतराल ! जयजय देव ! भगवन्नकूपारभग्नस्थिरामंडलोद्धारकालप्रलोलस्फुरद्दीर्घघोणातिनिर्घोषसंघूर्णिताशेषलोक ! जयजय देव ! भगवन्दैत्येंद्रवक्षोनिखातातितीक्ष्णाग्रधाराकरालात्यरालातिभास्वन्नखाग्रोद्गलद्रक्तधाराच्छटास्वादमोदोद्गमन्नादभीताष्टदिग्दंतिसंदोहसंचालितोद्दंडकुंभाग्रसंस्त्रस्तविश्वंभरामंडल ! क्रूरसिंहावतार ! जयजय देव ! भगवन्खर्वावतारेण गीर्वाणवर्गैशनिघ्न ! प्रणष्टां त्रिलोकीमधीनां विधातुं महाधर्मचित्ताद्बलीड्यात्मवीर्याद्बलीशाद्गृहीत्वा त्रिपादैकमेयस्थलीं पादपद्मत्रयाक्रांतलोकत्रय ! जयजय देव ! भगवन्कठोराग्रधारेण भास्वत्कुठारेण शश्वद्विदार्याप्यमर्यादवीर्यातिदृप्तप्रमत्तक्षमानेतृवर्गोत्तमांगान्यतीव क्रुधानेकधा निस्सरद्रक्तधारापरीवाहवांतारुणिम्नातिभीमेन संवर्तसंजातसंध्यायमानं मुदा कालमालोक्य भीमाट्टहासेन नृत्यप्रवृत्तेन कृत्त्यम्बरेणाशु संश्लाघ्यमानाति-

घोराकृते ! राम ! जयजय देव ! भगवन्दशाशाप्रशांतीकृताशेषराजत्पला-शेशपीडातपोद्दंडकोदंड ! देवेशकांडासनाश्लिष्टसीतातटिद्वल्लिकांतातिनीलाभि-रामोल्लसद्रामजीमूत ! जयजय देव ! भगवन्निजास्येंदुसंदर्शनाधीनगोपां-गनाश्लेषपीनस्तनाभोगजाज्वल्यमानार्द्रमीनांचितोरस्स्थल ! भक्तावनायैव दुग्धाब्धिमध्ये फणींद्रे शयानाय नारायणायास्तु तुभ्यं नमो देवदेव ! प्रदेह्यद्य संदर्शनं ते कृपांभोनिधे ! वेदवेद्यानवद्यांबुदद्योतहृद्यांगकांत ! पद्मालयाकांत ! नमस्ते पुनस्ते नमः ।

इति स्तुत्वा च बहुधा भक्तिसमासक्तस्वांतश्शतानंदः श्रियःपति-सुंदरदिव्यमंगलमूर्तिमनुध्यायन्बद्धांजलिपुटः क्षणमिव स्थाणुवत्तस्थौ ।

तत्क्षणमेव सहस्रकिरणसहस्रतेजःपुंजसंकाशं शून्यीकृतनिखिलदि-क्चक्रवालंविदधदमरान्परस्परस्पर्शानुमेयानुदतिष्ठत्क्षीरपारावारोदरात्किमपि तेजः । उत्थाय च समवगतं भवदागमननिदानं ; गच्छन्तु भवन्तो निवार-याम्यधुनैव वरप्रदानेन तस्य नरपतिसुतस्य तपोवेगमित्यभिधाय क्षणा-देवांतरधात् । अवकर्ण्य च कर्णाभ्यर्णावकीर्णपीयूषशीकरं मधुरतरं गभीरं भगवतो भाषितममंदानंदतुंदिलास्सर्वेऽपि शतानंदप्रमुखाः बृन्दारकाः निजावासमयासिषुः । अथ च पुंडरीकाक्षः पक्षिपतिमधिरुह्य प्रस्थितस्त्वरया समुन्नमितबाहुयुगलं कुशेशयकोशनीकाशबद्धांजलिपुटं तपोनलज्वालाभिरिव पाटलतरजटाभिरतिगहनोत्तमांगं निमीलितनयनयुगलं सर्वदापि परिस्फुर-दधरोष्ठपुटमतिकृशतनुं परिधृतवल्कलं दक्षिणोरुमूलविनिहितवामचरणतलं क्षितितलनिक्षिप्तदक्षिणप्रपदं वैश्वानरमिव समुज्ज्वलन्तं भुजगमिव वाताशनं दिवाकरमिव द्विजव्रजसेव्यमानं पशुपतिमिवाहितततिसमावेष्टितविग्रहं हिम-शैलप्रांतमिव हंसधवलमानसं तं चारुवक्त्रमद्राक्षीत् । दृष्ट्वा चानुकंपया तात ! चारुवक्त्र ! प्रसन्नं पश्य मामेनम् । तन्निवेदय यदभिमतं ते दित्सुरस्मीत्यब्रवीत् ।

श्रुत्वा च घनरवगभीरां मनोहरां गिरं हर्षोत्फुल्लनयनकमलस्सोऽपि

नरपतितनयो विस्मयाश्लिष्टमानसो मकुटमकरकुंडलग्रैवेयककेयूरहारनूपुरादि दिव्यमंडनपरिमंडितसमस्तप्रशस्तदिव्यप्रतीकं सवर्णतया प्रीत्या शिरस्याग्रायांसतलास्फालनमाचरंतीभिरिव कादंबिनीभिर्भुजशिरसि लंबमानाभिः कुटिलतरचिकुरमालाभिरलंकृतोत्तमांगमलिकतलमर्यादातीतसौंदर्यदिदृक्षया वक्षस्स्थलस्थिताया लज्जया स्तोकोन्नमितवदनकमलायाः कमलायाः कटाक्षकांतिलेखयेव दिव्यमृगमदतिलकलेखया समलंकृतमष्टमीशशांकसंकाशं ललाटफलकमुद्वहंतं प्रह्वभावेन सूर्याचन्द्रमसोरपि धुरि निजस्थितिमभिलषंतीभ्यां तनुतराभ्यां तिमिरपंक्तिभ्यामिव नीलाभ्यां भ्रूलताभ्यामुपशोभमानं तिरस्कुर्वद्भ्यां पुंडरीकमीननिवहान्सौंदर्यमिव वमद्भ्यां करुणारसमिव संकिरद्भ्यां क्षीरपारावारे नीलमेघश्यामोऽयमेवमेव पांडरतरकुंडलिपतिभोगमंडलमधिशेत इति धवलतरतारकामध्यविलसत्कृष्णकनीनिकाकैतवेन शेषशायिनमेनमेव प्रदर्शयद्भ्यां दिवाकरनिशाकरात्मकाभ्यां आकर्णविश्रांताभ्यां भक्तजनहृदयहरिणवागुरायमाणाभ्यां नयनपुंडरीकाभ्यां विराजमानं नयनतटाकप्ररूढाधोमुखावनतस्तोकविकसितशिखरनीलोत्पलकुसुमसमसमुन्नतनासिकं मकरकुंडलभारासहिष्णुतयाधःपतनभयादिव समवलंबितस्कंधाभ्यां भक्तजननुतिगानश्रवणकुतुकाभ्यां श्रवणपुटाभ्यां विलसंतं प्रतिबिंबितकर्णावतंसितकनककमलाभ्यां मरकतफलकानुकारिभ्यां कुंडलप्रतिबिंबच्छलेन कांतिसलिले प्लवमानाभ्यामिव मकराभ्यां कोमलाभ्यां कपोलफलकाभ्यां स्पृहणीयदर्शनं कृतमंदहासतया प्रतिबिंबितरुचिररदनराजितया पुरानुभूतं दुग्धपानैकलंपटं कृष्णबाल्यमिव प्रदर्शयन्तमरुणतरमधरपल्लवमुद्वहन्तं दिव्यपरिमलपरिभ्रमद्भ्रमरझंकारमुखरितकांतिकमनीयवनमालालंकृतकम्बुकन्धरं प्रसारितकरेण भगिन्याः कमलायाः कुशलानुयोगं कर्तुमागतेन बालचन्द्रमंडलेनेव कौस्तुभेन कौस्तुभरश्मिनियंत्रिततयेव निश्चलया सुवर्णवर्णया

दारिद्र्यदुस्तरगहनस्य दवज्वलनज्वालायमानया कमलया च समालिंगितवक्षस्स्थलमधिकतरापीतपौंड्रकवासुदेवशिशुपालबाणादिदुर्दमनदुष्टदैत्यकंठबाहुसहस्ररुधिरतया समुज्ज्वलज्ज्वालामिषेण शोणितधारामिव वमता नारायणोपरि अपायसमुदायानिष्पतनायेव जागरेण निरंतरमपि परिभ्रमता सर्वदानुसृतनारायणाशयेन भानुसहस्रभासुरेणातिकृच्छ्रदर्शनेन सुदर्शनेन नारायणाध्मातवातबलपारदृश्वना कररुहकिरणद्विगुणितधवलिम्ना निजांतःप्रवेशितनारायणकरांगुलित्रयरेखाभिरिव त्रिरेखाभिस्समलंकृतेनाकीटजन्येन पांचजन्येनापहृतपूर्वदेवजनितानिमिषभीतिगदया गदयात्यमलेन कमलेन परिमंडितमांसलवर्तुलचतुर्भुजदण्डं संध्यारागरंजितांबरडंबरहरपीतांबरपरिधानं दिव्यनवरत्नखचितकनकमेखलं वेदात्मना स्वर्णवर्णेन सपक्षेणेव कनकगिरिणा मयैवास्य महिमा प्रतिपाद्यते इति प्रदर्शयतेव करकमलाभ्यां हरिचरणसरसिजयुगलमुद्वहता गरुत्मता समूह्यमानं वर्षर्तुसुरपथमिव नीलमेघश्यामलं क्षितितलमिव वनमालालंकृतं वनजाक्षमप्यवनजाक्षं वैनतेयवाहनमपि विनायकवाहनं काकोदरशायिनमपि पवित्रतरं अजमपि प्रकटितविश्वरूपं विधुमपि विधुजनकजामातरं सर्वाभीष्टफलप्रदं भगवन्तं श्रीमन्तं नारायणमपश्यत् ।

दृष्ट्वा चामंदानंदसुधासिंधुपरिप्लावितहृदये तस्मिन्नमस्कुर्वति चारुवक्त्रे करुणापूर्णहृदयो नारायणस्सरभसमुत्थाप्य तं वत्स ! यदभिमतं ते तदधुनैव दित्सुरस्मीत्यब्रवीत् । तदवकर्ण्य कृतांजलिपुटस्स चारुवक्त्रस्सविनयं देवदेव ! सर्वज्ञोऽपि किमप्यजानन्निव परिपृच्छसि मामेवम् ? भवतु नाम; न कदाप्यनुल्लंघनीया खलु भवदाज्ञा ! तद्देहि देव ! विजिगीषवे मह्यमप्रतिहतं प्रहरणमिति प्रार्थयामास । एवं प्रार्थितस्समंदस्मितं मुकुन्दो घंटासहस्ररसितवाचालितदिगंतरमत्युद्दंडं कोदंडं निशिततराप्रतिहतशर-

भरितमुपासंगं च वितीर्योद्दंडदोर्दंडाखंडबलखंडितविपक्षमंडलः चिरं परिपालय विश्वंभरामंडलमिति अभिधायांतरधात् ।

इति श्रीयदुशैलवासि, बालधन्विकुलकलशजलनिधिकलानिधि, विद्याविशारद, संस्कृतसेवासक्त, कविकुलतिलक, राज्यप्रशस्ति, राष्ट्रपतिप्रशस्तिपरिष्कृत, श्रीमहीशूरनाल्वडिकृष्णभूपसुवर्णपदक—साहित्यपरिषद्रजतपदकसमलङ्कृत—जग्गुवकुलभूषणमहाकविविरचितायां, जयन्तिकायां प्रथमलहरी सम्पूर्णा ॥



## ॥ द्वितीयलहरी ॥

तदनु स चारुवक्त्रस्त्वानंदोच्छूनगात्रयष्टिर्दक्षिणपाणिपुंडरीककृतोद्दंडकोदंडो दक्षिणापरांगघटिताक्षयतूणीरस्साक्षाद्दाशरथिरिव प्रस्थितशिखरिशिखरादुपेत्य च गुहामेकाकिन्यै पुत्रविश्लेषविक्लबायै तनयमुखकमलदर्शनोत्कंठितमानसायै निरंतरकांतारसंचारपरिक्लेशितशरीरायै समभिवन्द्य जनन्यै सविनयमंब ! परमकरुणापरिपूर्णस्य पुराणपुरुषस्य भगवतो नारायणस्य प्रसादोऽयमिति प्रदर्श्य तूणीरशरासने विजितनिखिलभूमंडलोऽयमहं यावत्पातयिष्यामि तं नृशंसं वृषस्कन्धहतकं त्वच्चरणसरसिजयोस्तावन्न प्रवेक्ष्यामि नगरं न भोक्ष्ये स्वादुतरोदनं न प्रसाधयिष्यामि जटाजटिलमिदं शीर्षं न त्यक्ष्यामि वल्कलं नाचरिष्यामि स्नानविधिं नाधिरोक्ष्यामि वाहनं न वारयिष्यामि श्वेतातपत्रेण तीक्ष्णतरं सूर्यातपं न धास्यामि शिरस्युष्णीषं न वक्ष्याम्यात्मानमितरेषां न प्रकटयिष्यामि राजभावं न मनसापि चिंतयिष्यामि सुखगंधमपि न गणयिष्यामि शरीरमिदमिति बहुधा विधाय च प्रतिज्ञां देहि मे दिग्विजयायानुमतिमिति प्रार्थयामास।

एवं प्रार्थिता च तेन सा वरमालिनी स्वप्नावस्थामनुभवन्तीव विस्रंभशून्यहृदया दृढतरं परिरभ्य निजभुजलताभ्यां तं चारुवक्त्रं निजांकतलमारोप्य च शिरसि करेण परामृशन्ती हर्षभरगद्गदकंठी, वत्स ! दिष्ट्या वर्धसे। नारायणकरुणापात्रमसि। तादृशस्य ते न किमप्यस्ति वक्तव्यम्। क्व ते बाल्यं ? क्व च तपः ? प्रणिधानपराणामपि तपोधनानां दुर्लभं खलु चित्तस्थैर्यम्। दिष्ट्या योगिजनैकसाध्यं कर्म समाचरितं भवता। महति कर्मणि च प्रतिज्ञातम्। तदधुना वात्सल्यप्रेरितहृदया कथयामि हितम्। तदवधारय। शठप्रायं जगत्। स्वापतेयदासो लोकः। खलबहुला भूतधात्री। कृतघ्नताकलुषितं जनहृदयम्। नैर्घृण्यकठोरः प्रपञ्चः। वंचनैकताना बंधुता। शूरप्रणयिनी लक्ष्मीः। प्रणिधिचक्षुषः क्षितिभृतः। तदस-

कृदावेदयामि । क्षौद्रपटलमिव राज्यं नाम दुर्ग्राहम् । तथाहि—मधुलोलुपा- स्सरघा इव तत्र प्रतिवसंति वित्तैकसक्तचित्ता दुर्जनाः । दुर्गमस्थानस्थापि- तमपि कंटकनिचितमपि तदपहरणाय धीरास्समयमनुपालयंति। वत्स! सर्वेऽपि भूमिपालाः पापिनः तस्य वृषस्कंधहतकस्य वशवर्तिनः; सततमपि तत्प्रिय- प्रतिपादनैकतानाश्च । तदधुना भवता पराक्रमेण विजित्य स्वायत्तीकृताः अपि राजानो गूढं विप्रियकारिणः तदधिगतापरिमितद्रविणाश्च शुका इव मुखमात्रप्रकाशितरागाः छिद्रान्वेषिणः काठिन्यमाश्रयिष्यंति । तत्साहचर्य- कंदलितरागाः प्रजा अपि भवंतमभिनवं नानुवर्तिष्यंते । लुब्धाः मधुरतरेण गानेनेव कुरंगं धनलुब्धा दुर्जना मधुरालापेन वशीकृत्य भवंतं व्यापाद- यिष्यंति । तदायुष्मता भवता तथानुष्ठेयम्; यथा च छिद्रान्वेषिणः प्रयत्न- शतेनापि न लभेरन्नवकाशम्; यथा च तद्वशवर्तिनस्सर्वेऽपि भवदधीनाः भवेयुः; यथा च प्रकृतयः निर्जीवमिव तं पापिनं जह्युः; यथा च बांध- वास्तत्सान्निध्यं श्मशानमिव परिहरेयुः; यथा च तत्पक्ष्याः तदाज्ञां कुणप- कुसुममालामिव त्यजेयुः; यथा च धनलुब्धाः तद्धनं विषमिव पश्येयुः यथा- च तत्प्रणिधयोऽपि भवते प्रीत्यतिशयेन गूढं तदुदन्तं निवेदयेयुः, यथा च शूराः पितृतुल्याः भवंतमभितः सरीसृपा इव निधिं परिरक्षेयुः; यथा च राज्यलक्ष्मीः दिवाकरोदये लब्धविकासं सहस्रपत्रमिव जयोदये भवंतं सादरमाश्रयेत्' याहि जैवातृक! चारुवक्त्र! जय जीवेत्यकथयत् ।

तदवकर्ण्य चारुवक्त्रस्सविनयमंब! नारायणकारुण्यैककवचितस्य मे न कस्मादपि भीतिरित्युत्थाय पुनः प्रणम्य चावतंसितजनन्याशीस्तस्मा- न्निर्गत्य चांगवंगकलिंगकांभोजघूर्जरगांधारकुरुकाश्मीरतुंडीरपांड्यकिरात- कुलूतसौराष्ट्रमहाराष्ट्रमगधलंपाकतुलवचोलवंगालपांचालनेपालमलयालकेरल कोसलकुंतलसिंहलकेकयविदर्भविदेहार्द्रानर्तमद्रद्राविडलाळराढागौडसूरसेन- सिंधुयवनवनायुहूणकोंकणमत्स्यपारशीकार्बकबर्बरचेरचीनमहाचीनकटक- कल्याणकान्यकुब्जकर्णाटादिदेशाननेकान्द्वीपांश्च विजित्य क्वायं मुनिजन-

समुचितवेषः क्व चेदं चक्रवर्तिलक्षणं क्व कंदमूलफलाहारः क्व चेयमप्रतिहता शक्तिः क्व वा बालभावोऽयं क्व पुनः सकलराजलोकवशीकरणं अहो! धीरता बत। निस्स्पृहता हंत! गांभीर्यं बत सौंदर्यमिति परस्परं सविस्मयमनुलपद्भिर्लज्जाभरावनमितोत्तमांगैश्चतुरंगबलपरिगतैर्धरणिपतिभिः अनुगम्यमानो घटितविचित्रोद्दंडकांडवैजयन्तीं वैजयन्तीमाससाद।

आसाद्य चानतिदूरे परिजनविरचितानां प्रसृमरनिजमूर्तिमत्कीर्तिमयानामिवांतर्विधृतविविधरमणीयरत्ननिकरतया महीभृत्कुलाकुलिततया चानेकोर्मिसंकुलं दुग्धाब्धिमिव विडंबयतां पटमंदिराणां मध्ये धवलधाराधरनिकुरुंबपरिगतं रजतगिरिमिव विराजमानमास्वर्गमुन्नमय्य समुद्दंडध्वजदंडभुजदंडं तरलतरपाटलपटपाणिपल्लवेनाद्भुततरायोधनावलोकनाय गीर्वाणगणमिव समाह्वयन्महेश्वरमिव विभूतिविशदं चित्रभानुमिव प्रसृमरानेकरश्मिजालं वैजयन्तीसौंदर्यदिदृक्षया सपरिवारं सन्निहितमिव श्वेतद्वीपं दूष्यमपि महाराजसेव्यमानमत्युन्नतफेनपिंडमयमिव काशकुसुमराशिमयमिव पुंजीभूतकौमुदीमयमिव, सिताभ्रक्षोदमयमिव प्रालेयपुंजमयमिव सुधाधूलिपटलमयमिव धवलतरमतिविशालं समुत्तुंगशिखरं पटमंदिरं प्राविशत्।

तदनु समाविशत्सु स्वस्वपटालयं महीपालेषु सोपरक्षणासु च शिबिरवीथीषु चारुवक्त्रेणाभ्यनुज्ञाता योद्धारो युद्धोद्यता बभूवुः। तदनु प्रथनशंसिभिर्भेरीपटहपणवादिवाद्यध्वानैर्वियदध्वा मुखरितोऽभवत्। श्रुत्वा च तदतिभयानकं बधिरीकृतश्रवणविवरं वादित्ररसितं सिंहनादं च स वृषस्कंधः ससंभ्रममधिरुह्य प्रासादशिखरं परितो दत्तदृष्टिः पूर्वस्यां दिशि नातिदूरे महीपालकैरिव सदा स्रवद्दानधारातरलकटकालिभिः किंराजपरिपालितविश्वंभरामंडलैरिवोद्दंडावग्रहभयंकरैः कुबेरवद्धृतपद्मकैः गगनांकणवद्बलाहकनिवहमलिनैः सुन्दरीमस्तकैरिव प्रवेणिपरिष्कृतैः शिबिरदेशैरिव निबद्धदूष्यैः कुलालभवनैरिव मृत्तिकापुस्तपृथुलकुंभैः वर्षादिवसैरिव

घननिस्सरच्छीकरनिकरकरंबितपुष्करैः पृथुलकरकैश्च साह्यकृते सन्निहितैः कुलाचलैरिव कुंजरसहस्रैस्समावृतं आयोधनसमुचितपर्याणास्तीर्णपृष्ठैः स्तोकमिव अवनमितमुखैः किञ्चिदिवावनमितकश्यैरेकपुरुषप्रमाणैर्विविध-वर्णैरनवरतप्रचाल्यमानवालकलापचामरैः हेषाघोषदूषिताशेषाशादेशैः खर-तरखुरशिखरनिकरत्रुटितधरित्रीतलप्रसृमररजःक्षोदधूसरितवासरैस्सत्कुलीनै -र्वनायुसिंधुपारशीकबाह्लीकादिदेशजातैरपरिमिततुरंगमसहस्रैः दन्तुरितं निजाकारतिरस्कृतयमकिंकराकारैश्शतसहस्रसाहस्रैः परिवृतं उद्दंडकेतुदंड-कोटिप्रचलत्पटपटलैः दृढतरावस्करैः अतिगतगंधवहगरुडवेगघोटकपरिष्कृत-पुरोभागैस्स्यंदनैर्विच्छुरितं धृतदृढतरायोमयवारवाणैः रावणवदधिकांग-भयानकैः गोधातलपरिष्कृतकरैरपरांगनिषंगिनिषंगैः लस्तककृतहस्तैस्स्यं-दनाभ्यंतरनिषण्णैस्संग्रामोत्सुकैः क्षितिपतिसहस्रैर्नीरंध्रितं कैश्चित्सखड्गैः सफलकैः कैश्चित्समुद्गरैः कैश्चित्सकरवालैः कैश्चित्सभिंडिपालैः कैश्चित्स-परिघैः कैश्चित्सकुठारैः कैश्चित्सतोमरैः कैश्चित्सकुंतैरतिभयंकरैः उरसि-लैर्भटैस्समाकुलितं क्रमशस्स्थापयितुमभ्यनुज्ञातानां सेनाधिपतिभिरेकदैव तालानुगमनतया सैनिकानामुपानदभिरक्षितचरणविन्यासजझंररवजर्झरी-कृतोर्वीतलं प्रतिकरवालतलप्रतिबिंबितरविमंडलतया जयलक्ष्मीसमागमना-त्प्रागेव कृतसान्निध्यैर्विकचपुंडरीकैरिव भासुरं विविधवर्णवसननिचिततया पाकशासनचापमयमिव निबिडतरतुरंगमनिकुरुंबतया समास्तीर्णकुथा-लंकृतमिव समुद्धूतवातोद्धूयमानध्वजपटपटलतया वियत्तरंगिणीतरंगसंकुल-मिव शुक्लपक्षयामिनीसमयमिव परिस्फुरच्चंद्रहासं ललनावलग्नमिव मेखला-परिष्कृतं वनस्पतिनिकुरुंबमिव फलदंतुरं वर्षर्तुगगनतलमिव घननिबिडितं महावनमिव प्रचलत्खड्गं महानगरमिव परिघाक्रांतं सुकविकाव्यमिव प्राससम्पूर्णं महासर इव परिभ्रमच्चक्रं भूमंडलमिव वाहिनीपतिपरिवृतं सत्यलोकमिव बाडबबंधुरं ग्रहमंडलमिव केतुमंडितमतिक्रांतनयनपातं सैन्यमपश्यत् ।

दृष्ट्वा च मनस्येवमचिंतयत् । किमिदमदृष्टपूर्वम् ! नहि जगति कोऽपि प्रतिभटो मे; कथमिदमाविर्भूतं कुत्र वा संचितमियत् ? केन वा प्रोत्साह्य प्रेषितम् ? कथमियतस्संघीभूतस्य भूतगणस्य भारमुद्वहति विश्वंभरा ? महदिदमाश्चर्यम् ! यदतर्कितोपनतं शलभबृन्दमिव सैन्यमिदम् । अस्मद्विभीषिकया विधिना परिकल्पितं किमिदमिंद्रजालम् ? आहोस्वित्स्वाप्निकप्रपञ्चः ? कथमवधारयेयं कस्मै कथयेयम् । कथं वा कालयेयमेतदिति सुचिरं विचिंत्य समुद्विग्नहृदयस्ससंभ्रमं विलोक्य पार्श्ववर्तिनं हेमांगदनामानं कंचुकिनं मद्वचनादाहूयतां मलयवातनामा सेनापतिरित्यादिदेश ।

आज्ञप्तश्च हेमांगदो द्रुततरं प्रस्थाय तं मलयवातमानिनाय वृषस्कंधसकाशम् । ततश्च तस्मिन्मलयवाते प्रणिपत्य सविनयं समाज्ञापयतु देव इति निवेद्य नातिदूरवर्तिनि स वृषस्कंधस्सेनापते ! अपि नाम दृष्टं बलमिदं भवता ; पश्य तावत्परबलमाश्रित्य मदधीनास्सर्वेऽपि प्रतिकूलतां प्रकाशयन्ति । इतः पश्य यश्च सौधद्वारि मद्दर्शनावसरमनुपालयन्मदाज्ञामेव कुसुममालामिव समूह्य शिरसा प्रागपश्यन्मां स कुलूताधिपस्सखड्गस्तुरगाधिरूढस्ततइतः पर्यटति । यश्च प्रसृमरपरिमलपरिकल्पितघ्राणतर्पणमपहसितसंध्यारागरामणीयकं कुंकुमकेसरसंभारं दूर्वासंभारमिव विनयावनतमौलिरुपायनीकृतवान्सोऽपि काश्मीरधराधिपस्सेनां क्रमशस्स्थापयति । इतः पश्य ; यश्च सत्कुलीनं मणिवरविभूषितसर्वांगं तुरंगमनिकुरुंबं उपग्राह्यमकल्पयत् ; सोऽपि सिंधुपतिर्मगधाधिपतिं प्रति किमपि सल्लपन्विहसति । यश्च रसितानुमेयगंधलुब्धचञ्चरीकसञ्चयं शातकुंभकुंभसंभृतमानीय घनतरमृगमदमर्पयांबभूव सोऽपि नेपालभूपालः कोसलेशशतांगाधिरोहिणीफलकतलविनिहितवामचरणो धरातलविन्यस्तदक्षिणांघ्रिश्चावस्करन्यस्तहस्तयुगलस्तत्कर्णे किमपि जल्पति ! यश्च प्रह्वभावेन धवलातपत्रतपनीयदंडं जग्राह करयुगलेन स मलयालनृपालस्तूद्दंडकोदंडदंडं दधाति । यौ तु पार्श्वयोरकुरुतां करे चामरं तौ च कुरुकेरलभूपालौ कुरुतः कुसुमस्तोमरम् ।

यश्च वन्दीवोन्नमितबाहुदण्डो नुतिशतैरभ्यनंदयच्छ्रवणयुगलं सोऽपि कोसलपतिर्दिंशजानैः क्लेशयति श्रवणविवरम्। क्वापि प्रस्थिते मयि विनयविनतपूर्वकायः पुरःप्रसारितपाणिर्यस्तु मार्गदर्शी बभूव सोऽपि बर्बरपतिस्तावदिदानीं मार्गणदर्शी वर्तते इति प्रसारितभुजदण्डो निर्दिश्यांगुलिशिखरेण तत्रत्यान्नरपतीन्प्रदर्श्य च किंचिदिव विचिंत्य दीर्घमुष्णं च निश्वस्य हेमांगदमादिदेश ; क्षिप्रमानीयतां मद्वचनान्मरुन्मालनामा सचिववर इति।

हेमांगदस्तु प्रासादशिखरादवरुह्य सत्वरं सचिववरं मरुन्मालमानिनाय। आगते च तस्मिन्मरुन्माले स्वस्ति भवत इत्यभिधाय समुपविशति च समुचिते विष्टरे सोऽपि वृषस्कंधः परिगृहीतासनः सचिववराप्यवलोकिता भवता भयजननी वाहिनी। वर्षादिवसविजृंभितनवघनौघनिभा इभाः कति ? सुपर्वसार्वभौमावर्वाखर्वगर्वसर्वंकषवीर्या गन्धर्वाः कति ? कति वाकुंठितविजृंभमाणप्रत्यर्थिविजयमनोरथा रथाः ? प्रकटितपरपराक्रमणनिपुणरूपाः भूपाः कति ? निजास्त्रमथितपरवरूथिनीस्राविताम्रास्साहस्राः कति ? समरोद्भटाः भटाश्च कति ? द्रष्टुमपि गदितुमपि श्रोतुमप्यशक्यम्। सम्यगवलोक्यताम् ? किमद्य कुर्म इत्यब्रवीत्।

निशम्य च वृषस्कन्धभाषितं कूर्परोपधानतलविनिहितात्मभारस्स्तोकमिवोत्थायासनान्मरुन्मालो विवलितकंधरस्समवलोक्य बलमपरिमितं मनस्येवमचिंतयत्। चिरात्पापमेनं निहंतुकामेन प्रयत्नपरेण मया तावदवकर्णितं परितः परिचोदितप्रणिधिमुखाद्विमतकेसरिणस्तनयो विनयोज्वलो वरमालिनी जठरसंभवश्चारुवक्त्रनामा तपोबललब्धशरासनतूणीरो जगदखिलमपि वितनोति वशमिति। अस्मत्स्वामिनो विमतकेसरिणो मरणमारभ्य नाशयितुमेनं दुरात्मानं नृशंसं बहुधा चिंतयतापि न मया समुपलब्धः कोऽपि पन्थाः। दिष्ट्या समुपनतः कालोऽयम्। हंतायमेव स्यात्स चारुवक्त्रः जेताप्येतेषां। तदधुनैव विधाय पापमेनं प्रकुपितं समीकदवपावकशिलीमुखशिखावलिकावलीढं शलभमिव कारयामि। नश्यतु पापीयानिति विचिंत्य च

तस्मिन्नेव विष्टरे जोषंभावमाश्रित्यावनमितमुखो निरुत्तरस्समुपाविशत् ।

समुपविशति च तस्मिन्स वृषस्कन्धः किं वा चिन्तितम् ? किमिदानीमपि शक्यं जेतुमेतद्बलम् ? किमद्य कर्तव्यम् ? मदधीनास्सर्वेऽपि राजानस्संघीभूय निजबलपरिगतास्तत्र तिष्ठन्ति । को वा स्यादेतेषां जेतेत्यप्राक्षीत् । पृष्टश्च स सचिववरस्सवितर्कं देव ! चिन्तितमिदानीम् । बलमिदमदृष्टपूर्वमश्रुतपूर्वञ्च । कतिपयबलपरिगतैरशक्यमस्माभिर्जेतुम् । यतश्चास्मदधीनास्सर्वे तत्पक्ष्यास्संवृत्ताः । तत्संप्रति समाश्रयणीया वैतसी वृत्तिरेव । कथयाम्यहमर्थशास्त्रमनुरुध्य । न पुनर्विपक्षपक्षपातेन । तर्कयतु भवानपि शुभोदर्कम् । सन्धिमन्तरा नान्यमुपायं पश्यामि । जानीहि तावदिदानीं विग्रहाकरणं भवद्विग्रहपोषणमिति । सैकतसेतुना वाहिनी-वेगनिरोध इव भवदल्पबलेनास्या वाहिन्या वेगनिरोधः । तदधुना तावन्मा नमय धनुः ; किन्तु शिरः । मा च प्रेषय शरम् ; किन्तु करम् । हितमुच्यते मया ; न तु प्रियमित्यकथयत् ।

श्रुत्वा च सचिववचनमतिपरुषं रुषा स तु वृषस्कन्धो भ्रुकुटित-भ्रूलतो रेखावलितरङ्गितललाटः पावकज्वालामिव वमद्भ्यां रुधिरच्छटामिव संकिरद्भ्यां विरूपाक्षरूक्षतरतृतीयनयनमिव विडम्बयद्भ्यां परिघूर्णिततया तटिल्लतामिवानुकुर्वद्भ्यां पिङ्गलाभ्यां लोचनाभ्यां प्रकम्पिताखिलपरिजनहृदयो दीर्घदीर्घं सर्प इव निश्वसन्परिस्फुरदधरोष्ठपुटः स्खलदक्षरगणः, तिष्ठ तावत् ; अलं विकत्थनेन । न वयं परमपुरुषस्य मन्दस्मितस्पृहणीयान्मुख-कमलाल्लब्धजन्मानः । किन्तु दुर्दान्तदानवदर्पदमनदक्षाद्दोर्दण्डात् । न निमन्त्रणस्थानमिदम् । किन्तु नियन्त्रणस्थानम् । न वयमाज्याकर्षण-निपुणाः । किन्तु ज्याकर्षणनिपुणाः । नापि पुस्तकहस्ता वयम् । किन्तु लस्तकहस्ताः । न वयमक्षगणनासक्ताः । किन्तु अक्षहननासक्ताः । न तावद्वयं मन्दहासवशीकृतविपक्षाः । अपि तु चन्द्रहासवशीकृतविपक्षाः ।

नापि स्वस्तिवाचनवाचालितकण्ठाः। अपि तु वीरवादकुण्ठितकण्ठीरव-कण्ठरावाः। अनवगतप्रथितप्रथनवैभव! दूरे भव। भवद्विकत्थनस्य न ह्यत्रावकाशः। न वयं सचिवायत्ताः। जानीहि मां जन्यजागरूकज-न्मिजातप्रशमनशमनम्। कतीदृशानि दृष्टानि बलानि। द्रष्टव्यानि च कतीत्यभिधाय सचिवमभिभूय च पार्श्वमवलोक्य याहि मलयवात! सज्जीकुरु बलमखिलमपि परपक्षपरिक्षोभणविचक्षणम्। गच्छ हेमाङ्गद! विविधविचित्रप्रहरणविच्छुरितं समुच्छ्रितकुञ्जरकेतुमञ्जुशृङ्गं तुङ्गतुरङ्गमत-रङ्गितपुरःप्रदेशं रोमशाभिधानेन सूतेन समलङ्कृतं भृङ्गराजनामानं विमत-केसरिणो रणरथं स्थापय द्वारीत्यादिदेश।

समादिश्य च स्वयमपि समीकसमुचितपरिकरपरिमण्डितः प्रासाद-शिखरादवरुह्य च द्वारि स्थितं शताङ्गमधिरुह्य तुरङ्गबलपरिवृतस्सेनाग्र-शब्दापितवादित्ररसितमुखरितहरिदन्तरो निरगात्। चोदिताश्च सूतेन तुरङ्गमास्त्वेकपद एव प्रबलाय विपक्षाय तावदेवं प्रणमेति वृषस्कन्धं शिक्षयन्त इव क्षितितलनिक्षिप्तजानुतलाः न्यपतन्नधोमुखम्। राज्याधि-कारावसानावसरस्त्वयमेवेति सत्कुर्वन्निव धृतशर्करः पवमानो मानोद्धतमेनं सवेगमभ्युज्जगाम। को दण्डं कोदण्डं त्वमितः परं विधातुमिति च्युति-काले शिञ्जिनीनिनादकैतवेन निगददिवाच्यवतास्य पाणितलात्। वाम-लोचनानामितः परं ते हृदयमेवमेव शोकातिरेकात्परिस्फुरतीति सूचयदिव प्रास्फुरदस्य वामलोचनम्। काष्ठान्तरप्रसृमरो निजप्रतापवैश्वानरोऽप्य-लाततामुपगत इव न्यपतदभितोऽलाततति:। अश्रौषीच्छिवारवमप्य-शिवारवम्। एवमधिगतानर्थसार्थोऽपि स वृषस्कन्धो भुजबलावलेपान्धश्च दैवमन्दीकृतप्रज्ञस्त्वरिततरमभ्यपतत्परबलम्। अभिपतति च तस्मिन्रणाङ्गणं समीकदिदृक्षयाहमहमिकया स्थलाक्रमणाय ससंभ्रममभिपततां सुरनिकराणां परस्परभाषितैः निबिडतरानिमिषसङ्घसङ्घर्षणचालितवलारातिकण्ठोपकण्ठ-डोलायमानसन्तानसुममालासन्तानिस्सृतचञ्चरीकचयचारुझङ्कारैः वीरवर-

णागतगीर्वाणगणिकागणकरचरणाभरणरणितैश्च वाचालितं विबुधविविध-विभूषणभासुरमणिनिकरमरीचिभिः पारिजातप्रसूनप्रकरप्रसृमरचामीकरराग-परागपूगैः बृन्दारकवारसुन्दरीन्दुवदनसन्दोहकन्दलितमन्दहासद्युतिभिः परिभ्रमद्दीप्रवर्णभ्रमरनिकरैः च शबलितमभवन्नभोंकणम् ।

तदनु प्रवृत्ते चोभयतो भयानके सांपरायके कुत्रचिज्ज्यारव-वाचालितं कुत्रचिद्धन्यमानसैन्धवसहस्रं कुत्रचिदसिधेनुधेनुकाविदार्यमाण-धेनुकानिकरं कुत्रचिच्छिलीमुखजालतिरोहितमार्तंडमंडलं कुत्रचिदायोधन-धीरयोधचातुर्यदर्शनप्रमुदितादितेयसमुदयपरिवृष्टमन्दारप्रसूनवासितं कुत्र-चित्परबलोत्पाटितकुंतनिभेभदंतहतिनिहताधोरणसमाक्रांतकुंभिकुंभपीठं कुत्र-चिदुत्पतत्कबंधबंधुरं कुत्रचिन्निपातितपताकावितानं कुत्रचित्त्रुटितशतांग-शतं कुत्रचित्तरवारिनिकृत्तकंकापह्रियमाणनृपोत्तमांगं कुत्रचिन्निपातितानां क्षितितले चरणतलनिष्पीडितानां भूपानां तारतरदीनरावमुखरितं कुत्र-चित्परस्परप्रहरणसंघर्षणपरिस्फुरत्स्फुलिंगप्रकाशपुंजं पथिकजनमिव चन्द्र-हासपातमूर्च्छितं भारतयुद्धमिवार्जुननिशितशरनिकृत्तसैंधवं विराटनगर-मिवोपभुज्यमानामिषपुष्टवृकोदरं कर्णभवनद्वारमिव मार्गणवर्गविच्छुरितं वर्षादिनमिव घनपातितशरसंकुलमहीभृत्स्कंधस्यंदमानकीलालपूरितवा-हिनीतटं वसंतदिनमिव पलाशपक्षिवाचालितं संध्यांकणमिव रक्तांबरं कलिभुवनमिव संचरद्वंचकसंचयं सुयोधनघोषयात्रादिनमिवार्जुनतीक्ष्ण-शरानुविद्धगंधर्वकुलं नगरमिव नवोन्मिषन्महीपालक्षयं दवानलमिव दिगंतरप्रसृमरतीक्ष्णतरहेतिजालं सर इवोत्पलबहुलं मथ्यमानक्षीरपारावार-तीरमिव काकोलकलुषितं विराटभवनमिव सदा सन्निहितकंकचाल्य-मानाक्षगणं शिशुपालहृदयमिव शूरजातहननकुतुकं राघवबलमिव अंगद-मंडितं ग्रहणदिनमिव केतुसमाक्रांतहरिमंडलं क्षपितानेकविग्रहमपि विजृंभ-माणविग्रहं आविर्भूतरक्तारुणमपि विघटितचक्रयुगं रक्ताक्षनादपूरितमपि पिंगाक्षनादपूरितं वृषस्कंधस्सवेगं रणांकणं प्रविवेश ।

प्रविष्टं च सरभसं ततइतस्स्यंदनेन पर्यटन्तं क्षपितानेकविपक्षबलं प्रकीर्यमाणशरनिकरतया सहस्रकिरणमिवोज्ज्वलन्तं तं वृषस्कंधं विलोक्य स चारुवक्त्रोऽयमेव स्यात्स वृषस्कंधहतकः ; यज्जनन्या पदेपदे अभिहितं दुरात्मनो लक्षणं तावदिति मनसि विचिंत्योच्चैस्तिष्ठ रे! विस्रब्धघातुक! त्वं तावदुरसिलेष्वग्रगण्य इति निस्त्रपः पर्यटसि ; निर्मर्याद ! अपि नाम जानासि माम् ? अपि ते श्रवणपथं वा किमहं प्रविष्टः ? शृणु तावद्विमत-केसरिणः पुत्रः चारुवक्त्रनामाहम् । यद्यस्ति धार्ष्ट्यं धनुरिदमाच्छिद्यतां मत्कराद्यथा पुरास्मत्पितुः करात्करवालं ; आयाहि अप्रतिहतमवेहि सायकं मदीयम्। दिष्ट्या दृष्टिगोचरोऽसि। विलसतु रणधरणिरियं क्रव्यगृध्नुगृध्र-व्रातनिशिततरत्रोटिकोटिसमुत्पाटितभवच्छरीरप्रसृमरसिरासरविसरपरिष्कृता। शरविदारितं परान्नपुष्टं भवच्छरीरं भोक्तुमपि फेरवोऽपि परावर्तते ; यतः कृतघ्नस्य शरीरं इति। प्रलोभनशील ! परस्त्रीलुंटाक ! कृतघ्नतायास्ते फलमिदानीमुपनतमिति जानीहि शठेति जगर्ज । तदवकर्ण्य कर्णकर्कशं कटुवर्णविशीर्णहृदयस्स वृषस्कंधस्तापसजनसमुचितवेषं परित्यक्तभूषं कटुतर-भाषं धीरधीरं चरणाभ्यामेव संचरंतं निर्वर्ण्य तं बालं मनसीत्थमचिंतयत् । हंतायमेव किं विमतकेसरिणः तनयः ? जेता च भूपानामेतेषाम्। क्व पुन-र्जातोऽयम् । कुतो वैतादृशो वेषः। कुत्र वास्मच्छ्रवणपथमनारूढ एव प्रवृद्धः । स्यादेवं ; निहते च मया तस्मिन्विमतकेसरिणि भीता तदा क्वापि गता सा वरमालिनी। सा तु तदा स्यादापन्नसत्त्वा। सत्यमिदं तत्प्रभवः। ततश्चावगतमदुदंतेन तेन विरचितं स्यान्महत्तरं तपः । अतः एवायं तापसवेषः हंत ! धिगनवधानतां मम। इतो गताया वरमालिन्याः प्रवृत्त्यधिगमाय नैव प्रेषितवान्प्रणिधीन्। तया तु धृतदृढसंकल्पया भवितव्यं मन्निषूदने। पतिमरणेऽप्यदग्धहृदया विदग्धा कुत्र वा निगूढं व्यवसत्। केनापि वंचकेन मत्पक्ष्येणैव साह्यकृता भवितव्यम्। वंचितोऽस्मि विधि-नेति चिंतासंताननिश्चलगात्रे तस्मिन्वृषस्कंधे, स चारुवक्त्रः सस्मितं

रे ! कृतघ्नशिरोमणे ! कुतश्चिंतयसि ? किं चिंतयसि ? किमनुतपसि ? अपि नामानुतापोऽपि त्वयि ? कृतस्य फलमनुभोक्तव्यमवश्यम् । इतः पलायितुमपि न शक्नोषि ? मद्वशगोऽसि । पश्य तावत्प्रथनप्राप्तप्रथाप्रमत्त-प्रत्यर्थिसार्थप्रमथनसमर्थं प्रहरणमिदम् । नाप्ययं प्रलोभनकालः । प्रदर्शय सांपरायकसामर्थ्यम् । सार्थय पृथुलतरं भुजदण्डम् । मित्रकरलब्धजीवन-स्समुपचीयमानस्पृहणीयावयवसन्निवेशश्च जीमूत इव मित्रमेवाभिभूतवा-न्किल ! ममेदानीमाशुगोऽयमाशुग इव जीमूतं दूरमुत्सारयति भवंतमिति व्याहरन्नेव प्राहिणोद्बाणमेकम् । प्रणिहितश्च विपक्षतक्षणविचक्षणो बाणो विवर्धितशोणितो बभूव । तदनंतरमुभावपि भयानकावस्थूललक्षावंगच्छेद-कृतादरौ च भयानकानीकिनीनायकौ कोपकषायितकनीनिकौ गुणाकृष्ट-मार्गणसन्निधापितकर्णौ गृहीतविनतधन्वानावपि विजृंभमाणानेकफलौ विमुक्तोपचीयमानशिलीमुखध्वानावपि क्रमव्यत्ययपरिहृतशिलीमुखाध्वानौ स्पर्धयोद्धतौ युद्धमतनु तावतनुताम् ।

तदनु स चारुवक्त्रो ज्यानुन्नैर्वाजिभिरेव तस्य वृषस्कंधस्य स्यंदन-वाजिनो ज्यामधिशाययामास । सायकयुगलेनाभांक्षीत्सारथिमनोरथमिव वृषस्कंधरथमपि । सहसा सायकाभ्यां सूतं शरासनं च निर्जीवमपातयत् । अथ स वृषस्कंधस्तु खड्गी खड्गीव विसृष्टसाध्वसस्सनिर्घोषमभिपतन्प्रकट-यंश्च सांयुगीनतां परिभ्रामितमंडलाग्रतया तटिद्वलयावेष्टित इव धूमयोनि-स्सहसा समाससाद चारुवक्त्रसमीपम् । तदा तु चारुवक्त्रो रोष-लोहितवक्त्रो निस्त्रिंशस्य तस्य निस्त्रिंशं शकलीकृत्य निशितमुखेन शिली-मुखेन हस्ते गृहीततत्केशहस्तो विहस्तं नतमस्तकं निरस्तसमस्तधैर्यम-नाहतसर्वशस्त्रं वृषस्कंधं कृतांजलिबंधं बलादपरांगवलितभुजयुगलबंधं विधाय नभ्रया सस्मितमित्थमकथयत् । तिष्ठ रे ! परदारपरिग्रहलंपट ! क्वेदानीं निलीना तवानुकामीनताप्रथा ? क्वा गता ते सांयुगीनता ? किमु भग्ना साप्यसिलतया सममुरसिलतापि ? दुरात्मन्निति बहुधावहेलयन्सेना-

पतिसात्कृत्य कृत्याकृत्यविवेकशून्यं प्रकाशितदैन्यं तमेनमानय नयहीनं क्षिप्रमस्मत्पटागारमित्यादिदेश ।

तदन्वायोधनामर्यादचातुर्यावलोकनकंदलितामंदानंदैस्साधुसाध्विति तारतारं व्याहरद्भिर्दिविषद्भिस्सहस्ततालं विकीर्णेषु स्यंदमानमरंदलुब्धमिलिंदेषु मन्दारकुसुमसंदोहेषु भवानेवास्मभ्यमानंदप्रदातेति रोलंबझंकारकैतवेन निगदत्सु स्यंदमानानंदजलविंदुदंतुरेषु चारुवक्त्रमस्तकाजिघ्रासया देवनयननिकरेष्विव निपतत्सु चारुवक्त्रशिरस्यनुपदमेव भेरीपटहपणवादिवाद्यनिनदैस्समुच्चालितकेतुदण्डषंडकिंकिणीकणकणरणितैरेकदैव कृततालशब्दैरुद्भटभटाट्टहासैरहो ! चातुर्यं चारुवक्त्रस्य । हन्त ! धैर्यम् । बत ! शौर्यम् । अहो ! पटुता । हन्त ! लक्ष्यवेधननिपुणतेति परस्परभाषमाणभूपालालापैर्जयघोषैश्च विदारितमिव भुवनतलम् । विघूर्णिता इव कुलाचलाः । विक्षोभिता इव महोदधयः । प्रचालितमिव वनतलं पातालफणिपतिफणामंडलञ्च । पिहितानीव दिक्कुंजरकर्णतालविवराणि । वाचालितानीव नाकलोकसौधवातायनविवराणि बभूवुः ।

तदनु चारुवक्त्रो जननीसमानयनाय कतिपयबलपरिवृतां कनकमयीं शिबिकां विभीतकनाम्ना सेनापतिना समं दंडकारण्यमध्यवर्तिनीं गुहां प्रति प्राहिणोत् । संप्रेष्य च विजितनिखिलनरपतिचक्रः विमतकेसरितनयश्चारुवक्त्रः श्वः प्रवेक्ष्यति वैजयन्तीमिति घोषयित्वा निवेदयतु भवान्पौरेभ्य इति विनयावनतमौलिमादिदेश मलयवातम् । आदिश्य च प्रविश्य स्वं पटवेश्म भटैरानीतं त्रपयावनमितस्वेदबिंदुतारकितवदनं किमधुना करोतीति भिया वेपमानं निर्गलितमानं तं वृषस्कंधं समुपलभमानः क्षितितल एव समुपाविशत् । उपविशति च तस्मिन्सर्वेऽपि भूपालाः भूतले एव तमभितस्तदाज्ञया न्यषीदन् । इतस्तावत्प्रस्थितो वन्यवर्त्मना सैन्यपरीतो विभीतकस्तत्रतत्र दंडकारण्ये प्रतिगुहं प्रतिशिलोच्चयं प्रयासेनान्विष्यान्विष्य क्रमेण कथमपि वरमालिनीगुहापरिसरसरणिमाससाद । सा

तु वरमालिनी दंडकारण्यशरण्या समाकर्ण्य बलकलकलरसितं गुहायाः बहिरागत्य समुन्नतमधिरुह्य शिलोच्चयशिखरं विलोक्य च दूरादापतत्तद्बलं भयविह्वलावला वेपमानगात्रयष्टिरितिकर्तव्यतामूढा मनस्येवमचिंतयत् । हा ! हतास्मि । हन्त ! ममैव मारसुकुमारः कुमारो विपक्षरूक्षक्षुरप्रक्षत-कोमलशरीरः भवेत् । अन्यथा कथं सैन्यमिदमापतेत् । इह स तु सांयुगीनः खलु दुरात्मा रंध्रान्वेषी वृषस्कंधहतकः । हन्त ! स तु बालमेनं स्वायत्तं विधाय हिंसां कृत्वा तन्मुखादवगतमदावासकंदरो भवेत् । अथवा निहत्य तं मज्जिघृक्षया समायाति यातुधान इव । हन्त ! कथमनु-भूतो निषूदनावसरे वत्सेन क्लेशः । किमशरीरिणी वाण्यपि निरर्थका ? कथमितःपरं क्षुद्रस्य क्रूरहृदयस्य तस्य वशवर्तिनी भवेयम् ? इति बहुधा विचिंत्य दुःखभरगद्गदकण्ठी अंब ! भूतधात्रि ! देहि मे विवरं मंदभाग-धेयायै । हा ! नियते ! यतसे किमु कांतारादपि कालयितुमेकाकिनीं माम् । हन्त ! वैहायसस्य किमिदमेव फलं भाषितस्य । तत्प्रत्ययादेव रक्षिष्यति पुत्रो मां जेष्यति शत्रुं विजित्य च पुनरप्यासाद्य हृद्यमुखारविंदो मां प्रासादं सादरं नेष्यति इति बहुविधसङ्कल्पकल्पनापरंपरयैव मया निर्भाग्यया यापितः कालः । बत ! नायातः तनयो विनयोज्ज्वलः । हा ! वत्स ! चारुवक्त्र ! कथमिवानुभूता भवता भयानके सांपरायके सायकहतिवेदना । कथमिव भवेत्तदा रमणीयमाननं निशिततरशरनिकरविशीर्णस्य ते । वत्स ! तदधुना स्मृतिपथमधिरोहति । संग्रामप्रयाणात्प्रागासाद्य मां मंदस्मितां-कुरितरुचिररदनमरीचिकिंजल्कं यन्मनोहरमाननसरोरुहं प्रादर्शयः । हा ! चारुवक्त्र ! क्वासि ? कथमसि विहाय मामेकाकिनीं कानने । किमु पितृ-दिदृक्षया गतोऽसीत्यतिचपलचित्ततया वात्सल्याविष्कृतहृदयतया च बहुधा विलपन्ती प्रेमातिशयेनाशुभमेव भावयन्ती चिरमनुभूतकष्टतया कष्टमेव विचिंतयन्ती स्त्रीस्वभावतयातितरामधैर्यमेवारोपयन्ती क्वापि गन्तुमपि स्थातुमपि नितरामनीशा साध्वसातिरेकादंधंतमः प्रविष्टेव तत्रतत्र स्खलन्ती

समवरुह्य मन्दं महीध्रशिखरात्तस्यामेव गुहायां निश्शब्दा निलिल्ये। स तु विभीतको गहनमभितो दत्तदृष्टिः पर्यटन्नन्विष्यान्विष्य प्रतिकन्दरं प्रतिसरस्तीरं प्रतिमहीरुहमूलं प्रतिप्रताननीगुल्ममनवलोक्य च तां वरमालिनीं नीरंध्रनमेरुतलबहुलोपकण्ठतया अलब्धदिवाकरमरीचिनिचयप्रवेशावकाशां क्षितितलनिहितनारिकेलकमण्डलुं शंकुलंबितधवलचेलां दर्भासनसनाथां एकदेशनिक्षिप्तकृष्णाजिनभस्त्रिकां कन्दमूलफलकल्पितैकदेशां व्रतमाचरंतीं तापसीमिव विलोक्य तां गुहां भवेदत्र सा तु वरमालिनीति विचिंत्य नातिदूर एव विसृष्टनिखिलबलः मृगेन्द्र इव स्वयमेक एव प्राविशत्तां गुहाम्। समुपस्थितमवलोक्य च तं विभीतकं सा वरमालिनी वेपमाना वैवर्ण्यदीनवदना हन्त! कथं सन्निहित एव पापोऽयं। किमधुना कर्तव्यम्। कुत्र वा गन्तव्यम्। किमद्य करोत्ययं न जाने। हा! रुक्मिणीजाने! त्वं खलु दुरात्मना दुश्शासनेनापह्रियमाणदुकूलां पराधीनामाक्रन्दन्तीं दीनामपालयः पांचालीम्। अहमपि लब्धपांचालिकादशास्मि। विवशास्मि। पाहि मामनाथामिति रुदती विभीतकमभाषत। तात! कस्त्वम्? कुतो वा घोरतरमिदं कांतारमभ्यागतोऽसि? समुपलब्धराजवाल्लभ्यः प्रभुमनस्संतोषसंपादनैकतान इव लक्ष्यसे। न हि किमु मयि दुरध्यवसायः? अबलाहमनाथैकाकिनी निराश्रयारण्यवासिन्यस्मि। पातिव्रत्यरक्षणायापिनाम न मामनुकम्पसे? सत्यमावेदय। कुतस्समागतोऽसि? दयया निवेदयेति। तदवकर्ण्य तस्याश्च तादृशीमवस्थां विलोक्य स विभीतकः कृतप्रणामो बद्धांजलिपुटस्सविनयं स्थित्वा च नातिदूरे देवि! न भेतव्यम्। विभीतकनामाहं सेनापतिः वृषस्कन्धस्येति निवेदयंस्तत्रांतरे स्त्रीसमुचितमतितया कातर्याच्च हा! वत्स! चारुवक्त्र! कीदृशीमवस्थां प्रतिपन्नोऽसि? महदिदं कष्टमिति तारतारमाक्रन्दन्तीं मूर्छितां तां वरमालिनीं विलोक्य क्रमेण सावेगं ससंभ्रमं च चेलांचलेन वीजयन्नचिंतयत्।

अहो! चक्रवर्तिमहिष्यपि महतीमीदृशीमवस्थामनुभवति। हन्त!

दैवविलासितम् ! को वा जानाति कदा वा कथं वा पतिष्यति द्वन्द्वपरंपरेति। पुरा कीदृगनुभूतमनया राज्यसौख्यम्। कीदृगनुभवत्यधुना दैवदुर्विपाकाद्दुःखमियम्। हन्त! अग्रे कथमनयानुभोक्ष्यते च। को वा शक्नोति निर्णेतुमिदमित्थमिति। दैवाधीनं किल जगदखिलमपि। हन्त! विचित्रो हि जगन्मोहः। यदापदि सर्वेष्वपि विषयेष्वस्थिरता संपदि च स्थिरता जनैरारोप्यते। वस्तुतः अस्थिरमेव सर्वम्। तथाहि स तु वृषस्कन्धो निहत्य च विमतकेसरिणं विषयसुखेषु स्थिरतां भावयन्तीमेनां निष्कासयामास नगरात्। इदानीं तु चारुवक्त्रो राज्ये स्थैर्यमाशंसमानं मानोद्धतं तं वृषस्कन्धं निर्जित्य सर्वमप्यपजहार। अतो दैवविलसितस्य वेत्ति न कोऽपीति विचिंतयन् शिशिरोपचारेण तस्यास्संज्ञामुदपादयत्। लब्धसंज्ञा च सा वरमालिनी मंदमुत्थायापि कुशली ? वत्सश्चारुवक्त्रो दयया निवेदयेत्यप्राक्षीत्। पृष्टश्च स सेनापतिः देवि! समाश्वसिहि। कुशली वृषस्कन्धस्य जेता मध्यमलोकस्य च नेता भवत्याः पुत्रश्चारुवक्त्रः भवदागमनमेवानुपालयति। तदागच्छतु भवती; शिबिकामेनामधिरोहतु। आनन्दयतु तनयनयनयुगलम्। पश्यतु भवती तनयमुखकमलमिति न्यवेदयत्।

निशम्य च तद्वचनं वरमालिनी तात! कथमिव तथ्यमित्यवगच्छामि भवद्वचनम्। दुरितकर्मैकतानस्य तस्य वृषस्कन्धहतकस्य दौरात्म्यमनुचिंत्य दुःखभरजर्झरितहृदया भवामि। निरवलंबनास्मि। कदाप्यसंस्तुतं भवन्तं कथमिवास्मत्पक्ष्यमिति प्रत्येमि। तदपसर दूरं; नाहमारोहामि शिबिकामिमामित्यब्रवीत्। तदा स विभीतकस्सविनयं बद्धांजलिपुटः देवि! यद्यहं नराधमस्य तस्य वृषस्कन्धस्यादेशानुरोधी तदैव बलाद्भवतीमारोपयेयं शिबिकामेनाम्। यदा च भवती गतचैतन्या क्षितिशायिनी परवशा तदैव शाययेयं भवतीं शिबिकायाम्। यद्यप्यनुभूतापरिमितदुःखतया जगतो वञ्चनाबहुलतया जनानां कृतघ्नतया च भवन्मानसे तावदीदृशी समुदेत्यचिकित्स्या विचिकित्सा। सत्यमावेदयामि।

नैवावकाशोऽत्र तादृशसंदेहस्य। किंचेदमभिज्ञानं सुदूरमुत्सारयति ते विचिकित्साम्। यत्ते पुत्रेण तपसः प्रतिनिवृत्तेन भवत्सन्निधौ प्रतिज्ञातं नृशंसं तं वृषस्कन्धहतकमहत्वैव जीवग्राहं गृहीत्वा भवच्चरणसरसिजयोः पातयिष्यामीति। तथैव कृतवता महात्मना तव पुत्रेण प्रेषितोऽहम्। किंचापि स्मरसि? चिताश्रयाशप्रवेशावसरे समुदीर्णामशरीरिणीं वाणीम्। एतदुदंतनिवेदनेन विस्रंभय मम जननीमित्यभिहितं चारुवक्त्रेण। तदिदानीं भवत्पुत्रेणैवाज्ञप्तस्त्वदानयनायागतोऽस्मि। तद्दूरीकुरु शंकामलंकुरु शिबिकामिति प्रार्थयामास।

एवं प्रार्थिता च बहुधा विस्रंभविस्रस्तविचिकित्सा हर्षभर-कंदलिताश्रुजलबिंदुमालिनी सा वरमालिनी हन्त! असमीक्ष्यकारिण्या मया तावदाशंसिता मुधैव वत्से तस्मिन्नमंगलपरंपरा। यदभिदधति विबुधाः स्त्रिय एवाशेषानर्थायेति। तत्तथ्यमेव। धिगीदृशीं मामशुभोदर्क-संतर्ककर्कशहृदयामिति बहुधा विचिंतयन्ती प्रमोदभरकंटकितकपोलफलका विनमितवदना संस्तुताभिर्मुग्धाभिर्लुब्धकवधूभिस्सबाष्पं कथंकथमपि लब्धानुमतिः सन्निहितां शिबिकामारुरोह। आरुह्य च समुपविष्टायां तस्यां विधाय च तां शिबिकां धवलदुकूलावगुंठितां परिजनाः निन्युः तां पटकुटीरोपकण्ठम्। तदनु विभीतकस्त्वरया बलपरिवृतया शिबिकया सह चारुवक्त्रपटनिकेतनसकाशमासाद्य,

"निरवद्यमाचरितं किल कर्म भवता। महती भीतिः खलु दुष्कर्मणि। न हि किमु मनागपि त्वयि धर्मच्युतिः। ननु भवता जगतीह महती कीर्तिरार्जिता। निर्जिता हि भुजबलेन वसुमतीयम्। विस्रब्धे सुहृदि प्रकटितविस्रंभोऽसि। नयविदामग्रणीरसि। जंबुक इवान्योपभुक्तोज्झित-मामिषमभिलषसि। न पुनर्मृगेन्द्र इव स्वपराक्रमार्जितम्। दुरितैकभाजन! निखिलजनविगर्हित! अपि जानास्यशस्त्रवश्यं किंतु शास्त्रवश्यं परलोकम्। निस्त्रप! भवतस्तावत्परदारपरिग्रह एवावदातं कर्म; देवतासपर्या,

सत्पुरुषसहवासश्च। तासां परयोषितां दर्शनमेव दर्शनदर्शनम्। तासां उदंतश्रवणमेव पुराणेतिहासादिकथाश्रवणम्। तासां स्मरणमेव पवित्र-हरिचरणस्मरणम्। तासु रतिरेवापवर्गः। तत्रापि विस्रब्धमित्रभार्यायां निरर्गलोऽसि? यदि ते जननी जीविता भवेत् सापि जाया भवितव्या। धिगनवधानतां विधातुः। यत्तव कृते भुवनमंडलमखिलमपि नैवास्त्रजल्लल-नामयम्। वैधेय! कथमिव प्रगल्भसे योद्धुमिह विषयग्रहणलंपटानिन्द्रिय-हयान्मनःप्रग्रहेण वशीकर्तुमसमर्थः। किञ्च मनोभवपरवशस्य तवेदमप्यु-चितम्। यदात्मपोषकस्य मनसोऽप्यपहर्ता काम इवास्मत्तातानुजीवी भवानपि तमेव निहतवान्। अत्र तावन्निंद्यो नासि। स तु मे पिता निंद्यः। यस्तावदाबाल्यादात्मनिर्विशेषं पापिनं त्वां पोषयामास।" इति बहुधा वेपमानं समनुभूयमानावमाननं तमनतिदूरे स्थितं वृषस्कन्धम-सकृदुपालभमानं सामंतनिखिलनरपतिपरिवृतं चारुवक्त्रमद्राक्षीत्।

दृष्ट्वा च सविनयमुपसृत्य कृतांजलिपुटो देव! समागता देवी भवतो जननीति न्यवेदयत्। तदनु विविक्तं पार्श्ववर्तिं वसनोदवसितं प्रवेशय जननीमिति विभीतकमभिधाय समुत्थिते च तस्मिन्सर्वेऽपि सत्वरमुदतिष्ठन्। समुत्थितश्चारुवक्त्रः त्वरिततरमानय तमविनीतमेनं तत्पटकुटीरमिति भटमादिश्य विसृष्टसकलराजलोकः स्वयमेकाकी प्रविश्य च मातुः पटकुटीरं सुतमुखकमलावलोकनकुतूहलिनीं जननीमपश्यत्। दृष्ट्वा चांब! पराजितारातिश्चारुवक्त्रः प्रणमतीति पादयोः पतन्तं तं पुत्रमुत्थाप्य बाहुलताभ्यां सा वरमालिनी दृढतरमाश्लिष्य परामृश्य पाणि-तलेन शरहतिक्षतान्यंगानि वत्स! चिरं जीवेत्याघ्राय तदुत्तमांगममंदानंद-सिंधुतरंगपरंपराभिहतेवेतिकर्तव्यतामूढा बाष्पसलिलप्रक्षालितकपोलस्तन-मंडला वत्स! अपिनाम हतस्स पापैकतान इत्यप्राक्षीत्। पृष्टस्सः मातः! जीवति स नृशंसो भवच्चरणसरसिजनखमयूखोदकधारामवगाह्य शिरसा-त्मानं पावयितुमिति निवेदयन् स्वयमेव स्वोकमिव द्वारदेशमासाद्य

भटाभ्यामसकृत्परिगृह्यमाणमपि त्रपाभरात्पदेपदे च्यवमानं गलितमानं मुहुर्मुहुर्नुद्यमानं याहियाहीति प्रतिपदं चोदितमपि ग्रामदेवतायै बल्यर्थं नीयमानमजमिव दृढनिहितावष्टब्धचरणं निश्चलं तिष्ठन्तं तं वृषस्कन्धं विलोक्य क्रुधा भ्रुकुटितभ्रूलतस्स्वयमेव सरभसमनुधाव्य दृढमुष्टिगृहीत-तत्केशपाशो गच्छ रे ! वैधेयेति बलान्नुदन्वरमालिनीपटागारं प्रावेशयत् ।

प्रवेशितस्य तस्य पापिनो दर्शनमात्रेण स्मरणपथाधिरूढनिजरमण-मरणतया समुद्गलत्कदुष्णबाष्पधारापरिबाधमानाधरा धरातलमवलोकयन्ती निश्शब्दं रुदती वरमालिनी सगद्गदं वत्साभीकं भीकरमभिकं तं क्षिप्रमप-सारय मन्नयनपथात् । एतद्दर्शनेन स एव समयस्स्मृतिपथमधिरोहति । यत्समये निकृत्तभवत्पितृकंधरारुधिरधारारुणितधरासिधेनुकापाणिरकरुणो दुरात्मा दंडधरचंडतररूपोऽयमनाथाया मे हृदयं जर्झरितमतानीत् । किमर्थमधुनापि नायं प्राणैर्वियोजितः ? न कार्यो हि शत्रुशेषः । इति दीनदीना अकथयत् । तदवकर्ण्य चारुवक्त्रस्सविनयमंब ! मा भूदयं दुरात्माभिको रणशिरसि निशितशरनिशारितो वीरस्वर्गमासाद्यानवद्यरूप-स्पृहणीयाप्सरोगणपरिष्वंगपात्रमिति मया जीवग्राहं गृहीतः । इति निगदन्गलहस्तिकया विहस्तं तं बलात्पातयित्वा जननीचरणसरसिजयोः स्वयमेव सत्वरमनोनयन्निजदूष्यम् । तदनु श्वः कल्य एव प्रवेक्ष्यति नगरीं चारुवक्त्रस्तदलंकरणीया वैजयन्तीत्युद्घुष्यतां भवतेति पार्श्ववर्तिनं विभीतकमादिश्य प्रविश्य च निजपटनिकेतनं तैर्नरपतिभिः परिवृतः समुपविश्य च चामीकरविष्टरे तास्ताः निजदंडकारण्यवासकथाः वृषस्कंधो-पालंभगर्भाः कथाश्च व्याहरन्वृषस्कंधानुगतपरिहासवार्ताभिर्हासयन्मही-पालान्कालमत्यवाहयत् ।

अथांशुमाली बहुजुगुप्साकरां द्रष्टुमपारयन्निव रणधरणिं समाश्रित-चरमगिरिचरमसानुररुणकिरणारुणितरमणीयविचित्रगन्धर्वनगरतया स्वच्छ-तराकाशदर्पणे विचित्रतरविदारितानां रणांकणनिपातितानां रुधिरसिक्ता-

वयवानां प्राणिगणानां प्रतिबिंबभ्रांतिमुपजनयन्वरुणाय चारुवक्त्रजयवार्तां निवेदयितुमिवावततार वरुणलोकम् । अवतरति च मार्तंडमंडले नातिदूरवर्तिन्या वैजयन्त्याः प्रसृमरस्पृहणीयमणिदीपगणकिरणद्विगुणितदीप्तिप्रमीतनृपतिभूषणरुचिरमणिप्रकरविच्छुरिततया निजवल्लभसदृक्षचारुवक्त्रवक्त्रदिदृक्षया क्षोणीतलावतीर्णतारानिकर इव, रणांकणे तत्रतत्र खण्डितगजोद्दंडशुंडादंडषंडरंध्रप्रणालिकागलद्रुधिरधारागलगलनिनदैश्शोणितस्रोतः प्लवमानतुरंगमखलीनवलयगणसंघर्षणकणकणरसितैरस्थिपंजरचर्वणैकतान-वृकतीक्ष्णदंष्ट्राकटकटात्कारैः पललातिलुब्धफेरवदूराकृष्यमाणतुरगजंघाकांडयुगलतया परस्परताड्यमानखुरपुटरटरटरटितैश्शुनकचर्व्यमाणक्रव्यकचकचात्कारैः पिशितातिगृध्नुतया शर्वर्यामपि स्थितानां गृध्राणां दृढतरचंचुपुटसमाकृष्यमाणखंड्यमानधमनिजालचटात्कारैः मस्तिष्कमग्नकंकत्रोटिपुटाकृष्यमाणदीनफेरवारावैस्तृषितवेतालांजलिपुटपीयमानरुधिरचूषणनिस्वानैश्च वाचालितायां रजन्यां चारुवक्त्रेणाभ्यनुज्ञातास्सर्वेऽपि राजानः प्राविशन्संवेशाय निजनिजपटवेश्मानि । तदनु सैंधवेभ्यः पच्यमानहरिमंथकानां क्रमेलकचर्व्यमाणनिंबपत्राणां सिंधुरग्रस्यमानसल्लकीपल्लवानां भटवर्गक्वाथ्यमानोदनानां च चित्रगन्धैर्वासितमभवच्छिबिराजिरम् ।

ततश्च भुक्तेषु सर्वेषु क्षितितलनिखातकुंतयष्टिपंक्तिघटितदीर्घपृथुरज्जुनियंत्रितशिरोधिचरमचरणेषु निष्कंपश्रवणप्रोथेषु स्तोकमिव कुंचितैकखुरपुटेषु निश्चललंबितवालकलापेषु विपुलनीलकंबलावगुंठितगात्रेषु घोटकपटलेषु विटपिमूलावेष्टितशृंखलाबद्धचरमचरणस्तंभेषु निश्चलकर्णतालेषु आक्षितितललंबितशुंडादंडेषु निद्राविद्राणेषु सामजव्रजेषु पर्यायेणोभयतो डोलायमानाधरपुटं कोरकितोच्छूननयनपुटं च रोमंथासक्तेषु क्षितितलशयानेषु क्रमेलकेषु तत्रतत्र समास्तीर्णपर्याणपरंपरामधिशयानेषु रणांकणप्रमीतात्मबन्धुपुत्रमित्रभागिनेयादिजनस्मरणपरस्परभाषणदूयमानेषु योधयूथेषु रथाभ्यन्तरप्रसुप्तेषु रथिकेषु पटमंदिरे सुसुखं नरपतिष्वनुभवत्सु

निद्रां, निर्निद्र एव च निजदुर्दशाचिंतापरंपराव्याकुलितमानसे वृषस्कंधे प्रतियामं क्रमशो नलिकाभुजैस्ततइतः पर्यटद्भिः रक्षिपुरुषैरभिरक्ष्यमाणे च शिबिरदेशे चारुवक्त्रो निजजननीदूष्यमासाद्य परिजनपरिकल्पिते तल्पे शयानः पार्श्ववर्तिनि शयनीये शयानायै जनन्यै निजजैत्रयात्रावार्तां कथयन्नेव विभावरीमनारूढनिद्र एवात्यवाहयत् ।

अथ सप्तसप्तिर्मृगयुरिव प्रधावितुरगः खर्वेतरपूर्वपर्वतवर्त्मना अंतरिक्षकांतारं प्रविश्य तत्र विलसंतमृक्षगणं विनाश्य निजनिशितकरभल्लैः रक्ताकुलितमतानीत्प्रांतदेशम् । प्रादुर्भवति गभस्तिमालिनि, कराञ्चलपरिमृष्टाक्षियुगलानां जृंभाविवृतवदनकुहराणां कृतांगभंगानां उत्तिष्ठतोत्तिष्ठतेति प्रसुप्तान्प्रबोधयतां योधानां भाषितैस्समुद्धूयमानधरणितलधूलिधूसरितशयनीयफटात्कारैरसकृन्मूत्रशकृत्कर्दमितखुरपुटकुट्टनस्थपुटितावनितलानां समुन्मीलितस्फीतनयनानां फूत्कारपरिस्फुरत्प्रोथानां समुद्ग्रीवाणां वाजिनां हेषाघोषैः, प्रबुद्धानां कर्णतालताड्यमानगण्डमंडलानां मन्दांदोलितगात्राणां मुहुश्शुण्डादण्डावकीर्णतुहिनशीकरशिशिरनलपूलिकाकलुषितकुम्भपीठानां स्तंबेरमाणां घंटाटंकारैः सुप्तोत्थितानां बुभुक्षयाभीक्ष्णं परिजनानीतनिंबपत्रसंभारबंधुरप्रदेशविवलितायतकंधराणां जृंभावसानप्रलंबमानाधरोष्ठपुटानां क्रमेलकानां काहलसंकाशकंठतारनिस्वानैः, कुटीरेषु शयानान्क्षितीशान्प्रबोधयतां वंदिनां स्तोत्रजालैः च स्कंधावाराजिरमापूरितमभवत् । उत्थाय च सर्वेऽपि निंबशलाकाधावनधौतदंताः सलिलप्रक्षालितमुखमंडलाः अनतिगृहीताभ्यवहाराः हयान्हरिमंथकैर्दंतावलानिक्षुभारैरुष्ट्रान्निंबपत्रैः लवणैश्च विधाय प्रशमिताशनायानुत्सवसमुचितानल्पाकल्पपरिष्कृतांश्च स्वानुगुणालंकारालंकृतास्सैनिकाश्चकाशिरे। नरपतयोऽपि परिजनदीयमानोदकक्षालितमुखकमलाः निर्वर्तितस्नानक्रियाः परिगृहीताभ्यवहाराश्च हारादिमनोहरपरिष्कारपरिकर्मिताः भुजिष्याजनदीयमानतांबूलादानमोदितमानसाः पुरप्रवेशोत्सवकृतादरा रेजुः ।

इतस्तावद्वैजयन्त्यां मरुन्मालस्सचिववरः साचिव्यसमुचितालंकारालंकृतः मलयवातेन समं समुपविश्य स्यंदने निजबलानुगम्यमानः काभिश्चिद्विविध-विचित्राभरणभरितभासुरशातकुंभभाजनविराजमानपाणिपल्लवाभिः काभिश्चि-न्नरपतिभोग्यगुंभितमनोहरसुमनोहारसौरभभरसन्निहितचञ्चरीकचयझंकार -मुखरितपत्रभङ्गतरंगकमनीयतपनीयसम्पुटकमुखवलयप्रोतकूर्पराभिःकाभिश्चि-त्सितदूर्वासितकुसुमकलितलाजपुंजधवलितकलधौतपात्रांचितकरकिसलयाभिः काभिश्चित्सुवर्णतन्तुसन्ततिकल्पितविचित्रपत्रभंगभासुरपर्यंतैरनेकधा पुन-रुक्तीकृतैः विविधवर्णदर्शनीयैः कौशेयैरलंकृतशयकुशेशयाभिः काभिश्चि-त्कनककलशोदरतलविनिहितकरकमलतया बहिःप्रकटिताभ्यंतरविनिहित-पल्लवैरिव विशदतरकुसुमावेष्टितकण्ठैरेलाकुंकुमघनसारपटीरादिद्रव्यदिव्य-सौरभसम्भृतांभःपूर्णैः नारिकेरफलपिहितमुखविवरैश्शातकुंभकुम्भैः परि-मंडितोरुतलाभिः काभिश्चिन्मलयजरसभरितकांचनचषकग्रहणव्यग्रकरकिस-लयाभिः परिधृतधवलकोमलकौशेयाभिः तुंगपयोधरकुंभतटडोलायमान-मौक्तिकमालाभिः लावण्यस्पृहणीयकोमलतनुयष्टिभिः मंगलमयीभिरिवोत्सव वैजयन्तीभिरिव चारुवक्त्रवक्त्रदर्शनकुतूहलालिंगितांतरंगाभिः वारसुन्द-रीभिः विराजमानाभ्यंतरैः कतिपयैश्शतांगैः परिष्कृतोभयपार्श्वः यन्त्र-विकीर्णार्णश्शीकरनिकरसिक्तेन स्तोकमिव वामकूर्परसंदंशितक्षितितललम्ब-माननीवीकलापाभिः अवनमितपूर्वकायतया स्कंधतलादापयोधरमण्डलं लंब-मानां कृष्णभुजगभोगमसृणदीर्घां पिंडीकृतप्रसूनमालामंडितमूलां वेणीं दक्षिण-भुजादसकृच्चरमांगदेशं प्रति नुदन्तीभिः कौशेयमयतयासकृत्स्रस्तमुद्गमनीयं मुहुर्डोलायमानविचित्रतररत्नहारमंडलमंडितं वक्षोजमंडलं नयन्तीभिः वाम-हस्ततलविन्यस्तरंगवल्लीभाजनाभिस्ततइतः परिस्पन्दनेन रणरणायमाननू-पुरगणपरिष्कृतचरणपंकजाभिस्सावधानं धरातलदत्तनिस्तरलायतनयनेन्दी-वराभिर्दक्षिणपाणिपुंडरीकदलाग्रक्रियमाणधवलमृत्तिकाक्षोदरेखाराजितया प्रसृमरकरनखररुचिरकिरणैरेव विरचयन्तीभिरिव रंगवल्लीमात्मनैपुण्यप्रकट-

नव्यग्राभिः पौरसुन्दरीभिः विचित्रपत्रभङ्गभङ्गभङ्ग्या रंगवल्ल्या समलंक्रियमाणेन, विस्रंसितानां स्कंधावाराणां दारुसंभारपटपटलरज्जुजालजटिलानि वस्तून्यवशिष्टहरिमंथकादिधान्याशून्याः गोणीश्च समुद्वहद्भिः क्रमेलकैर्दंतुरेण प्रागेव चारुवक्त्रदिदृक्षया सकौतुकं संघशः समागतान्पौरान्क्रमशः स्थापयितुं तत्रतत्र सादिभिः प्रधाव्यमानानां सैंधवानां खुरपुटरवमुखरितेनोभयपार्श्वक्षितितलनिखातोच्चतरसिंधूरसुधापट्टशबलितस्तंभपंक्तिघटितपताकादण्डनिकटनिबद्धरसालपल्लवतोरणपरंपरावितानितेन दीर्घतरेण राजमार्गेण प्रस्थितश्चारुवक्त्रपटसदनमाससाद ।

आसाद्य च कुत्र युवराज इति पृष्टैः परिजनैरितइत इति प्रदर्श्यमानमार्गो मरुन्मालो द्वारदेश एव शतांगादवतीर्य रथेभ्योऽवतीर्णाभिर्वारांगनाभिस्समं पुरस्कृतमलयवातः प्राविशत्पटमंदिराभ्यंतरम् । प्रविश्य च निषण्णं चामीकरविष्टरे चिरकृतस्नानविधिं परिजनविशोध्यमानजटाजटिलपाटलकुटिलशिरोरुहं विशदांशुकावगुंठितशरीरं दुग्धाब्धिकल्लोलच्छटाविच्छुरितमिव मन्दरं सौन्दर्यराशिमिव पुरुषतामापन्नं तं चारुवक्त्रमद्राक्षीत् । दृष्ट्वा चोन्मीलितलोचनपुटे विस्मयस्तिमितमानसे तस्मिन्मरुन्माले नातिदूर इव स्थित्वा अहो ! सौन्दर्यमहो ! सौकुमार्यम् । हन्त ! कोमलता ! बत ! लावण्यम् । अद्भुततरं गांभीर्यम् । सद्यस्सूर्यमरीचिविकसितनवसहस्रपत्रपत्रविशालं नयनमस्य पिशुनयति चक्रवर्तितां ; धन्या खलु राज्यलक्ष्मीः ; यतस्सततमपि सेवते कुमारमेनं वल्लभम् । हन्त ! रूपमस्य विलोडयति पुरुषाणां च हृदयं; किमुत स्त्रीणां? दर्शनादस्य मुह्यति मे मनः । जहाति लोचनं निमेषस्पंदनम् । यदि पश्येयुः ललनाः सशरीरं मन्मथमिव एनमनुपदमेव मुह्येयुरुन्मत्ता भवेयुः । हंत ! विमतकेसरी तावदीदृशं पुत्रमनवलोक्यैव कालवशं गतः । वयमेव सुकृतिनः । धन्या वरमालिनी । समधिगतभाग्याः प्रजाः । यतः प्रासवान्दिष्ट्या स्वकीयं राज्यं सोऽयमिति चिंतयति सति, स्तोकमिव मलयवातः चारुवक्त्रमुपसृत्य बद्धांजलिपुट-

स्सविनयं देव ! देवैः भवत्तातपादैः मंत्रिपदे अभिषिक्तोऽयममात्यवरो द्विजोत्तमो मरुन्मालनामा भवद्दिदृक्षया भवत्सन्निधिमायात इति विज्ञाप्य विरराम ।

तत्क्षणमेवोत्थाय चासनात्सविनयं विमतकेसरितनयश्चारुवक्त्रः प्रणमतीति प्रणिपतंतं तं कुमारमुत्थाप्य दोर्भ्यां मरुन्मालो विजृंभमाण-वात्सल्यसमाश्लिष्टांतरंगतया इतिकर्तव्यतामूढो भद्र ! तात ! कुमार ! चारुवक्त्रेत्यनुलपन् परिरभ्य दृढतरं शिरस्याघ्राय च अमन्दानन्दकन्दलित-बाष्पप्रक्षालिततत्केशपाशः परामृशन्नसकृत्तदुत्तमांगं गद्गदद्म्यमानस्खल-दक्षरैर्भाषितैः कुमार ! दिष्ट्या वर्धसे । नैव विमतकेसरिवंशकरीरोऽपि इति निश्चित्य दुःखितस्य मम मानसं तस्माद्यत्त्वमेको जात इति तदेवा-नंदयति । तत्रापि यद्बाल्ये एव विजितनिखिलभूमण्डलोऽसीति तदधिक-तरमाह्लादमुत्पादयति । तत्रापि यद्रूपौदार्यादिसद्गुणानां विधात्रा पात्रीकृतः इति तत्तु तरणाचार्य इव नितरां प्रमोदपयोनिधौ मज्जयति प्लावयति चेति निगदन्सबाष्पं कुमार ! भवत्पितुराभरणजालमिदम् ; राजयोग्यमंशुक-मिदम् ; माल्यमिदममूल्यम् ; भवता तावदेतदखिलमपि अंगीकरणीयं इत्यभिधाय विरराम ।

ततश्च स चारुवक्त्रो निर्वर्ण्याभरणजालमश्रुकलुषितलोचनोऽन्त-र्विलसन्मकर इव पद्माकरः क्षणमिवावनतमुखः स्थित्वा त्रपया किंचिदव-नमितमुखपंकजाभिः कृतमंदहासतया स्तोकमिवोन्नमितकोमलारुणकपोल-फलकाभिः अपांगवीक्षणेनैव कर्णमूलावतंसितनीलोत्पलाभिः पाणिपल्लव-कृतोज्ज्वलपूर्णकुम्भविलसन्निजप्रतिबिंबकैतवेनात्मानमिवाऽर्पयन्तीभिः वार-नारीभिः पुरः प्रसारितान् सुवर्णपूर्णकुम्भान्स्पृष्ट्वा पाणिभ्यां परिजनसमुपनीते समुपविश्य च तपनीयपीठे मरुन्मालमप्यन्यस्मिन्पीठे समुपवेश्य च तन्मुखसौन्दर्यावलोकनांतर्जातमनोभवद्रुमपल्लवाभिरिव सविभ्रमं परस्पर-सखीजनमुखावलोकनजनितलज्जाभयवदनारविंदाभिः क्षौमाच्छादनेन

तत्सुकुमारशरीरस्पर्शकन्दलितपुलकनिकरानसकृदपवारयन्तीभिः कपोलफलकोद्गमत्स्वेदकणिकाश्चेलांचलेनाभीक्ष्णमपनयन्तीभिस्स्मरपराधीनाभिः कृच्छ्रेण भिया च स्वायत्तीकृतहृदयाभिः सावधानमलंकुर्वतीभिस्ताभिर्वारसुन्दरीभिः समलंकृतो राज्यलक्ष्मीपाणिग्रहणायावतीर्णः पुंडरीकाक्ष इवाराजत।

मरुन्मालस्तु कुमार! क्व ते तपस्विनी जननी। या च निर्लिंपधुनीव वनाध्वनीना पावनीकृतवनीतटावनी रत्नगर्भेव भूपालपालिता निजोदरधृतनायकरत्ना च कुंतीव पतिविरहासहिष्णुतया परित्यक्तराज्यसुखा, धर्मपथानुगार्जुनभीमव्रतैकताना च। बलवती मे तद्दिदृक्षेति पप्रच्छ। पृष्टश्च विसृष्टविष्टरश्चारुवक्त्रः प्रविश्य मरुन्मालेन समं मातृपट्कुटीरं कृतप्रणामोऽम्ब! अस्मत्कुलयोगक्षेमदत्तदृष्टिरमात्यवरिष्ठो भवद्दिदृक्षयायातः इत्यवदत्। वरमालिनी मरुन्मालमालोक्य लोचनयुगलगलदमिताश्रुसलिलक्षालितकपोलफलका किमपि किमपि गदितुकामापि दुःखभरनिरुद्धाक्षरा विलापमेव सल्लापपदे समभिषिंचंती प्रणिपातमात्रदर्शितादरा धरातलदत्तदृष्टिः तस्थौ।

मरुन्मालस्तावदेनामीदृशीं निरीक्ष्य शोकभराभिभूतोऽप्यपरित्यक्तपुरुषस्वभावो दमितामितदुःखतया कंठतलदम्यमानाक्षरः कथं कथमप्यम्ब! यद्यपि वाचाप्यवर्णनीयं दुःखमनुभूतवती भवती। तथाप्यधुना अभिधीयमानमवधारय मदीयं वचनम्। इह जगति लब्धजन्मा कोऽपि निरंतरं सुखपरंपरां नैवानुभवति। किंचानुभूयमानं तदपि दुःखसंवलितमेव। यदिह निरंतरं चिरंतनसुकृतविशेषाद्विषयबृन्दमनुभवति कोऽपि सुखमिति धिया कृतामितसुकृतः कृती निरतिशयशर्मनिवेशं सौदामनीसमानतनुकांतिभिस्सुरकांताभिः कांततरं त्रिदशालयमितः प्रयातो वाचामगोचरं दिव्यमनुभवन्नपि विषयसुखं क्षीणपुण्योऽहं पुनरपि प्रवेक्ष्यामि मर्त्यलोकमेव हंतेति चिंतयन्निरंतरं ततोऽप्युत्तममदृष्टचरं विषयव्रातमितरानु-

भूयमानं निर्वर्ण्य निर्निवार्यमात्सर्यविशीर्यमाणहृदयश्च दुःखेनैवानुभुङ्क्ते स्वर्गसुखमपि। तदनवरतमपि स एव सुखी ; यश्च प्रशांतमनाः मनागप्यस्पृष्टान्यशुभद्वेषदोषस्त्रिविष्टपमपि तृणाय मन्यमानो लब्धतुष्टिर्विष्टरश्रवःप्रकृष्टपदपंकेरुहविनिहितस्वांतः कालयापनपरो वरीवर्ति । तदिदानीं दृगासेचकसौन्दर्यं निराकृतशंबरारिसौन्दर्यवैभवं वसुंधराधिपवृंदवंद्यमानचरणारविंदं प्राज्यराज्यलक्ष्मीप्रणयपात्रं पुत्रमवलोकयंत्यतीतामखिलामपि विस्मृत्य क्लेशपरंपरां कुमारशुभोदर्काशंसनपरा भवतु भवतीति न्यवेदयत् ।

तदनु चारुवक्त्रोऽप्यंब ! स शठो वृषस्कंधः प्रदीप इव स्वप्रकाशमेवाशंसमानः स्वप्रभया सकलजननयनमावर्जयन्प्रपूर्णं स्नेहमपि क्षपयित्वा स्वाश्रयमपि विनाश्य स्वयमपि क्षयिष्णुरभवत् । तत्किमितोऽतीतवृत्तानुशोचनेन । स्थितिमिदानींतनीं अनुस्मरंती विस्मृतचिरंतनक्लेशपरंपरा भवितुमर्हतीति निवेद्य प्रणिपत्य च निजपटनिकेतनमेव मरुन्मालेन समं प्राविशत् । अथ विभीतकः प्रविश्य विष्टरे निषण्णं हीरमणिखचितमकुटमंडितोत्तमांगतया रोहिणीताराधःप्रदेशगतं सुधांशुमंडलमिव मुखमंडलमुद्वहंतं मृगमदतिलकालंकृतललाटफलकं पट्टबन्धनकृते मानरेखाचिह्नितमिव दधानं हीरकुण्डलप्रकीर्यमाणविविधभासुरवर्णसंकीर्णकिरणगणबंधुरतया समालिखितेन्द्रचापमिव कपोलफलकं बिभ्रतं, मरुन्मालं प्रति किमपि भाषमाणतया प्रसृमराधरकिसलयारुणिमशबलितरदनरुचिभिः वक्षस्स्थलविलसद्धारुत्मतरत्नं शारवर्णमिव कुर्वंतं भुजशिखरविराजमानराज्यलक्ष्मीपादांगदाभ्यामिवांगदाभ्यामलंकृतभुजदण्डं कनकमयकवचाश्लिष्टं डोलायमानपृथुलमौक्तिकमालालंकृतं विशालं वक्षस्स्थलमुद्वहन्तं तनुतरनिर्झरपरीतसानुं रत्नसानुमिव प्रत्युप्तमरकतमणिमंजुलवलयालंकृताभ्यां पाणिभ्यां चञ्चरीकपरिगताभ्यां कमलाभ्यामिव विराजमानं भासुरैर्नवरत्नमयैरंगुलीयकैर्विविधवर्णकुसुमैर्नवपल्लवैरिव पारिजातं समलंकृतांगुलिपल्लवं प्रत्युप्तामलकफलपृथुलामलमुक्ताफलया चतुरश्रेणानत्यायतेनेंद्रनीलफलकेन

समलंकृतमध्यभागया हेममय्या मेखलया समालिंगितावलग्नं समुद्धतहाला-हलोभयपार्श्वकन्दलितया धवलपृथुलबुद्बुदमालया समावेष्टितमध्यं मथन-कालिकं दुग्धाब्धिमिवागुल्फासक्तेन भुजगराजनिर्मोकनिर्मलेन चामीकर-तंतुरचितपत्रभंगतरंगपर्यंतेन कौशेयचंडातकेन मंडितोरुदंडं तनुतरेण सर्षप-प्रमितभासुरहीरमणिमयेन वलयेन अंचितदक्षिणचरणं मृदुलतरपादपीठ-प्रतिष्ठापितवामपादं नंदकुमारकरतलमिव धृतलंबमानगोस्तनं कौशिकयज्ञ-वाटमिव प्रतिभटविग्रहभयानकसुबाहुं, हिमांशुमिव नक्षत्रमालामनोहरं समीकनिकटदेशमिव कटकपरिष्कृतं नंदनवनमिव हरिचंदनांचितं, वसंतमिव तिलकोपकंठपरिभ्रमद्भ्रमरकं चक्रवर्तिनमपि कंचुकिनं चारुवक्त्रमपश्यत् ।

दृष्ट्वा च कृतांजलिपुटः स विभीतको देव ! सर्वेऽपि भूवल्लभाः निजवाहनाधिरूढाः भवदागमनमेव प्रतिपालयन्ति । पारियात्रकनामा गजराजोऽपि द्वारि सज्जस्तिष्ठति । धामनिधिरपि देवस्य यात्रोत्सवदि-दृक्षयेव निजकरधवलीकृतांबरभासुरः तारापथमधिरूढः इति सप्रश्रयं सगम्भीरं न्यवेदयत् । तदवकर्ण्य चारुवक्त्रो मरुन्मालमवलोक्य किमु यामो राजधानीप्रवेशायेति पृष्ट्वा तेनाभ्यनुज्ञातश्च समुत्थायासनात्पार्श्ववर्तिनं मलयवातमादिदेश । तथा कर्तव्यं भवता यथा च यात्रोत्सवावसरेऽस्म-ज्जननी शुभ्रकौशेयावगुंण्ठितां शिबिकां समधिरूढा पश्चादनुव्रजेत् । सोऽपि पापीयान्वृषस्कंधः चरमांगनिबद्धबाहुयुगलः चरणाभ्यामेवास्म-त्पुरतः समागच्छेत् । इति ।

आदिश्य च पटनिकेतनान्निर्गत्य द्वारि स्थितं समुत्कीर्णनक्षत्रेश-चित्रभानुचित्रेण विचित्रपत्रभङ्गविच्छुरितेन कनकविततफलकेनाच्छादित-विशालललाटदेशं सिंदूरालिखितलताविशेषपरिमंडितगंडमंडलं कर्णताल-चाल्यमानावचूलनकलापं स्कंधदेशादापादमांदोलितपृथुलमुक्ताफलकलापं कर्णमूलतलनिहितनिशिततपनीयांकुशं, कलधौतशृंखलालंकृतग्रीवं, सुवर्णो-त्कीर्णकंठीरववदनप्रांतेन स्थूलतरेणात्यायतेन पट्टमयेन बंधूककुसुमरक्तेन

कुथेनावगुंठितसर्वगात्रं विचित्रतरचामीकरसालभंजिकापुंजमंजुलस्तंभेन स्तंभोपरि समुत्कीर्णसुवर्णकेसरिणा केसरिपृष्ठप्रतिष्ठापिताष्टापदाच्छादनेन, तदुपरिघटितजातरूपपंचकलशांचितेन वितानितविततसितकौशेयेन, परितः पर्यंतडोलायमानमौक्तिकमालाकलापतोरणेन समास्तीर्णशशोदरलोममृदुल-कुथालंकृतमध्यतलेनानत्युन्नतेन मंडपेनाविरहितपृष्ठदेशं मुहुः परितः प्रसारितशुंडादंडं, विपुलपादांगदालंकृतांघ्रिस्तंभं, उत्सवसमुचितालंकारालंकृताभ्यां आधोरणाभ्यां सनाथोभयपार्श्वं, लंकानगरमिव विपुलकुंभकर्णं, दुर्योधनसभांकणमिव गांगेयालंकृतं, स्तेनमिव शृंखलावलितचरणं, मातंगमपि राजसेवितं सन्निहितदानवारिद्विसमपि दूरीकृतहरिसान्निध्यं, करिवरं पारियात्रकं ददर्श।

मरुन्मालस्तदानीं मदावलावलोकनैतानं तं चारुवक्त्रमकथयत्। कुमार ! तमेनं भवत्तातपादौपवाह्यं प्रशस्ततमं हस्तिनमधिरुह्य पुरप्रवेशोत्सवमनुभवतु भवान्। यश्च मंदांदोलितचालितघंटाघोषेण वारणनामभागपि अन्यैरनिवार्योऽहमिति निगदन्निव नतपृष्ठप्रतीकतया समुन्नतपूर्वकायतया च पातालतलात् भवदुद्वहनाय समुद्गच्छन्निव दिग्गजः मुहुः मुहुः परितः प्रसार्यमाणशुंडादंडतया भवद्वहनभागधेयमधिगतवतः स्वस्यावलोकनाय दिगंतदंतावलावलिं आह्वयन्निव दीर्घतरपृथुलावदातदंतकुंतकैतवेन दधदिव वदनतले गिलनायैरावतचिरार्जितयशःपुंजं पुष्करतलविकीर्यमाणशीकरनिकरतया नवजीमूतसच्छायतां प्रकटयन्निव विलसतीति।

तदनु समारोहणसौकर्यापादनायाधोरणे तं पारियात्रकं समुपवेशयितुमुद्यते, स चारुवक्त्रस्स्तोकमिव पाणिमुदस्य मेति संज्ञयैव निवारयन्नुपसृत्य स्थूलकनकवलयालंकृतौ दंतमुसलाववलम्ब्य पाणिभ्यां समुल्लंघ्य च भुजबलाद्विस्मयमुपजनयन् सर्वेषां क्षणादेव समुपाविशत्तस्मिन् मंडपे। उपविशति च तस्मिंस्तत्क्षणं विचित्रतराणां श्रोत्रहारिणामश्रुतपूर्वाणां

अनवद्यानां वाद्यानां तद्विद्यापारगैराध्मातानां निर्ह्रादाः निष्कलंकस्य चारुवक्त्रमुखचंद्रस्य दिदृक्षया समागतैरुद्ग्रीवैः कुवलयवनैरिव सैंधवसैनिकानां असंख्यातैरसितकांतिभिः अतिक्रांतनयनपथैर्भल्लैस्समं समुदचरन् ।

अथ चारुवक्त्रवक्त्रसुधांशुदर्शनादिव कुड्मलीभूतकरसरोरुहैः तुरंगमाधिरूढैः परस्परभाष्यमाणचारुवक्त्रसौंदर्यातिशयैः मंथरतामापादयितुं धवलतलपिहितकरतलाकृष्टखलीनतया पदेपदे चालितकेसरकलापां कंधरामुदस्य फेनाकुलितां प्रसार्य च रसनामुच्चलतो निजतुरंगमान् करतलास्फालनेन बलादायत्तीकुर्वद्भिः नरपतिभिः परिवृते चारुवक्त्रे प्रस्थिते च वैजयन्तीं मंदमारुतांदोलितायतसरोवरतरंगपरंपराडंबरहारिणि सर्वाण्यपि बलानि चेरुः । एवं पुरतः पश्चात्पार्श्वयोश्च समतिक्रांतनयनपथानि गजरथतुरगपदातिमयानि बलानि क्षेत्रपालस्समधिगतोन्नतदेशः केदारनिबिडप्ररूढफलेग्रहिसस्यजालानीव सहर्षमवलोकयन्नटवीमिव सालावृतामरुणप्रभामिव निशांतदर्शनीयां कांततरायतकायमानालंकृतशृंगाटकामुद्दंडदंडवैजयन्तीं वैजयन्तीं प्रविशन्वादित्ररसितावकर्णनादुत्सवदिदृक्षया ससंभ्रमं प्रतिहर्म्यं स्थलाक्रमणाय समापतंतीनां पौरविलासिनीनां नर्मालापानेवमशृणोत् ।

अयि ! नितंबिनि ! विधुमिव गुरुकलत्रसक्तं कांचीदाम समुत्कुरु । व्यामग्राह्यपयोधरे ! दूरमपसर । भवत्पयोधरभरभुग्नभुजशिखराऽस्मि । नीलवेणि ! कस्मै कुप्यसि ? कृष्णभुजंगमभोगभ्रांत्या ते कर्षति वेणीं गृहमयूरः । गुर्विणि ! किमु मुधा जनसम्मर्दप्रवेशेनात्मानमायासयसि । सौदामनि ! क्षणमिवेन्द्रनीलभित्तिमवलंब्य स्थित्वा नवपयोधरोदरविलसत्सौदामनीडंबरमपहर । मालति ! मालतीकुसुमपरिष्कृतं धम्मिल्लमवगुंठय सिचयांचलेन । तत्सौरभसन्निहितो मधुकरनिकरः समाटति मत्कर्णाभ्यर्णे । भासुरकर्णिके ! मुखकमलं ततः परिवर्तय । भवत्कर्णकर्णिकाहीरमणिगणप्रसृमरः किरणनिकरो मन्नयनमार्गस्यार्गलीभवति । उज्ज्वल-

कोमलकपोले ! तिष्ठ तावत्क्षणमिव निश्चला । यावत्ते कपोलदर्पणे मन्मुखमवलोकयन्ती समीकरोमि विलुलितं तिलकम् । भ्रांते ! इत एहि । भित्तितलघटितायतमुकुरतलपतितमात्मनः प्रतिबिंबमेव याचसे मार्गावकाशम् । पक्ष्मलाक्षि ! राजकुमारमेनं वशीकर्तुमलिकतलकुटिलीकृतभ्रूचापलता किमु प्रयुंक्षे पञ्चशरस्य पञ्चमं सायकं अपांगवीक्षणकैतवेन ? गुरुजनभीते ! द्रष्टव्यमवलोक्य निश्शंकं सफलीकुरु नयनवैपुल्यम् । असित नयने ! किमिदं नरपतिकुमारावलोकनेन ते चक्षुरभिरागाक्रांतम् ? तरलिके ! वेश्मनि डोलाशायितं शिशुमनुस्मृत्य मुक्तालतेव तरलहृदया नैव पश्यस्यदृष्टपूर्वं सार्वभौमम् । चारुहासिनि ! पश्य तावत्कोऽपि कमनः कमनीयवेषो भवदवलोकनाय क्षौमदेशदत्तदृष्टिः मार्गगामी परेणाभिपतता संघट्टितः समुपालब्धश्च कृतमुखविकृतिः परावर्तते । नीलकुंतले ! कुंतलमुल्लासय जनसम्मर्दविलुलितम् । मदिरेक्षणे ! समवेक्षस्व । पुरोवर्तिनो जनाः पथि परिसरपर्यटत्घोटकखुरकोटिसंघट्टनभिया कृतमुखविकाराः निजपृष्ठवर्तिनि जनसंघे विलीना भवंति । कोमलहृदये ! किमु मुधा खिद्यसि ? बद्धभुजयुगलं विलोक्य नतमस्तकं पदातिमध्यगामिनं वृषस्कंधं । निजकर्मानुगुणं फलमनुभवत्ययम् । अहो ! समायातोऽयमैरावतारूढः पुरंदर इव राजकुमारः । यदस्य दर्शनादनिमिषास्संवृत्ता वयम् । हंत ! वरमालिन्या पुराकृतस्यावदातकर्मणः फलमिदम् । यदीदृशं अनिर्वचनीयसौन्दर्यमसूत कुमारम् । नूनमस्यावलोक्य सौन्दर्यं मन्मथस्त्रपयागमदनंगताम् । हंत ! तपस्वी विमतकेसरी पुत्रमीदृशमनवलोक्यैव परलोकं गतः । धन्या खलु राज्यलक्ष्मीः । यदस्याधिरोहति भुजशिखरक्रीडाशैलशिखरम् । इतः परं वसुमती पातिव्रत्यधर्ममनुतिष्ठति । यदेनमाप पतिम् । धन्या च गरीयसी नगरीयम् । यदस्य राजधानी । कीदृशं प्रजाभिर्विरचितं तपः ! यतस्ताः कुमारमेनमनुभवंति राजानम् । हंत ! कृतनिरतिशयसुकृतान्यस्मनयनानि । यदेनं चिरंतनमयं निरंतरं निर्निमेषमवलोकयंति । किमयमुप-

असिलतावतंसितांसतलैश्चतुर्भिरंगरक्षकैरभिरक्ष्यमाणोभयपार्श्वभागो वंदिबृंद-परिपठ्यमानमनोहरविरुदावलिमुखरितपुरोभागो नीरवं गभीरतरं निश्चंचलं च स्वस्वस्थानेषु पंक्तिशस्स्थितान्मुकुलितकरसरोरुहान्सभास्तारान्कटाक्षेणैव संभावयंस्तपनीयसोपानपरंपरामनोहरं शिखरघटितमुक्तातपत्रापहसितफणि-पतिफणामंडलाभोगवैभवं स्पृहणीयनवरत्नमयविचित्रपुत्रिकापंक्तिसमाकृष्ट-सकलजननयनहृदयहृदयंगमं हेममयोद्दंडदंडपाणिभिर्मेचकविशंकटकंकटक-कमनीयनिभृतकायैः पीतपट्टपट्टिकाकल्पितमेखलावेष्टितावलग्नैः पृथुलपाटल-हाटकांचलोष्णीषैरष्टभिर्भटैः परिवृतं सिंहासनमारुरोह ।

अधिरुह्य च श्रोत्रियकरावर्जितशातकुंभकुंभपूततीर्थोदकैरभिषिक्तो मंगलवेषाभिः कन्यकाभिश्च प्रोक्षितश्चिरत्नरत्नदीप्रकोटीरपरिष्कृतोत्तमांगः सामंतनरपतिमकुटकोटिपद्मरागराजिनीराजितचरणनखराजिः परिगृहीतमही-भृदुपग्राह्यः सुधर्माधर्मासनाधिरूढो बिडौजा इवामितौजा रराज स राजा ।

इति श्रीयदुशैलवासि, वालधन्विकुलकलशजलनिधिकलानिधि, विद्या-
विशारद, संस्कृतसेवासक्त, कविकुलतिलक, राज्यप्रशस्ति,
राष्ट्रपतिप्रशस्तिपरिष्कृत, श्रीमहीशूरनाल्वडिकृष्णभूपसुवर्ण-
पदक—साहित्यपरिषद्रजतपदकसमलङ्कृत—जग्गुवकुल-
भूषणमहाकविविरचितायां, जयन्तिकायां
द्वितीयलहरी सम्पूर्णा ॥



## ॥ तृतीयलहरी ॥

अथ कदाचित्स चारुवक्त्रो मृगयोचितवेषस्तदनुगुणपरिकरपरिकर्मितैस्तुरगवराधिरूढैः कतिपयबलैः परिवृतः तुषारसारविरचितमिव कलानिधिकलाकल्पितमिवामृतक्षालितमिव मल्लिकापरागपरिलुठितमिव विमलतरचीनांशुकावगुंठितमिव समुद्धूलितघनसारक्षोदमिव क्षीरोदधिवीचिच्छटास्नापितमिव मुषिताद्विशेषभोगसुषुममिव सुधांशुमयूखकलापसंमार्जितमिव सुरापगाफेनपरिलिप्तमिव पटीररसमचर्चिकाचर्चितमिव शरदभ्रकवचितमिव धवलतरैरावतदंतच्छेदघटितमिव शुचिरुचिररुचिपरिगततया विशदतरतिरस्करिणीतिरस्कृतमिव स्फटिकसदनमध्यगतमिव सुधारसस्नापितमिव लावण्यानामाकरं सुलक्षणानामावासस्थानं नैल्यानां प्रत्यादेशं धवलिम्नां कुलभवनं तिरस्कुर्वत्पर्वतारिमहार्वसर्वगर्वं महापुरुषप्रमाणमतिविनतानंदनगंधवहमनोजवं पृथुलमुक्ताफलमालाकलितकंधरं धरातलकुट्टनैकतानखुरपुटं महावदातनामानं तुरगवरमधिरुह्य मृगयायै जगाम महारण्यम् ।

प्रविष्टे च तुरगखुरपुटघट्टनचूर्णीकृतपथधूलिपटलोद्धूलितगगनतलं तुरगरयप्रसरणशीलशुष्कपर्णसमाकीर्णपर्यंतं निबिडतरतरुनिकरशाखाशिखरांतरप्रसृमररविकिरणतया सितासितस्थपुटितपथं कांतारांतरं, भयविततनेत्रेषु कुरंगसंघतरंगेषु परिप्लुतिवेगेन गिलत्स्विव गगनतलं परिधावत्सु, भल्लूकेषु रोषफूत्कारगलल्लालाजलशीकरसिक्तनासातलेषु लीनेषु कुंजपुंजोदरे, शार्दूलेषु च भयामर्षतरलितपिंगललोचनेषु चालितदीर्घतरवालेषु धावंधावं गिरितटसमुल्लंघनपरेषु, बृंहितप्रकटितामर्षेषु त्वरितप्रचालितकर्णतालेषु फूत्कारप्रसरन्नीरशीकरार्द्रीकृतपुष्करेषु सार्भकं प्रधावत्सु स्तंबेरमयूथेषु, दीर्घदीर्घनिश्वासगलच्छिखाणकलुषितनासापुटेषु वनमहिषेषु रोषकषायितस्थूलायतनेत्रेषु सुदरं प्रधाव्य निष्कंपकर्णं निश्चलतारं च पश्यत्सु, समाकुंचितजानुषु

गवयेषु समुल्लंघनदर्शितवेगेषु, पल्वलकर्दमक्रीडामपहाय सचीत्कारं संघशो धावनपरेषु वराहेषु, क्रोधसाध्वसनिर्दयोद्धूतविलुलितव्रततिततिवलयितमुख-तटशृंगेषु खड्गमृगेषु, किचकिचात्कारप्रकटितभयेषु लंघनोद्वल्गनप्रचालितताराविटपिविटपकोटिषु मर्कटेषु, भयपरिप्लुतिवेगगतिशशनिकरग्रहणव्यग्रेषु गगनतलडयनपरेषु श्येनगृध्रनिकुरुंबेषु, साध्वसगर्जनतर्जितजर्झरितवनपशु-विशेषहृदयेषु समुल्लंघनप्रकटितकायलाघवेषु चित्रकायेषु, निद्रोत्थिततया द्विगुणितपिंगलिमभयानकदीप्रनेत्रेषु जिह्वांचलसमालिह्यमाननासातलेषु गुहोदरप्रसृमरप्रतिरवद्विगुणितनादेषु क्रोधाभिमुखदत्तदृष्टिषु केसरिनिकरेषु, तरु-शिखरसमुड्डीनविविधविचित्रपतत्रिनानाविधनाददंतुरेषु दिगन्तरेषु,

विचित्रतरमृगचर्म वसानैरनवरतमपि दुर्गदुर्गममार्गपरिभ्रमणकठिनतर-किणस्थपुटितजंघाकाण्डैः विकर्तनकर्कशातपकृतसंचारतया कालरात्रिसंका-शकायकांतिभिः निरंतरधनुर्ज्याकर्षणकर्कशकरतलैरंसतलघटितधनुर्दंडरर्ध-जग्धसाचीकृततांबूलपिंडपरिपुष्टकपोलगर्तैश्चित्रकायचर्मकृतोष्णीषैः किरातैः प्रसारितवागुराभ्यंतरपतितानां वनकुसुममालिकोद्बद्धधम्मिल्लाभिर्विचित्र-प्रसूनाकलिताकल्पाभिः पीनपयोधरोद्बद्धधवलांशुकपरिकराभिर्जानुतलो-द्बद्धनिबिड-पाटलचेलाभिश्शार्दूल-चर्मपट्टिकाकृतमेखलाभिर्घर्घर-रवमुखरित-पृथुलरजतपादांगदाभिश्शरासनपाणिभिस्स्पृहणीयतारुण्याभिः यवनीभिः क्रमशः प्रदर्श्यमानानां वनसत्वानां साध्वसक्रोधकंदलितांश्चेष्टाविशेषानव-लोकयन्परिजनानादिदेश ।

विमुच्यंतामेते मृगा वागुराबंधनात् । काल्यंतां कौलेयकास्तान्प्रति । विस्तार्यंतामन्यत्र वागुराः । छिद्यन्तामच्छभल्ला भल्लैः । निष्कास्यन्तां कासारात् कासराः । चित्रकायानामर्गलीक्रियंतां सारमेयाः । प्रबोध्यन्तां गुहासु प्रसुप्ता मृगाधिपाः । पात्यन्तां खड्गेषु खड्गाः । वध्यंतां शार्दूलाः । छिद्यन्तां चमराः । उच्चाट्यन्तां शशव्राताः । ताड्यंतां पटहाः । पाल्यंतां कुरंगाः । बध्यंतां गवयाः । रुध्यंतां मतंगजाः । इति । एवं समादिष्टाश्च

भटाः समुपक्रांतमृगयाव्यापाराः पश्यत कण्ठीरवकण्ठारावकुंठितोपकण्ठमिदम् । निशितशल्लीशलाकासमाकुलितमिदम् । पर्यटत्करटिपटलामर्दितलतागुल्ममिदम् । लुलायकर्दमितकासारमिदम् । वातायुरोमंथफेनपिंडषंडमंडलमिदम् । शिखावलचन्द्रकचयनिचितमिदम् । सूकरमुखाचिरविदारितमृत्तिकामयतलविकीर्णकन्दबन्धुरमिदम् । धावितशशनिकरचरणांकितमिदम् । शार्दूलाचिरनिहतकुरंगरुधिरारुणितमिदं स्थानमिति परस्परं दर्शयन्तः हन्त ! समुल्लंघितशरलक्ष्योऽयं कृष्णसारः । शिलीमुखहतिवेदनासहिष्णुतया सचीत्कारं क्षितितलनिखाततीक्ष्णतरदंष्ट्रोऽयं वराहः, वसुन्धरोद्धरणाय कृतप्रयत्नमादिवराहं विडम्बयति । सारमेयनिरुद्धस्सालावृकोऽयं ससाध्वसं निजोरुयुगलांतःप्रवेशितवालः कृतमुखविकृतिः प्रलीयते कुंजोदरे । शरानुविद्धश्शार्दूलोऽयं रोषातिरेकादभिपतति । तदपसर । अमर्षदुर्धर्षहर्यक्षलंघितोऽयं मृगयुः । तत्क्षिप्रं विमोचय तं करवालनिपातनेन । पश्य, वक्त्रगृहीतपृथुलशशस्समायाति कौलेयकोऽयं भवदुपकण्ठम् । अहो ! नीलकंठकंठमपातयत्प्रयुक्तोऽयं क्षुरप्रः । लुलायकठिनकंठपीठनिखातं करवालमाच्छिद्य देहि तावत् । निहतशल्येन मया युधिष्ठिरचरितमाचरितम् । करखड्गेन वनखड्गः पातितः । मा प्रहिणु बाणं संमर्दसंत्रासाचिरप्रसूतपोतायामनुकंपनीयायां हरिण्यां । तज्जीवग्राहं गृहाण तं पोतम् । वात्सल्यातिरेकादनुवर्तते सा हरिणी । हन्मि चर्मणि द्वीपिनमेतम् । किन्तु खल्विदं पश्य तावद्दिवाप्यर्धचन्द्रोऽयमृक्षगणमनुव्रजति । प्रद्युम्नः इव सायकेन पातयाम्यहं शंबरमित्यहमहमिकया व्याहरंतः प्रशमितवनसत्वसंचाराः सोत्साहमटवीमभितः पर्यटन् । चारुवक्त्रस्तु तुरगाधिरूढः सकौतुकं तत्रतत्रावलोकयंश्चललक्ष्यवेधनपाटवं प्रकटयन्साध्वसदूरगतविवलितकंधरावलोकनैकतानमृगाधिपं कंदरोदरदरनीरवनिलीनभूदारं संत्रस्तकुंजपुंजोदरगूहमानदूरपरिधावनखेदपरिस्फुरदुदरपार्श्वश्रांतशार्दूलं परिभ्रष्टयूथगवेषणव्यग्रकांदिशीकदीनकुरंगं निजार्भकानवलोकनकंदलिततार-

तारदीनरावदयनीयकुंजरं सावेगसंभ्रमं परिभ्रमणैकतानकलभचीत्कारं निहत-क्षितितलविनिहितशशविसरापहरणपरिपतत्कंकश्येनकुलं मृगयुकुलकलकल-रसितत्रस्तडयमानविचित्रपतत्रिव्रातदीनताररावमुखरितं प्रताननीवितानांतः-प्रविष्टसाध्वसपरस्परलीनभल्लूकं रोषातिशयदुर्निरीक्षनतकंधराभिपतत्कासर-कठोरनिर्घोषभयंकरं कंटकबहुललतापटलविवरनिषण्णजिह्वाग्रालिह्यमान-बाणक्षतक्षरद्रुधिरारुणस्कंधचित्रकायं प्रतिघातिघोरास्फालितशुंडादंडभज्य-मानविशंकटविटपपटलचटचटात्कारदुर्निरीक्षयूथपं मृगयुगणदर्शनकांदि-शीकसन्निहितवातायुगलरुधिरपानसुहितवृकं कांतारं परितः पर्यटन्घोटक-खुरपुटपटुतररटितमाकर्ण्य विचित्रप्ररूढप्रसूनप्रकरमंजुलात्कुंजपुंजाद्भिया समुलंघ्य वाजिजवविजिगीषयेव प्रधावन्तं बंधूककुसुमसुवर्णमसृणस्पृहणीय-ततसितस्थासकनिचितकायं स्तोकमिव विवल्य कंधरामुत्पश्यन्तं मेचक-सच्छायतरलितविततनेत्रं साध्वसपिंडीकृतपृष्ठभागं समुत्पतनकृतांतरिक्ष-बहुलप्रचारं हृदयंगमाकारं कुरंगमेकं निरीक्ष्य तज्जिघांसया तरललक्ष्य-वेधनपाटवप्रदर्शनेच्छया च पार्ष्णिताडनद्विगुणितवाजिजवो ज्यायोजिता-जिह्मगस्तमनुदुद्राव । एवंप्रधावितसैंधवोऽतिक्रांतसुदूरवर्त्मतया महीरुह-निवहेषु दृश्यादृश्यशरीरं रोहिषं रोषपोषिताभिनिवेशः क्षितीशः सुदूरं धावंधावं समतिक्रांतकांतारांतरं प्रविष्टं कुसुमपटलनिकटपर्यटच्चंचरीकमंजुलं कुंजपुजं दृष्ट्वा रोषातिरेकादाकर्णाकृष्टशरासनगुणो दशनदश्यमानाधरो निशिततरं शरमेकं प्राहिणोत्तत्प्रवेशविवरं प्रति ।

तदनंतरमवरुह्य तुरंगमादनोकहमूलतले निबद्ध्य च तं मृग-जिघृक्षया क्षितीशः कतिचित्पदानि गत्वा करांशुकेन मुहुर्मुहुः श्रमसलिल-कोरकितं मुखतलं संमार्जयन् "सोढुं न प्रभवामि वेदनां सखि! किंजलिके! हंत! अकांड एव कांडहतास्मि। भिनत्ति मर्म। गता मे जीविताशा। किमद्य कर्तव्यम्। दृढतरं गृहाण मां। शयानामप्युत्थापयति संतापः। पश्य रसना मे नीरसा संजाता। लोचनं तिमिरयति। कंपते च शरीरम्।

वागपि नैव साधु निस्सरति। तदवधारय तावदिदानीं कृपया चरमामिमां मदीयां प्रार्थनाम् । तापसावतंसे मम ताते दीर्घसत्रे प्रेमातिशयेन वा मोहेन वा स्वातंत्र्येण वा दरातिशयेन वा निरतिशयपरिचयेन वा निरंतरसान्निध्येन वा संस्तुतसौलभ्येन वा प्रमादेन वा करणत्रयविरचितं मदीयं यदागः तदखिलमप्यज्ञानविजृंभितमिति अनुक्रोशेन मर्षणीयमिति मद्वचनान्निवेदय तस्मै । किंच स्नेहातिरेकेण त्वयि यदनभिप्रेतं समाचरितं मया तदखिलं क्षमस्व त्वमपि। समुत्क्रमणोन्मुखप्राणास्म्यहम्। यावन्मनसा चिंतितं महात्मनश्चारुवक्त्रस्य पवित्रं चरित्रं तावदेव फलम् । स तु न मामलभत। नाहमपि तम्" इत्यादीन्दीनदीनान्विलापान्नारीकंठसमुचितान्निशम्य सावेगं का स्विदबला मन्नामगर्भितां गिरं व्याहरन्ती दीनदीना रोदितीति कंपितहृदयः अपि नाम मे सायकस्य कापि तापसी शरव्यमासीदिति सीदन्नात्मानमेव तस्करमिव मन्वानः त्वरया नतपूर्वकायः प्रविश्य दुरवगाहकुंजोदरविवरं मन्दंमन्दमुपसर्पन्नवनीतले निपत्य परिलुठंतीमवदातवन्यकुसुमदामालंकृतवक्षोजमंडलां प्रसूनवलयपरिमंडितमणिबन्धां निशिततरसायकसनाथदक्षिणोदरपार्श्वां हा! सखि! किमद्य कर्तव्यम्। हन्त! धृतप्राणया पापया मया तावत्त्वदीयं कष्टं द्रष्टव्यं संवृत्तम्। हा! प्राणानिव किमु मामपि त्यक्ष्यसि। कथमितः परं भवतीं विना महानतिवाह्योऽयं मया कालः। इति प्रलपंत्याः किंजलिकायाः अंकतले विन्यस्तमस्तकां विलुलितचञ्चलकुंतलां शिथलितधम्मिल्लमल्लां वेदनासहिष्णुतया कुटिलितभ्रूलतां अपांगप्रणालिकानिस्सृताश्रुजलक्षालितश्रवणयुगलां निश्वासश्यानितमधरपल्लवमसकृदालिहन्तीं जिह्वापल्लवेन शरहतिबाधया मुहुर्बाहुलते क्षितितले निपातयन्तीं धरातलप्रसारितचरणयुगलां कामपि सुन्दरीमद्राक्षीत् ।

दृष्ट्वा च मनस्येवमचिंतयत्। का स्विदियम्? किमेषा निजवल्लभप्रतीकसंपादनेच्छया धृततापसवेषा तपस्यन्ती रतिः? उत सुशरीरं चरन्ती

वनलक्ष्मीः ? आहोस्विच्छापवशादाश्रितधरातला सुरसुन्दरी ? अथवा भूलोकरामणीयकावलोकनाय रसातलादुत्थिता नागांगना ? आहोस्विच्छुक्तौ मुक्तेव कस्यां चित्तापस्यां समुत्पन्ना ? हंत ! अन्यदेव लावण्यम् । सौंदर्यमन्यदेवास्याम् । धिगीदृशं स्त्रीवधकारिणं मामिति विचिंत्य चानुकंपाकंपमानचेताः क्षमस्वापराधमजानता व्यसनैकरतेन मया विरचितं तावदिति ससाध्वसगद्गदं निगदन्बद्धांजलिपुटस्सविनयं शनैरुपससर्प । उपसृत्य च ननु सुतनु ! अज्ञानविजृंभितमिदम् । किं बहुनोक्तेन । समार्जितं किल मया स्त्रीघातुकत्वम् । धिङ्माम् । निगदंति किल विबुधाः मृगयां व्यसनमिति । तत्तावत्प्रत्यक्षीकृतमिदानीम् । कृतकर्कशकर्मापि नृशंसतयाहं तु निस्त्रपः प्रदर्शयामि मुखमिति सानुतापं वदन्स्वात्मनि प्रलीन इव धराविवरं प्रविशन्निव मन्दं तन्निकटएवोपविश्य कृतशैत्योपचारो वीजयन्वस्त्रेण, हरिणेक्षणे ! जानामि ते बलवती वेदनेति । तथापि भवदुदंतश्रवणकूतूहलं तावत्प्रेरयति मामनुयोगमुखेनाभाषयंति । तदिदानीं नातिश्रमं निवेदय । श्रोतुमिच्छामि । का त्वमुत्पत्त्या । कस्य कुलमलंकरोषि । कुतो वा वनवासः ? कुतश्चायं वेषः ! यद्भवदाश्रयाद्धृदयंगमतां भजति किं तन्नामेत्यप्राक्षीत् ।

पृष्टा च सा कृच्छ्रादुन्मीलिताश्रुसलिलकलुषितनयनकुवलया समवलोक्य राजानमाजानुबाहुममितानंदसंधुक्षितचेतश्शक्तिविशेषा किंजलिकामब्रवीत् । अयि ! किंजलिके ! पित्रा दीर्घसत्रेण पुरा यद्यदभिहितं लक्षणं तत्सर्वमपि लक्षणं तदिह परिदृश्यते । स्तनितमिवातिगभीरं भाषितम् । यदयमेव भवेत्स चारुवक्त्रः । यदवलोकनेन निरतिशयानंदामृतक्षालितवेदनमनिर्वचनीयप्रसादमधिगच्छति मे चेतः । भवतु तावदेतन्मुखेनैवावगच्छामि सकलमप्येतदुदंतमित्यभिधाय मन्दं विवलितकंधरा नेत्रसहस्रपत्रपिशुनितत्रपाविशेषा चारुवक्त्रमवलोक्य भद्र ! समुत्थातुमक्षमतया वेदनापरवशसकलप्रतीकतया च शयानैवाप्रतीकारानुशया निवेद-

यामि। तत्क्षंतुमर्हति भवान्मंतुं मदीयम्। माभून्मनसि चिंता प्रमादविजृंभिते कर्मणि। भवितव्यता तावदीदृशी मदीया। न हि दोषलेशोऽपि त्वयि। सविनयमिदमेकमभ्यर्थये। को भवान्? कुत्रत्यः? अदृष्टपूर्वोऽपि पितृमुखादवगतचारुवक्त्रलक्षणतया इदंप्रथमदर्शनोऽपि स एवायं चारुवक्त्र इति प्रत्यभिज्ञा परं समुन्मिषति मनसि। ममापरिचितोऽपि संस्तुत इव विश्वासं जनयसि। अपि नाम स एव चारुवक्त्रः त्वम्। संक्षाल्य वागमृतेन हृदयगतं संशयमित्यप्राक्षीत्।

पृष्टश्च स नरपतिः निरतिशयानुशयाश्रयाशतप्यमानमानसो निरंतरचिंतितदुरंतदुरितकर्मतया आत्मनि लीन इव सगद्गदं मातः! दुरितैकभाजनममुं जनं जगति चारुवक्त्रनाम्ना समाह्वयन्ति जनाः। इत्यभिधायाश्रुजलधारासिक्तांशुको दुर्निवारदुःखभरावनतमस्तको हस्तवस्त्रेण तां वीजयंस्तूष्णीमुपाविशत्। निशम्य च तद्वचनं नितांताश्रुमुखी सा तपस्विनी दीर्घमुष्णं च निश्वस्य नाथ! मंदभाग्यायाश्शृणु तावन्ममेदमु'दन्तं इति कृच्छ्राद्वक्तुमारभत। उन्मस्तकसत्वगुणैरिव पलितकेशपाशैरुपशोभमानस्य मस्तकस्य कंपकैतवेन मा भूत्कदापि दौर्गत्यदुःखमित्यसकृन्निराकुर्वन्निव वलिसमाकुलितेन भ्रुकुटितसितभ्रूलतेन नीडांतर्निषण्णपतत्रिभ्यामिव कुहरगतनेत्राभ्यां भयानकेनोन्नतहनुना गलितरदनतयानवरतमपि कंपमानाधरोष्ठपुटेन मुखमंडलेन विराजमानस्तिलकनिचितैरुल्लसत्सिरासंततिजटिलैः कीकसप्रायैरंगैर्दर्शनीयदर्शनो धमनाभिधो द्विजवरो दारिद्र्येण यवसाच्छादितपटले विशीर्णबद्धवंशांतरांतरा विनिहितमृत्पिंडेन कुड्येन परिगते स्थपुटितक्षितितले लूतास्यूततंतुपटलास्तीर्णकोणदेशे पर्यटन्मूषिककृतसुषिरदूषिते विविक्तैर्गलितपटलैर्निरंतरचुचुन्दरीकृकलासमुसलीविसरसंचारैस्तत्रतत्र निपतितभित्तिभिः प्ररूढविविधलतापटलजटिलितैः पंचषैर्भवनैः परिगते पार्थकरगांडीव इव स्तम्भीकृतस्थाणौ महानस इव दर्वीकरदंतुरे अविकृतविवरेऽपि विकृतविवरे कुटीरे नयनर्यया मया समनुवास।

अथैकदा तून्छवृत्त्या आत्मानं मां च पोषयन्तं तं धमनमपृच्छम्। तात! क्व मे जननीति। पृष्टश्च स धमन एवमवोचत्। वत्से! दुर्गततया मत्वा च द्वितीयाश्रममाश्रममाश्रितप्रथमाश्रम एव निरंतर-मुञ्छवृत्त्या भृतजठरपिठरोऽहमेकाकी कालमत्यवाहयमिति। पुनरपि नितांतचिंताकुलांतःकरणया मया तात! कथं मे जनिरिति परिपृष्टस्स धमनः सानुतापमकथयत्। वत्से! कदाचिदहं समिदाहरणायारण्ये पर्यटन्माकंदद्रुमबृन्दमध्यवर्तिनः कस्यचित्कोकिलालापवाचालितस्य रसालस्य चञ्चरीकचयचरणपातनिपातितैर्बालकलानिधिशंकया परितः परिगतैर्नक्षत्रैरिव कुसुमनिकरैरतिरमणीयं स्यन्दमानमरंदबिंदुसंदोहबन्धुरैः पत्रव्रातैर्दंतुरं कुड्मलगुच्छविच्छुरितप्रांतं मधुकरनिकरमधुररुतमुखरितं मूलतलमधिशयानमरुणतरशरीरतया निपतितचूतकिसलयशंकामुपजनयन्तं सृक्कतलनिपातितदर्भपल्लवकबलैस्सहुंकारमाघ्राणतत्परैः कुरंगनिकुरुंबैः परिवृतं कूजत्कोकिलालापकलरवं रुदन्तं चञ्चलकोमलारुणकरचरणकिसलयं सद्योजातमिव भासमानं शिशुं त्वां नातिदूरादपश्यम्।

दृष्ट्वा च सावेगं मनस्येवमचिंतयम्। हन्त! दृश्यते हि शिशुरयमचिरप्रसूत इव। बत! कया वा स्यादीदृशमतिदारुणं कर्म कृतम्। जगत्यपत्यप्राप्तये शरीरमपि तृणाय मन्यमानाः स्वाभिमतमशनमपि परित्यजन्तः कति व्रतैकरताः? कति वा पवित्रक्षेत्रतीर्थयात्रापरतंत्राः? कति च चिरसंचितद्रविणगणवितरणपराः? देवतासपर्यापर्युत्सुकमानसाश्च कति? नतेभ्यो न तेभ्यो ददाति नियतिः कदापि शिशुम्। ईदृशानां नृशंसानामेवापत्यसंपत्तिः। अथवा किमनेन विप्रतीसारेणासारे संसारेऽस्मिन्नेवंप्राया ह्यपत्योत्पत्तिः। तथा हि—दुर्गतास्समधिगतानेकतोकाः क्लिश्नन्ति तत्पोषणाय। विश्वस्ता अपि पूर्णतारुण्यपण्याः रहसि कृतेत्वरीचर्याः निजसाधुचारित्र्यप्रकटनाय लब्धमपि मुग्धं निजापत्यं परित्यजन्ति। हंत! स्त्रीणां चपलता निर्मर्यादा निर्निवार्या च। क्व भोजकुलं? क्व वा

कुरुकुलसम्बन्धः । तथापि पृथायाश्शीलमतिगर्हणीयं हि ! यदपुष्पवत्यपि संगम्य नीरदनेन तपनेन निर्घृणा स्पृहणीयं तत्याजोपह्वरे निजापत्यम् । देवतास्वेव कर्कशमीदृशं दृश्यते कर्म । किमु वक्तव्यं मानवेषु ? मेनकापि कामयमाना त्यक्ताभिमाना तपश्चरता विश्वामित्रेण संगम्य समुत्पादितां कांततरकुंतलां शकुंतलां निजवत्सां क्वाप्युत्ससर्ज । धिग्दौर्जन्यं जन्मिनाम् । ईदृशाय जनाय दीयते दैवेनापत्यम् । इति बहुधा विचिंत्य नितांतानुतापतांतस्वांतस्त्वामादाय दयया सदनमासाद्य च सद्यः पयसा पार्श्वपक्कणानीतेन भवदशनायामशमयम् । वत्से ! कृच्छ्रादेतावन्तं कालं तावदेवमेव वर्धितासीत्यकथयत् ।

अथ व्यतीतेषु कतिपयेषु मासेषु कदाचिज्जरत्तरो धमनो व्याधिजर्झरितशरीरस्संतापपरितप्यमानोऽपि पार्श्ववर्तिनीं मां वात्सल्यातिरेकेण बाष्पजलकलुषितक्षीणवीक्षणो विलोकयन्वेपमानेन कीकसप्रायेण पाणिना सकृदंबेति परामृशन् मय्युपरते निर्जने वने कथमेकाकिनी निवससि ? कुत्र गच्छसि ? क्व भुंक्षे ? कथमनाथामीदृशीं बालां भवतीमेकाकिनीं विहाय त्यजेयं प्राणान् इति । दुःखभरदम्यमानकण्ठो रुदन्नस्फुटाक्षरं व्याहरंस्तारतरनिश्वासपरंपरया समममुञ्चदश्रुधाराम् । तदनु सवितरि कष्टमस्य शिष्टोत्तमस्य द्रष्टुमसमर्थ इव विसृष्टघृष्टावष्टंभितपाटलिम्नि अधितिष्ठति चरमगिरिशिखरं सत्वरमेवास्तमेति गभस्तिमालीति तज्जठरजिगमिषयेव सत्वरं निर्जगाम धमनाज्जीवः । अहं पुनर्बालभावेन गतप्राणमपि तमुपरतमजानन्ती निद्राति किं ? किमथवा ध्यायति भगवन्तमिति चिंतयन्ती समुपेत्य च तत्समीपं निर्वर्ण्य च मुखविकृतिं संचाल्य च निभृतशरीरं आशीर्षादापादतलं चलन्तीं तनुमवलोक्य सगद्गदबाष्पं ताततातेत्यसकृदाहूयमानमपि अदत्तप्रतिवचनं किंचिदर्धमीलितलोचनं स्तोकमिव विवृतवदनं धमनमपश्यम् । दृष्ट्वा चेतिकर्तव्यतामूढा गाढांधकारजठरप्रविष्टेव भयजर्झरितहृदया दुःखभरदम्यमानकंठी सगद्गदं परिदेवनैकशरण्या मुहुररण्यानीमभितः

पश्यन्ती कंपमानगात्रयष्टिः नाथहीना क्षणमिव कुणपसमीपे समुपविशन्ती क्षणमिव बहिरागत्य तिष्ठन्ती किं करोमि, कुत्र यामि, का वा गतिः, कस्मै निवेदयामि, निर्जने वने को वा वर्तते, कं मृगयामीति बहुधा विचिंतयन्ती दुःखभरपरिभ्रामितोत्तमांगा चेलपिहितमुखी गलितजंघाशक्तिः द्वारि न्यषीदम्।

अथ निमज्जति सवितरि चरमजलनिधौ कमलिनीषु पतिविरहशोकेनेव निस्सृतभ्रमराश्रुकज्जलासु निबिडतरकुंजपुंजाभ्यंतरान्मदंमन्दं प्रसृमरनिरंतरांधकारनीलचेलावगुंठितेषु वनतटेषु तत्र तत्र निरर्गलनिर्गलद्धूंकारघूकौघरावानुकरणपरासु गिरिगुहासु मद्भयपरिजिहीर्षयेव कर्णोपांते तनुतरक्वणितकैतवेन कृतसांत्ववचनेषु वनमशकेषु मद्दुःखावलोकनासहिष्णुतयेव निपतत्ताराकैतवेन पातिताश्रुसलिलकणे गगनांकणे निश्शब्दं रोदितीव दृश्यमाने खद्योतव्रातद्योतितेषु शाद्वलेषु भीतभीता बालभावेनोपरतमपि पितरं विसृज्यात्मरक्षणपरा दीनरवेण रुदती क्वापि गंतुमपि तत्रैव स्थातुमप्यनीशा करयुगपिहितनयनयुगला तत्रैव द्वारि समुपाविशम्। तदनु मां समाश्वासयितुमिवोदयगिरिशिखरमारुरोह सुधादीधितिः। अथ चकोरचयचारुताररवदंतुरेषु दिगंतरेषु चन्द्रोदयभयात्परिधावद्भिरंधकारैरिव षट्चरणनिकरैः परिवृतेषु नीलोत्पलेषु दीनकोकनादेषु कोकनदेषु प्रसृमरामोदेषु कुमुदेषु चन्द्रिकादुकूलपरिमंडिते भूमंडले वनमभितो दत्तदृष्टिः विपिनेऽपि मदीयां स्थितिमसहमानया नियत्या मामरण्यात्कालयितुमिव प्रेषितं क्वचिदनिलचलिततया पतगमिव विटपिनो विटपिनमभिपतंतं क्वचिच्चक्रवातपरिघूर्णिततया मदिरास्वादघूर्णितमिव परिभ्रमन्तं क्वचिद्दह्यमानवेणुपर्वव्राततया पिशाचाविष्टमिव घोररवभयंकरं वसंतमिवाशोककुसुमरक्तं शाकुनिकमिव तरुकोटराभ्यंतरपातितानेकशकुनिनिकरं उन्मत्तमिव भूंकारदूरपातितशिलाशकलं मदकलमिव क्षितितलशायितानेकानोकहनिवहं नातिदूरादापतंतं दावानलमपश्यम्। दृष्ट्वा च साध्वसेन पितरमुपरतमपि तमहं विसृज्य क्वचित्क्षितितलनिपतितवातायुरोमंथसितफेनकूटसंक्रांततुहिनकरकिरणतया नवरत्नकुट्टि-

मप्रतीकाशे क्वचिद्विटपिसञ्चयच्छदसंच्छादिततयांतरांतरा प्रसृतचन्द्रातपतया च श्वित्रस्थासक्तनिचित इव क्वचिन्निपतत्प्रालेयपृषदार्द्रीकृतशादपटलतयातिशीतलतले क्वचिदमितसितसिकताप्रायतया कृच्छ्रसंचारतले क्वचिच्छर्कराचिततया दुर्गमे क्वचिद्गर्ताकुलतया स्थपुटिते क्वचिज्झरीपरीततया शिलातलरम्ये वनमार्गे धावंधावं भयचकितदृष्टिरनिर्दिष्टप्राप्यस्थानविशेषा वातचालितशुष्कपर्णमर्मररवेऽपि वेपमाना भयप्रघट्टयमानहृदया श्रमसलिलसिक्तवल्कला विलुलितकुंतला विगलितजंघाबला श्रमवशादतर्कितोपनतनिद्राभरपरवशतया स्वयमनिच्छाघटमानपक्ष्मपुटा पदादेकमपि पदं गन्तुं नितरामनीशा कस्य चिदुत्तुंगस्य विततविटपपटलस्य महीरुहस्य मूलमधिशिश्ये।

अथ सहस्रकरे पाकशासनाशामपि करप्रसारितपद्मरागरागैरापूरयति अचिरसमुद्भिद्यमानकमलकल्हारप्रभृतिविविधकुसुमपरिमलत्राहिभिस्समूह्यमानशीतलतुहिनशीकरकलितप्रसूनपरागभारतयेव मन्दं मन्दं स्पंदमानैः निजसुहृद्धनंजयधामनिधनदुःखेनेवातिजडैः पवमानैर्निशमनिशं पत्रपुटक्षरद्भिश्शीतलतरैः प्रालेयैरार्द्रीकृतवल्कला बाष्पासाररेखाकल्माषितकपोलतला धूलिधूसरितांगयष्टिरहं प्रतिबोधिताभवम्। अहो! किं ब्रवीमि निद्राया महिमातिशयम्। मातृकल्पया तया विस्मारितपितृशोका निर्वासितधावनक्लेशा समुत्पादितबलविशेषा नवीकृतेव प्रकटितोल्लाघतेव कृतसांत्वनेव समुल्लासितेवापोहितसाध्वसा समापूरितोत्साहा चाभवम्। तदन्वहं नातिदूरादापतंतं वटुजनपरिपठ्यमानश्रुतिसुभगनिगमघोषं, पिंगकेश! संभारीकुरु लूत्वा दर्भपत्राणि। भोश्शङ्खनाभ! त्वरिततरमुपाहर पलाशसमिधः। क्षेमंकर! सत्वरमपचित्य परिमलमनोहराणि भगवदर्चनाय कुसुमानि नारिकेलसंपुटकमापूरय। कपिंजल! गच्छ कंदमूलफलाहरणाय। दृढकंधर! याहि गुरुवल्कलक्षालनाय। जाबाले! गृहाण लवित्रं होमधेनुघासकृंतनाय। श्वेतकेतो! [illegible] क्षिप्रमानय

शुष्केंधनानि । भार्गव ! भवता कर्तव्यं हि यागशालामार्जनम् । तद्रुतं याहि कृतस्नानविधिः । होमधेनुदोहनाय निषिक्तभाजनो भव जाजले ! लंबकर्ण ! तूर्णं लुनीहि विततकमलपत्राणि । दीर्घनास ! सहसा श्यानीकुरु वल्कलमातपे । पिंगकेश ! मा भव प्लवनकर्मणि व्यग्रः । त्वरितं गंतव्यम् । वक्रग्रीव ! महीरुहारोहणेन मा कालमतिवाहय गुरुनिदेशमशून्यं कुरु । इध्मवाह ! मा कुरु दिगंबरस्संध्यावंदनमिति परस्परं भाषमाणशिष्य-गणभाषितानि च जलचरविविधपतगसुभगरसितमिश्रितान्यश्रौषम् । श्रुत्वा च तस्मादुत्थाय दिष्ट्या लब्धावलंबनास्मि इति समधिगतनिरतिशय-प्रमोदपरवशहृदया बालभावविस्मृतधमननिधनदुःखा मुनिजनविविधवार्ता संभृतामुपसृत्य तां स्थलीं विचित्रस्पृहणीयनानाविधपत्ररथव्रातकलकल-रसितमुखरितानेकवर्णप्रसूनशबलितप्राचीनकल्पितप्रतीहारमतिक्रम्य नीरंध्र-प्ररूढाश्वत्थकपित्थदधित्थकृतमालतमालरसालसालपीतसालकप्रियालतिलका मलकपिचुलदेवतालतिंदुकतिंत्रिणीमधूकमधूलकन्यग्रोधशिग्रुग्रन्थिलसहकार - करवीरोदुंबरजंबीरमाल्रबीजपूरखदिरबदरीपारिभद्रपलाशपनसवेतसपुन्नाग - नागकेसरींगुदीप्रियंगुप्लक्षपाटलशाल्मलिशमीशकपादनिकोचकमोचकभूर्ज - रादिवृक्षषंडमंडिततटं पादपस्तोमनिरंतरशाखाविवरप्रविष्टतारतरदिवाकर-किरणतया तपनीयशलाकाघटितपंजराभ्यंतरगतैरिव कैश्चित्तरुकोटरोदर-निषण्णेभ्यश्शिशुतया ससीत्कारं विवृतायतपाटलत्रोटिपुटेभ्योऽहमहमिकया पुरः प्रसारितारुणकंधरेभ्यश्शावकेभ्यो दीयमानकीटाद्याहारैः कैश्चित्सनादं विटपाद्विटपं डीयमानैः कैश्चिदन्यनीडाक्रमणक्रियमाणकलहैः कैश्चिन्निज-प्रियापुरःप्रदर्श्यमानप्रेमातिशयचेष्टितैः व्याघ्राटखंजरीटधूम्याटदार्वाघाट-चाषचटकशुकपिकहारीतजीवंजीवप्रभृतिभिः पतंगैः हृदयंगमप्रांतदेशमचिर-प्रबुद्धतया मुहुः प्रकाश्यमानतीक्ष्णतरदंष्ट्रैस्समारब्धजृंभाविवृतवदनकुहरतया दृश्यमानारुणवदनैः विटपकोटिनिषण्णैर्जानुदेशविनिहितगंडमंडलैः करकुटि-लांगुलिकंडूयमानतनुभिः लंबितदीर्घवालैः सेव्यमाननिजपाटलमुखसवर्ण-

बालातपैः वानरैः दर्शनीयतीरतरुनिकरं कुंजाभ्यंतरनिषण्णशिखावलकुलत्रोटि-कोटिलीलासमाकृष्यमाणनिकटतटप्ररूढकुसुमितलताकुटिलकोटिं घनतरदल-कलिततरुमूलशाद्वलतलनिर्भयपरिभ्रमत्कुरंगनिकुरुंबं कुंभिकाक्रांतपर्यन्तं गजा-कृष्टशालूककल्माषिततटप्रदेशं कल्हारहल्लककुमुदकुवलयकमलादिमनोहरप्रसू-नावलिपरिमंडितं नलिनीदलावकाशादुत्थाय समुद्धूयमानपक्षपुटैरानंदमंद्रा-रवैश्चक्रमिथुनैः प्लवनावतरणतरंगितसलिलं शंकूपभुज्यमानशिफाकंदं मरा-लाकृष्यमाणमृणालं राजहंसोपभुज्यमानवराटकं गगनतलादवतीर्णैः करेटुभिः परिक्षोभिततरंगितसलिलं निश्चलकायैर्नलिनीदलनिषण्णैर्बकैराक्रांतं विस्तृत-पक्षपुटैरासेव्यमानबालातपैर्मल्लिकाक्षमिथुनैस्सनाथतटसैकतं अचिरनिष्पीडित-काषायवल्कलवर्णकषायिततीरनीरमभ्यस्यमानप्लवनकर्मभिर्मुनिबालकैर्नीरंध्रितं कैश्चित्स्नानावतीर्णैः कैश्चित्स्नातोत्थितैः कैश्चित्क्रियमाणपुंड्रविधिभिः कैश्चिद्दीयमानार्घ्यैः कैश्चिन्निर्वर्तितसंध्योपासनैः कैश्चिन्निभृतशरीरं निमीलि-ताक्षं च जपद्भिः कैश्चित्परिपठ्यमाननारायणनामसहस्रैः कैश्चित्सोपान-तलाश्यानीक्रियमाणवल्कलैस्तपोधनैर्दर्शनीयसन्निवेशं संतरद्भिश्शिष्यगणैरा-नीयमानवानपद्मबीजपुंजं छात्रानीतदर्भपत्रसमित्संभारसंभृततटसोपानतलं प्रतितरंगसंक्रांतसहस्रकिरणकिरणनिकरतया स्नानावतीर्णनक्षत्रनिकरमिव तापससंपर्कसंपादिततेजःपुंजमिव गगनाभोगमिव राजहंसपरिमंडितं हास्ति-नपत्तनमिव धार्तराष्ट्रालंकृतं सरित्पतिमिव प्रसूतकमलं सुन्दरीमुखमिव परिभ्रमद्भ्रमरकमनोहरं भुजगपतिमिव विधृतकुवलयं महावनमिव पुंडरीक-परिवृतं शंबरारिध्वजपटमिव मकरांकितं संग्रामांकणमिव परिपूर्णकीलालं धनिनमिव स्वर्णोर्मिकं प्राचेतसाश्रमपदमिव परिचलत्कुशलवं नारायणकर-मिव परिभ्रमच्चक्रं महेश्वराट्टहासमिव काशसुमधवलं एकचक्रनगरमिव बका-क्रान्तं संजातभङ्गमपि सुमनोहरं विषभरितमपि संतापहरणशौंडं सदा-जडमपि मुनिजनसेवितं अतिविशालं पद्माकरमद्राक्षम् ।

दृष्ट्वा च शुचितराणि पवित्राणि तत्रैव लभ्यमानानां कर्माण्यव-

लोकयन्ती नातिदूरे सोपानशिलातले समुपविश्य मनस्येवमचिंतयम् । अहो ! निर्दुष्टमवदातं कर्म तावदेतेषां। निरंतरमपि भगवद्ध्यानपराः मनसाप्यचिंतितपरदोषगंधाः परसेवापराङ्मुखाः यथालाभसंतुष्टाः परित्यक्ताशाः निजक्रियैकतानाः नश्वरं विषयसुखं तृणाय मन्यमानाः त्यक्तमानाः समलोष्टाश्मकांचनाः अनतिक्रांतविधयः वेदाध्ययनपराः प्रकटितगुरुजनभक्तयः विनयव्याहाराः विसृष्टपरहिंसाकार्याः करणत्रयेऽप्येकरूपाः मोक्षे दत्तदृष्टयः दूरीकृतशरीराभिमानाः एते तपोधनाः कर्म कुर्वंति। महदिदमाश्चर्यमिति ।

तदनु निर्वर्तितनिजनियमेषु मुनिषु परिसमापितध्यानविधिः कश्चन जरत्तरो जटाजटिलोन्निबद्धदीर्घतरशणकल्पानल्पपलितकेशपाशस्तिमिराप्रवेशाय कृतनयनोपांतसान्निध्याभ्यां चन्द्रकलाभ्यामिव पलितभ्रूभ्यामभिरामो भुजशिखरकृतशङ्खचक्रचिह्नयोः श्रुतिस्पर्शित्वप्रकाशनायेवांसतललंबिनीभ्यां ब्रह्मातिरिक्तदुर्वचनाप्रवेशाय सन्निहितसत्वगुणैरिव सितलोमगणैस्सन्निरुध्यमानद्वारदेशाभ्यां श्रुतिभ्यां दर्शनियो रसनापीठस्थितब्रह्मविद्यावासस्य तप्तचामीकरसच्छायनासिकागोपुरस्य वदनसदनस्य नासातलबद्धमध्याभ्यां उभयपार्श्वलंबितशिखराभ्यां विशदकुसुमगुंभितमालातोरणाभ्यामिव शुभ्रश्मश्रुकलापाभ्यामुपशोभमानः निबिडतरपद्माक्षमालावलयितं सांद्रप्ररूढसिततनूरुहनिवहावगुंठितमवदातयज्ञोपवीतपरीतं विशालं वक्षस्स्थलमसितलतावलयितं प्रालेयप्रकराक्रांतं तिर्यक्प्रसरत्सुरसरित्परीवाहमायतं प्रस्थमिव हिमगिरिरुद्वहन्वदनदरीप्रांतपरिपतद्धौतदीर्घतरकूर्चसरस्वतीधुनीपरीवाहरयजनितगर्तेनेवोर्ध्वदेशनिपतत्प्रवाहवेगपरिकीर्यमाणशुभ्रजलशीकर-निभगौररोमावेष्टितपर्यंतेन नाभिगर्तेन प्रकाशमानः आदिशेषनिर्मोकनिर्मललघुचीरांबरकृतपरिधानस्तापसपुंगवस्समुन्मीलितलोचनस्सकृदपांगकुल्याप्रसरत्कृपारसपूरेण स्नापयन्निव मामवलोक्य सानुतापं पार्श्ववर्तिनमन्तेवासिनमेकमब्रवीत् ।

भोः ! कपिंजल ! स्नापयित्वा तां शिलातलनिषण्णां बालिकां सत्वरमानय मत्सकाशमिति । स तु कपिंजलो मदुपकंठमासाद्य हृद्यया गिरा वत्से ! कुलपतिरस्माकं समाह्वयति भवतीम् । तदुत्तिष्ठ स्नात्वा च सरोवरेऽस्मिन्सत्वरमायाहि इति न्यवेदयत् । ततस्तमहं तात ! कस्ते कुलपतिः तस्य च किं तत्पूततमं नाम । दयया दर्शय तं महात्मानम् । द्रष्टुकामास्मीत्यपृच्छम् । पृष्टश्च स कपिंजलो यस्तेजसा सवितारं धर्मेण वैवस्वतं तपसा तामरसासनं शांत्या तारापतिं कृपया पद्मनाभं ज्ञानेन सुराचार्यं गांभीर्येण सागरं पारिशुद्ध्येन क्षीरोदं दाढर्येन हेमाद्रिं समतिक्रांतवान् । यश्च यदा यदाज्ञापयति कुलपतिरिति निभृतगात्रैराश्रितप्रह्वभावैस्तन्मुखकमलदत्तदृष्टिभिस्तपोधनैरुपास्यमानः प्रकाशते । यश्च स्थविरः परिशुद्धात्मानमेवमेव शिरसि करोतीति सूचयद्भिरिव धवलतरैः केशपाशैः परिष्कृतोत्तमांगः । यश्चांतस्संपूर्णतया रंध्रदेशाद्बहिर्निस्सृतैस्सत्वगुणैरिव विशदरोमनिकरैराच्छादितशरीरः । यश्च संसृतिकांतारस्य दावानलः । यस्माद्भीतभीतः कंदर्पोऽपि त्यक्तदर्पः तिरोहितशरीरो वर्तते । यस्य नामग्रहणेन कलिरपि सुदूरं धावति । यश्च विधुंतुद इवासकृदापीतसोमः । यश्च धर्मस्य वेदितापि कुशासनः । मोक्षार्थ्यपि अक्षगणनासक्तः । एकोत्तमांगोऽपि सप्तोत्तमांगः । यश्च तपनीयतपनतनूनपात्तेजःपुंजैरिव निर्मितः । यस्य च दिवौकसोऽपि वचश्श्रवणं तपःफलं कटाक्षमपि महानुग्रहं मन्वते । यश्च त्रय्यास्संकेतभूमिः । येन च सकलान्यपि शास्त्राणि परिशुद्धतामभजन् । यश्च प्रयतेन दीर्घसत्रनाम्ना पावयति जगदखिलमपि । सः एवास्माकं कुलपतिरिति दर्शयामास तम् ।

तदनु तस्य दीर्घसत्रस्य मनसीवातिनिर्मले स्वभाव इव गंभीरे ध्यानइवात्यायते कर्मणीवावदाते वन इव तापहरे कर इव कुशपवित्रे तस्मिन्सरोवरे स्नात्वा परिधाय च कपिंजलदत्तं परिधानं समासाद्य च कुलपतिसन्निधिं तच्चरणसरसिजयोर्यतम् । तदनंतरमभितरदुर्लभस्पर्शाभ्यां

करारविंदाभ्यां स तपोधनपुङ्गवो मामुत्थाप्य वत्से ! सौगंधिनीति प्रीत्यतिशयेन समाश्लिष्य शिरस्याघ्राय च आयाहि वत्से ! मदीयमाश्रममिति निजकरारविंदेन मत्करांगुलिमवलंब्य कैश्चिदंसतलारोपितकुशसमित्संभारैः कैश्चित्कंदमूलफलसंभृतपिटकोत्तमांगैः कैश्चित्तुलसीकुसुमपरिपूरितनारिकेलसंपुटकहस्तैः कैश्चित्पुनरुक्तीकृतशिरोनिहितार्द्रवल्कलैः कैश्चिदावेष्टितकृष्णाजिनकक्षैः कैश्चिदुच्चार्यमाणमंत्रतया परिस्फुरदधरोष्ठपुटैः सादरं मामेवावलोकयद्भिः तापससंघैः त्वरया वल्कलप्रमृष्टप्रतीकैः चीरचेलांचलनिबद्धपद्मबीजपटलैरानीयमाननलिनीदलभारैः लीलायै नलिनीपत्रकल्पितभृङ्गारापूरितनीरैः त्वरातिशयकृतानुधावनतया प्रमाणाधिकनिश्श्वासैर्वेपमानहृदयैर्मुनिबालकैश्चानुगम्यमानो निजाश्रमं प्रति प्रतस्थे ।

तदनु गते च तस्मिन्कतिपयानि पदानि, सोपानैरलंकृतं नानानोकहनिवहप्रसूनप्रचुरप्रताननीप्रकरपरिष्कृतमकृत्रिमविचित्रपर्वतपरंपरामनोहरमुच्छ्रितशिखरतलपरिकल्पितविस्मयावहोन्नतगोपुरसुन्दरदेवमंदिरं कञ्चन समुन्नतदेशमवलोक्य निरतिशयानंदपरवशा तात ! सोपानपरंपरापरिष्कृतं किमिदमतिरमणीयं स्थलमित्यपृच्छम् । पृष्टस्स कुलपतिः वत्से ! चिरंतनानेकतपोनिष्ठमुनिपुङ्गवकृतावासोऽयमेव गोमंत इति पुराणप्रसिद्धो नारायणगिरिः दक्षिणबदरिकाश्रमश्च । सत्वगुणभूयिष्ठोऽयं देशः । अत्रैव विलसति कमलया सह शांतमूर्तिर्भगवान्नारायणः । तस्यैव भगवतः परिचर्यैकनिरतः अहमस्मि । अस्य च गिरेः चतसृष्वपि दिक्षु सोपानावलिरेवमेव विराजते । अत्रैवास्माकं पर्णशालाः । पुराणपुरुषस्य समाश्रितार्चारूपस्य निजरूपावर्जितसकलजनमनोनयनस्य श्रियःपतेर्वरिवस्यैकतानोऽस्मीति निगदन्नेव सोपानांतिकमाससाद ।

अहो ! तस्य दयालुता वात्सल्यातिशयश्च मयि । यन्निजवृद्धभावमविगणय्य प्रीतिदिग्धमानसः पाणिभ्यां मामादाय निजोदरतलतिर्यक्कृतकूर्परपीठे प्रतिष्ठाप्य सोपानावलिमारोढुं मंदं मंदमुपचक्राम । एवम-

निच्छन्तीमपि मामादाय सोपानारोहणश्रमजनितनिश्श्वासपरिश्रांते तस्मिन्मंदं गिरिशिखरमधिगतवति नमेरुतरुमूलतलेषु वेदिकातटेषूटजाभ्यंतरेषु तमालदलविरचितायतकायमानतया तत्र तत्रांतरांतरा निपतिततपनकिरणकलितशिलातलेषु च निषण्णैः कैश्चित्क्रियमाणपुंड्रविधिभिः कैश्चिन्निभृतकायं बद्धांजलिपुटं च पद्मबीजमालावलीढकंधरैः पद्मासनोपविष्टैः प्रणिधानपरैः कैश्चिदभ्यस्यमानयोगासनैः कैश्चित्परिपठ्यमानाम्नायैः कैश्चिदभ्यर्च्यमाननारायणैः कैश्चिद्ग्रथ्यमानप्रसूनैः कैश्चिद्धृष्यमाणपटीरैः कैश्चिद्बध्यमानदर्भमुष्टिभिः कैश्चिदाश्यानीक्रियमाणसमित्पटलैः कैश्चिल्लूयमानकदलीदलैः कैश्चित्क्रियमाणहोमैः कैश्चिद्गोमयलेपनक्रियमाणवेदिकाशुद्धिभिः तपोधनैर्बंधुरं केषांचिज्जरत्तापसीजनोपलाल्यमानानां केषांचिद्विटपकोटिविषक्तवल्कलडोलाशायितानां केषांचित्कृष्णाजिनेषु शयानानां च तापसशिशूनां हासध्वनिभिः रोदनस्वनैश्चापूरितं पादपप्रच्छायेषु शयानैः कोरकितलोचनैरारब्धरोमन्थैः कृष्णसारव्रातैः दर्शनीयं कैश्चित्कुरंगालिह्यमानार्भकैः कैश्चिन्न्यग्रोधप्ररोहकल्पितडोलाविहारपरैः कैश्चिदुटजाभ्यंतरानीतफलाशनहृष्टैः कैश्चित्पांसुक्रीडापरवशतया धूलिधूसरितशरीरैर्मुनिबालकैरतिमनोहरं काभिश्चिद्विशालशिलातलाश्यानीक्रियमाणशूकधान्याभिः काभिश्चित्तरुशाखानमितशिखराबध्यमानार्द्रचीरांबराभिः काभिश्चिद्भ्राम्यमाणघरट्टाभिः काभिश्चिज्जलाशयानीयमानजलकलशावलग्नाभिः काभिश्चिदारब्धपर्णशालाभ्यंतरकार्यव्यग्राभिः काभिश्चिद्दूर्णिभ्यो वेणीक्रियमाणमौंजीभिः काभिश्चिद्विमुच्यमानदुग्धदोहधेनुभिः काभिश्चिन्निरवकरीक्रियमाणधान्याभिः काभिश्चित्सज्जीक्रियमाणहोमोपकरणाभिः काभिश्चित्समारब्धपाकक्रियोद्यमाभिः काभिश्चित्स्तन्यदानसमाश्वास्यमानशिशुभिः तपोधनवधूभिः नीरंध्रितं, आसेव्यमानबालातपाभिरसकृदारब्धजृंभतया प्रदर्श्यमानारुणनीरदनवदनकुहराभिः वलितिलकाकुलितां सिरासंतानजटिलां कीकसप्रायां तनुतरां तनुमभीक्ष्णं मन्दं मन्दं कंपमानेन पाणियुगेन कंडूयमानाभिः पवन-

चालितस्पंदमानपलिताल्पकेशाभिः पर्णशालाबहिर्द्वारांकणतलनिषण्णाभिः जरत्तरतापसीभिः दर्शनीयं, दुह्यमानदुग्धैरालिह्यमानवत्सैरतिपुष्टैर्गोकुलैः पवित्रितं, धूसरितपर्णशालाप्रदेशैर्धूमैः कर्बुरितं, तत्र तत्र भिद्यमाननारिकेल-फलतया पाटलितशिलातलं, उटजाभ्यंतरात्सवल्गितमभिपततस्तारतरं कूज-तस्संवीक्ष्यात्मार्भकाननुपदमेव सहुंकारमंद्रकंठरवमुत्थाय मुहुराघ्राय च तानायातानतिसत्वरसञ्चाल्यमानह्रस्ववालानवनितलविनिहितजानुतलान - सकृन्निर्दयं मुखतलादूधस्तटं ताडयतः पयः पाययन्तीभिर्हरिणीभिरति-रमणीयं, तत्र तत्र सिच्यमानकाषायं भिद्यमानेंगुदीफलं शिखावलान्विष्य-माणनीवारकणं, शुककुलापीयमानकमंडलुसलिलं, कपिकुलचालिताभ्य-श्शाखाभ्यः पतितान्यौदुंबराणि फलानि भुंजानैरतिमांसलैस्स्वैरचारैः वृषभ-वैररुपशोभमानं, तत्र तत्र परिपठ्यमानरामायणं, वल्कलमात्रतृप्तैरपि पीतां-बरासक्तचित्तैः शुक्लकर्मरतैरपि कृष्णकर्मासक्तमानसैः वैखानसैस्सेव्यमानं द्वैपायनमिव शुकसंसेव्यमानं महानगरमिव गीयमानगीतं कैलासमिव वास्तव्यनीलकण्ठं कृष्णमिव सदासन्निहितधनंजयं महावराहमिव क्षमाश्रितं स्वर्गमिव शतमखोपशोभमानं आश्रमदेशमपश्यम् ।

तदनु तमवेक्ष्य क्षिप्रमुत्क्षिप्तपक्ष्मभिस्सरभसमन्तिकमासाद्य शश्व-दाघ्राय चानुसरद्भिर्हरिणयूथैः परिवृतस्स मुनींद्रो निजोटजमभजत । अथ मदवलोकनाय संघशस्समागताभिस्सविस्मयमार्य ! कुत्रत्येयमिति तं दीर्घसत्रं पृच्छंतीभिः हन्त ! सौंदर्यमस्या बालिकायाः । बत ! अस्मदुटज-हरिणमंडलनयनडंबरहरमस्या मेचकलोचनयुगलम् । अदृष्टपूर्वमिदं रूपम् । इति परस्परं सल्लपंतीभिरहमहमिकया चुम्बंतीभिर्जरतीभिस्तरुणीभिस्ताप-सीभिश्च सादरमुपलालिता सकलमुनिजनवात्सल्यभाजनमभवम् । इति व्याहरंतीं मुखविकृतिप्रकटितारुंतुदशराहतिवेदनां सौगन्धिनीं निर्वर्ण्य विवर्णमुखी किंजलिका सगद्गदबाष्पमंब ! सौगन्धिनि ! निरंतरं व्याहारेण कुंठितकंठस्वरासि । नीरसा रसनेयं प्रतिबध्नाति व्याहृतिम् । अप्रतीकारस्ते

संतापः । तदलं भाषितेन । निवेदयाम्यहं भवदुदंतमितो महांतमिति वक्तुमारभत । महाभाग ! मंदभागधेयाहं निवेदयामि । शृणु तावत् ।

तदनु स दीर्घसत्रस्तु सौगंधिनीयं यदि नयनपथात्तिरोहिता- भविष्यत् ; वात्सल्यातिरेकेण तदा स्वयमेव ज्ञानिनामग्रणीरपि चकित- मतिः प्राकृतजन इव संतप्यमानहृदयः परित्यक्तात्मकर्मा च तदन्वेषणाय प्रत्युटजं पर्यटन्पाथसस्समुद्धृतो मत्स्य इव तरलतरलः क्वापि क्रीडापर- वशामेनामवलोक्य निर्मर्यादप्रमोदपरवशः एहि वत्से ! क्व गतासि ? मा तावदेवमेकाकिनी गच्छेत्यादाय शिरस्याघ्राय निजोटजमानीय स्वादुतर- फलप्रदानेन स्वयं सौहित्यमेत्य नित्यकर्मणि व्यग्रोऽवर्तिष्यत । एवमति- क्रांतेषु कतिपयेषु हायनेषु क्रमशः कामं लज्जां च मनसि, प्रह्वत्वं शिरसि नीलिमानं कुटिलगतिं च दृशि, शोणिमानमधरपल्लवे कपोलतले च, काठिन्यमौन्नत्यं चोरसि, तनिमानमवलग्ने, वैपुल्यं नितंबबिंबे, मार्दव- मूरुकांडे, लावण्यं शरीरे, रामणीयकं प्रत्यवयवञ्चोपजनयता इतरजन- हृदयेषु दिदृक्षामुत्पादयता सखीमेनामन्यामिव कुर्वता, भूतेनेव तारुण्येन समाक्रांतेयमभवत् ।

कंदर्पस्तु तिलकोपांतस्पंदमानभ्रमरकां चञ्चलचारुभ्रूलतां अधरारुण- पल्लवामवतंसितचूतकलिकां कोमलबाहुविटपां पुष्पवतीमेनां निजसुहृद्व- संतलक्ष्मीसंभृताटवीशंकया प्रविवेश हृदयम् । किं बहुना ! प्रथममेव कांचनकुसुममंजर्या इव रमणीयतरं स्पृहणीयं चास्या रूपम् । तत्रापि तस्यां सौरभश्रीरिव तारुण्यलक्ष्मीरपि प्रादुर्बभूवास्याम् । हंत ! तथा तथा समुदजृंभत दीर्घसत्रस्य स्वांते चिंतासंततिः ; यथा यथा च गात्रे यौवनमस्याः । स तु कुलपतिः नितांतचिंताकलुषितस्वांतः क्षणमिव ध्याननिमीलितलोचनः पार्श्ववर्तिनस्तापसानेवमकथयत् । प्राप्ततारुण्येयं वत्सा सौगंधिनी । तदिह स्थितिरस्या न संप्रतिपन्ना । तदिदानीमभिजाताय राजन्यायानन्यसाधारणयशसे निखिलभूमंडलजेत्रे विश्वविश्वंभराधीशनेत्रे

विधात्रा पात्रीकृताय रूपौदार्यादिसद्गुणानां नेत्रानंदकरगात्राय विचित्रतरचरित्राय विमतकेसरिपुत्राय वरमालिनीप्रीतिपात्राय चारुवक्त्राय दातुमेनामभिलषामि । इति, कुलपतिवचनमवकर्ण्य कुतुकिनस्सर्वेऽपि तापसाः सविनयं कथमियं क्षत्रियपुत्री ? कुत्र समुत्पन्ना कथमिहागता ? कः पिता ? का माता ? सर्वमप्यस्या वृत्तांतं सर्वज्ञेन भवता सविस्तरं वक्तव्यं । श्रोतुकामा वयमिति सप्रश्रयं प्रार्थयामासुः । प्रार्थितस्स कुलपतिः सावधानमवधारयंतु भवंतः कथ्यमानमेतदुदंतमिति वक्तुमारभत ।

अस्ति निस्तुला संस्तुतप्रशस्तसमस्तजनस्तूयमानविस्तृतवस्तुस्तोमस्पृहणीयागण्यपण्यश्रेण्यलंकृता कृतामितोन्नततपनीयकेतुविशकलिततूलततिधौतवातूलतरलितचीनचेलचयधिक्कृतदुग्धपयोधिवीचिमालायमानपरिभ्रमद्भ्रमरनिकरझंकारमुखरितशुभ्रप्रसवप्रकरप्रकटितवनलक्ष्मीहासविकाससरसमहीरुहाभिरामारामराजिमनोहरा हरातिसुकुमारवामशरीररुचिधौतसुधाधवलितोन्नतोदवसितहसितसितकैलासलावण्यविलासा विलासिनीजनगीयमानगानालापलास्यहास्यवचनकंदलितानुदिनमहोत्सवाडंबरांबरांतरालाभिवलद्वलाहकांतरालविलसदपलपितचपलाविलासकलधौतकलशशतप्रकाशमानमानातिगम्भीरधीरावधीरितमाररूपरामणीयकरसिकनिकरकंदलिता दलिताभियातिततिसमुद्धतशूरवर्गभासुरा सुरातिश्लाघ्यमानविभवा भवानुमोदितविबुधपुरीधाममधुरा मधुरा नाम गरीयसी नगरी ।

तत्र तावन्मुषितकंदर्पदर्पोऽपि स्मरपरवशः परिगृहीतागण्यतारुण्यरमणीयरमणीजनस्सुगंधनो नामासीद्राजा । स नरपतिस्सुमुखोऽपि विमुखो राज्यावने सचिवमस्तकविन्यस्तसमस्तराज्यभारतयेव पूज्यानामपि समुन्नमितोत्तमांगो वनितातततिसंपर्कादिव दूरीकृतत्रपः समुपजनितसत्कर्मविरोधमवरोधमधिगत्य कदाचित्कल्पलतापल्लवकल्पतल्पानल्पाकल्पे चञ्चच्चामीकरविरचितविचित्रपत्रभङ्गतरंगावर्जितजनांतरंगे पर्यंके निषण्णो निजभुजावेल्लितसुन्दरीजनकंधरः पार्श्वोद्धूयमानचामरसमीरपरिनर्त्यमानचिकुरकलापः

सुधाधवलिततया प्रसृमररुचिरनखरकिरणतया च शारवर्णास्सविभ्रमं सानुनयं सानुरागं च सापांगवीक्षणं च विलासिनीभिर्दीयमानाः नागवल्लीपल्लववीटिकास्स्तोकमिव प्रसारितपाणिः परिगृह्य मन्दं चर्वन्सकांचीमणिमालाकलापरणितं समंजीरमंजुलशिंजितं सविभ्रमं ससंगीतं साभिनयं सभ्रूविस्फारणं सचक्षूरागं सवल्लीभंगुरं नृत्यन्तीनां वारसुन्दरीणां विलोकनेन कदाचिन्मदिरेक्षणागणकटाक्षवीक्षालक्षिततया यमुनानीरपूरजठरवर्तीव मेचककोमलकंबलावगुंठित इवांजनलिप्त इव विडंबयन्निव नारायणं कदाचिन्मत्तकाशिनीहासविच्छुरिततया सुरापगापरीवाहपरीत इव कौमुदीजठरप्रविष्ट इव सुधाझरीस्नापित इव धवलतरकाचपंजरांतर्गत इव कदाचिदनुरागिणीपद्मरागरागराजितया जतुरसस्नापित इव बहिःप्रकटितनिजानुराग इव रक्ताशोकस्तबकांचित इव परिहसन्निवोदयशिखरिशिखरगतं मार्तंडमंडलं कदाचिन्मदिरास्वादघूर्णितारुणनयनः स्खलत्पाणिर्मृदंगास्फालनसक्तः कदाचिदक्षक्रीडायां पणीकृतांगनांगसंगसंश्लेषशिथिलांगः अनंगपरतन्त्रः स्वतंत्रो निरंकुशव्यापारदूरीकृतधर्मा ग्राम्यधर्मासक्तः कालमतिवाहयति स्म।

एवं स्थिते कदाचिल्लंबमानमानातीतपिशंगजटाजटिलोत्तमांगोऽधःप्रसृमरज्वालामालोऽनल इव कुटिलपिंगलभ्रूभ्यां पाटलतरपक्ष्मभ्यां रूक्षेक्षणाभ्यां भयानकः परिधिपरिगताभ्यां युगपदुदिताभ्यामंगारकाभ्यामिव नभोदेशः कक्षतलनिक्षिप्तपवित्रतालपत्रसंभारोंऽसतललंबिततनुतररज्जुनियमितनारिकेलकमंडलुः कृष्णाजिनपरिधानः मौंजीमेखलालंकृतावलग्नः करधृतपलाशदंडः दंडधरभयंकराकारः नाम्नैव प्रकटितात्ममहिमातिशयः महामन्युर्नाम विडंबयन्निव दुर्वाससं तपोधनवटुर्गुरुदक्षिणाभ्यर्थनाया जगाम। आगत्य च नरपतिप्रासादं सद्यस्सरभसं सविनयं च परिजनैः प्रदर्शितमार्गः स महामन्युरवरोधं प्राविशत्। प्रविश्य चागतमात्मानं तृणाय मन्यमानं मानातिरेकात्मौनं आसवास्वादमदपरिघूर्णिततारकं

परितो निषण्णास्सपरिहासं सशिरश्चालनं च समारब्धाक्षक्रीडतया पराजिता मत्तकाशिनोः कराकर्षणेन लज्जिताः कुर्वंतं, मदिरेक्षणे ! प्रक्षिप शारनिकरम्, शोणाधरे धीरा भव जितासि, अयि कोपने ! कुत्र यासि क्रीडावसरे किसु विस्मृतस्समयः ? मंदारिके ! संदर्शय तावदिदानीं नैपुण्य-मक्षक्रीडायामिति नर्मालापैकतानमलक्ष्यीकृतप्रतीक्ष्यं सुगंधनमपश्यत् ।

तदानीं तपोधनमेनमवलोक्य तासु नितंबिनीषु सत्रपमुत्थाय स्तोकमपसृतासु सुगंधनः क्रोधाधीनः समुपविशन्नेवारुणतरतीक्ष्णेक्षणः ज्वलनोत्सर्पत्कुटिलधूमलेखाभ्यामिव भंगतरंगितभ्रूभ्यामतिभीषणस्समुद्वीक्ष्य महामन्युमप्राक्षीत् । कस्त्वं राक्षसरूक्षवेषः ? कथं वा निर्निरोधमवरोध-मागतोऽसि ? केन दत्तस्ते प्रासादप्रवेशावकाशः ? पशुकल्पस्त्वमसंस्तुतनर-पतिगौरवोऽसि । गच्छ यथागतमिति । तदवकर्ण्य च कर्णकर्कशं नरपतिभाषितं द्विगुणितमन्युर्महामन्युः दिधक्षन्निव नराधमं नराधिपममर्षरूक्षाभ्यामक्षिभ्यां किमरे ! वैधेय ! नराधम ! न मन्यसे मां महामन्युम् । धिक्ते वित्तमत्ततां यद्गु-रुदक्षिणार्थमुपागतं मां परिकल्प्य तृणकल्पमनल्पं प्रजल्पसि । किमु जल्पितं मूर्खेण भवता ? भवादृशेषु नराधमेषु राक्षसरूक्षवेष एवाहं । को वा प्रगल्भते मां निवारयितुम् । केन वा दातव्यः प्रासादप्रवेशावकाशो वेति नरपतिपशोस्ते नैव गौरवम् । तदलं मुधा विकत्थनेन । मा संधुक्षय मयि धूमायमानममर्षा-शुशुक्षणिं । सार्थय वित्तमप्रमत्तो गुरुदक्षिणाप्रदानेनेत्यकथयत् । श्रुत्वा च मुनिवचनं स सुगंधनो दीर्घमुष्णं च निश्वसन्सोल्लुंठनं किमभि हितं क्रोधैक-धनेन भवता ? महामन्युरिति स्यान्नाम । न मां किमपि कर्तुमीष्टे भवन्महा-मन्युता । मुधा विकत्थसे तपोधनोऽहमिति । का नाम गुरुदक्षिणा ? को वा गुरुः ? दक्षिणाभ्यर्थी निरतिशयाशापिशाचावेष्टितहृदयः कथं गुरुर्भवितु मर्हति ? तादृश शापिशाचाक्रांतस्य गुरोरंतेवासी खलु भवान् ? किमर्थं मया देयं मदीयं स्वापतेयं ? गच्छ क्वापि भृत्यभावमवलंब्य तत्कर्मनिर्वह-णैकतानो द्रविणं संपाद्य समर्पय गुरुदक्षिणाम् । न ते दास्यामि काकणिका-

मपि। न बिभेमि च ते विभीषिकायाः। भवादृशाः पुरा दृष्टा मया धूर्ताः। दण्ड्योऽसि राजविरुद्धभाषी त्वम्। ब्राह्मण्यमनुचिंत्य मया क्षांतमागः। मा तिष्ठ चिरं धुरि। गच्छ रे! यथागतं तथैवेति प्रत्यवदत्।

निशम्य श्रवणपरुषं नरपतेरुद्धतं भाषितं रोषकषायितलोचनः कंपमानाधरः समुद्धूयमानभुजदंडो धूमायमानकोपपावकदह्यमान इवारुणतरशरीरो विप्रकृतस्सरीसृप इव तारतारनिश्श्वासभयानकस्समुन्नतकंधरासिराजालस्तपोधनस्तर्जनीधूननेन तर्जयन्किमु रे! नराधम! न मे सांत्ववचनस्य भाजनमसि। मत्तकाशिनीमंडलकुंडलितश्वंडजल्पितेन मामप्यभिभवसि। तन्न भवसि। शृणु रे! मूर्ख! यासां संपर्काच्छुभोदर्कं कर्मापि न गणयसि तासां विलासिनीनामितः परं संयोग एव ते प्राणवियोगाय कल्पतामिति शप्त्वा सरभसं प्रासादान्निरगच्छत्। तत्क्षणमेव सर्वाश्च कामिन्यः विवर्णवदनाः सावेगं प्रतीहारदेशमुपगम्य हा! तापसपुंगव! हता वयं त्रायस्वास्मान् विमोचय वल्लभमेनं शापात्। गृहाण गुरुदक्षिणाम्। भवदीयमेव हि प्राज्यमिदं राज्यम्। न हि किमु दया तवाबलास्वस्मासु निर्गतिकास्स्मः। निरवलंबनास्स्मः हंतेति परिदेवनपरास्तं तपोधनमनवलोक्य निष्फलाभ्यर्थनाः पुनरपि प्रविश्यांतःपुरं विषण्णं चिंताभरावनमितमस्तकं मस्तकतलविन्यस्तहस्तं वल्लभमभितो दीनवदनदर्शितविषादा न्यषीदुः।

सुगंधनस्तु त्यक्तगंधोऽप्यात्तगंधः चिंतासंतानतांतस्वांतः शिलाविलापनपटुविलापाद्धृदयदारांस्तान्दारानवलोक्य दीर्घमुष्णं च निश्श्वस्य चिरं विचिंत्य चेत्थमकथयत्। अयि! मदेकजीविताः! हरिणेक्षणाः। अलं विलापेन कालायत्तं हि जगदिदम्। यदेह जगति जनिः तदैव चेतनमनुजायते द्वंद्वपरंपरा। तदेतावंतं कालमनुभूतं हि सुखं, दैवदुर्विपाकादिदानीं दुःखमनुभवितव्यं संवृत्तं। तदहमधुना वैखानसवृत्तिमवलंब्य कांतारहितः कांतारमभिगमिष्यामि। यतो भवतीनां सान्निध्यं दंडधरसान्निध्यं नेष्यति मां। कामो हि दर्शनलब्धविवेकमपि अंधयति मनुजं सदुपदेशश्रवणावसरे बधिर-

यति। पित्तविकार इव स्मृतिमप्यपवाहयति। तदवश्यं कथमपि परिहरणीयं विषयसान्निध्यं इति। एवमभिधाय विसृष्टप्रकृष्टविष्टपसौख्यः प्रतिनिवर्त्य चानुसरतो वधूजनान्सांत्ववचनैस्सुगंधनो विविधतरुबृंदैः परिवृतं धवल-प्रसवतारकितं गिरितटनिपतन्निर्झरमुखरितं गहनमवगाह्य समुज्झितभूषः परिगृहीततापसवेषः विसृष्टभाषः क्षितीश इति प्रीत्येव प्रसारितशाखाबाहुभि-र्महीरुहैर्वितीर्णानि फलानि भुंजानः कौशेयमृदूनि किसलयान्यधिशयानः मुनितिरस्कृतिकृतानुशयः कालमत्यवाहयत्।

एवमतिगते काले कदाचिदस्मिन्मधुराधिपे सिष्णासुस्स्रोतोरसित-वाचालितदशहरितं सरितं समवतरति तस्य चोर्ध्वदेशात्कलहंसनादसुभगं भूषणरसितमुदचरत्। श्रुत्वा च सरित्सलिलपरीवाहावतीर्णोऽयं मंजुतरं शिंजितं श्रुत्यानंदकरं सविस्मयं तस्यामेव हरिति प्रेरितनयनः कांचन कांचनमालावलीढकंधरां तरंगाहतिशिथिलितविलुलितधम्मिल्लां परीवाह-रयाभ्यर्णनीयमानां तपनीयकान्तितनुकांतिकृतस्वर्णोर्मिमालां सौंदर्यमंदिर-शरीरामिंदिरामिव सुन्दरीं दूराद्ददर्श। दृष्ट्वा च तरंगपरंपराभिहन्यमानां परीवाहरयवशान्निजोपकंठमागतां तामुद्धृत्य पाणिभ्यां दरीसक्तहृदयोऽपि सुन्दरीसक्तहृदयस्सः नरपतिः करुणया तटीमनीनयत्।

तदनु स्नातोत्थितो नृपालस्सलिलतिमितचेलतया स्फुटलक्ष्यमाण-प्रत्यवयवतया प्रवृद्धकामः जलसिक्तविलुलितकेशपाशावगुंठितललाटतयार्ध-ग्रस्तविधुमंडलमिव मुखमंडलमुद्वहन्तीं स्वस्तिकीकृतबाहुलतायुगलपरि-पिहितोन्नतपयोधरां तरंगसंपर्कादिव तनुसक्ततरंगायमाणार्द्रवसनामसकृद्व-सनांचलपरिपतत्सलिलबिंदुपरंपरापरिषिच्यमानकोमलजंघाकांडामार्द्रांशुक - निबिडासक्ततया दर्शनीयसमुन्नतपृथुलनितंबबिंबां लावण्यमयीं सौन्दर्य-निधिं तामवलोक्य शंबरारिशरविशीर्णहृदयो विस्मृतमहामन्युशापः तत्तनु-स्पर्शोदंचितरोमांचजालमपि शीतलसलिलावगाहनिमित्तमिव प्रकटयन्ननु-कंपया रिरंसया चापृच्छत्। अयि! सुतनु! का त्वमिहागत्य सरित्स्रोत-

सश्चेतसि मे तरंगयसि प्रमोदोर्मिमालामालापेन शिशिरीकुरु श्रोत्रयुगलम् । किमु पदच्यवनेन पतिता सरिति प्लवमानेहागता सुरसुन्दरी ? आहोस्वित्सलिलक्रीडापरा नागांगना ? किमथवा नूत्नतया निर्मिता विधिना मदर्थं प्रेषिता रमणीमणिः ? कांतकुंतले ! मत्कुतूहलमपनय सरित्प्लवननिदानकथनेनेति ।

सा तु तदा निर्वर्ण्य स्मरपारवश्यमस्य समंदस्मितं सभ्रूस्मरचापचालनमपांगप्रेषितपञ्चशरशरा पराधीनतां द्विगुणयन्ती मारस्य तथ्यमकथयत् । जितमाररूप ! त्वद्रूपपरवशा कुसुमबाणबाणविद्धा स्त्रीविरुद्धाचारा कांचनमालिनी नाम पन्नगांगना रिंसया भवत्पाणिपल्लवस्पर्शनिदानमकरवं प्लवनकर्मेदमिति । निशम्य श्रुतिसुभगं तद्वचनं पञ्चशरनिशितशरजर्झरितहृदयगलितस्मृतिरिव विस्मृतमुनिशापमहिमा महीपतिस्तपनातपाश्यानितांशुकया शुकवाण्या तया सह सुरतसुखमनुबभूव । तत्क्षणमेव भुजङ्गीसमालिंगनादिव दरेणाचिरेण सुगंधनशरोरान्निश्चक्रमुः प्राणसमीरणाः । तदनंतरं कांचनमालिनी निधुवनश्रमादिव निश्चलं शयानं पुनरपि मधुराधरमधुपिपासयेव दरविवृतवदनं पितृपतिदिदृक्षयेव करधृतपयोधरकलधौतकलशयुगलं निधुवनजनितनिदाघजलबिंदुबंधुरनिजकंधराबंधनधुरीणदोर्दंडं दंडधरभटभीषणशरीरवीक्षणत्रासादिव मुकुलितनयनं वर्षर्तुगगनदेशमिव लंबमानकंधरं चंदनतरुमिव भुजङ्गीसमालिंगितं निजोपरि शयानं प्रमीतमवलोक्य तं भीतभीता श्रमजलकलुषितादवतार्य निजशरीरान्मन्दं वसुंधरातले शोकातिरेकात्साध्वसादचिरप्रसूतं पोतमेतं निक्षिप्य रसालतरुमूले निर्दया निर्जगाम निजावासम् ।

अथ समिदाहरणाय संचरतः कांतारे धमनाभिधानस्य कस्यचिद्विप्रवरस्य नयनसरणावपतदपत्यमिदम् । सेयं सानुतापं नीता निजनिकेतनमाद्वादशवत्सरं वर्धिता च । हन्त ! जरत्तरे तस्मिन्नस्या दैवदुर्विपाकादिव कालधर्ममधिगतवति बालभावेन कातर्येण च परित्यज्य तं

सुदूरं परिधावनपरा निराश्रया कांतारैकशरण्या सरश्चेदमास्माकमाससाद। आसाद्य च सोपानतले निषण्णां विषण्णहृदयामेकाकिनीमेनां बालिकामवलोक्य दयाधीनहृदयोऽहमाहूय निजोटजमनीनयम्। तथाचेदानीमगण्यतारुण्यपण्या प्रमदेयं देया निरंतरोपलालिता तस्मै चारुवक्त्रायेत्यकथयत्। इयं तावदासवस्येव मदजनकस्य कृष्णस्येव समुत्पादितमकरध्वजस्य कृष्णपक्षस्येव जनितमोहांधकारस्य भवदीयोदंतस्य श्रवणात्प्रभृति स्वयमेवोन्मत्तेव किमपि व्याहरंती समारब्धव्रतेव दूरीकृताहारा बधिरेव शब्दापिताप्यदत्तप्रतिवचना मधुमासकुंदलतापलाशश्रीरिव पांडरशरीरा बहुलपक्षक्षपाकरकलेव क्रमक्षीयमाणातिकृशतनुर्मुक्तेव भवद्गुणस्यूतहृदया जगदखिलमपि शून्यमिव मन्यमाना मानातीतचिंता मया समाश्वास्यमाना चाभवत्।

अद्य तावदनवद्यांगीयं कुरंगीवात्र हृद्ये शाद्वलतले सुसुखं कालयापनाय मया साकं पर्यटन्ती, "अयि! सखि! कथमिव तत्प्राप्तिः? कथमपि दर्शनपथमागतोऽपि मुनिजनोचितवेषां मामेनां कथं वांगीकरिष्यति? कथमिव दर्शनपथसमागमो वा? यदनवकर्णितमदुदंतस्सः नरपतिमकुटकोटिहीरमरीचिनीराजितचरणारविंदः कथं वा मद्दिदृक्षया समागच्छेत्? निरंतरश्रमसाध्यकर्मरतानां तापसानामाश्रमवासिनां जठरपतितामेनां मां को वा शंसति तस्मै? कथं कथमपि श्रुतास्मदुदंतोऽपि चक्रवर्ती गणयति वा मां? यदहमहमिकया वित्तमत्तमत्तकाशिनीभिस्सादरमाद्रियते। वल्कलधारिण्यै मलिनवेषायै मह्यं अपि नाम स्पृहयति? स्वप्नस्वापतेयकल्पमिदम्। सङ्कल्पमात्रहृद्यम्। वाचा वर्णनमात्रसौहित्यम्। कथं कथमपि बहुधा चिंतितमपि न मे हृदयमधिरोहति तत्संबन्धगन्धोऽपि। क्वायमाश्रमः श्रमैकजीविनां? क्व सा नगरी गरीयसी भोगैकलोलुपानाम्। मेरुसर्षपांतरोऽयं सङ्कल्पः। मुधा मनश्श्रमः। पर्णशालावाससुहिताया मे हृदयालवाले तातेन दीर्घसत्रेण मुधा समारोपितोऽयमाशांकुरः। एवं विदितव्यवहारापि निवर्तयितुं हृदयं तदुदंतान्न

पारयामि। किं करोमि ? कथं जीवामि तमन्तरेति" भवदुदंतगर्भमिव कथां कथयन्ती झडित्यकांडपतितेन कांडेन विदीर्णमर्मदेशा निर्मर्यादां वेदनां निरन्तरमनुभवति इति निवेदयन्ती स्तोकमीलितलोचनामपगत-निश्श्वासां दरविवृतवदनां निष्पंदगात्रयष्टिं निर्वर्ण्य सौगन्धिनीं प्रज्ञा-समुत्पादनायेव निर्गलं निस्सरंतीभिरश्रुधाराभिर्स्सिञ्चन्ती तन्मस्तकमस्त-तेजस्कवदनं सगद्गदं नाथ ! किमिदं ? नैव स्पन्दते सखीयमिति नासातल-विनिहितपाणितला हन्त ! गतप्राणैवेति मूर्च्छिता पपात।

तत्क्षणमेव निध्यायतश्चोपरतां सौगन्धिनीं मूर्च्छितां किंजल्किकां च दुःखभरनिरुद्धकण्ठस्य हा ! मद्गतजीविते ! मां विहाय क्व गतासि ? देहि मे प्रतिवचनमित्याक्रंदतश्चारुवक्त्रस्य परिस्फुटिताद्धृदयात्प्राणा निज-प्रेयसीप्राणान्वेषणायेव निर्जग्मुः। तदनु मंदं मंदं लब्धसंज्ञा सा तु किंजल्किका समुन्मीलितलोचना समुत्थाय क्षितितले शयानौ गतप्राणावव-लोक्य व्यथयेतिकर्तव्यतामूढा गाढांधकारावृतेवानाथा तिमिराकुलदृष्टिर्हा ! नियते ! किमिदं व्यवसितं ? न ते करुणा। न ते दृष्टिः। हा ! सखि ! सौगन्धिनि ! मंदभागधेयां विहाय मामेकाकिनीं क्व गतासि ? हन्त ! महदिदमाश्चर्यम्। सन्निहितं वल्लभमपि नीत्वा त्वया सह गतासि। प्रेयसि प्रेमातिशयः हन्त ! किमिदमुचितं ते मां विहाय गमनं ? हन्तेति-तारताररोदनैकताना मन्दमवतार्य च तदुत्तमांगमंकतलात्कम्पमानगात्री शोकातिरेकगलितजंघाबलापि बलान्मन्दमारुह्य सोपानपरंपरां मुनिजन-मंडलकुण्डलितं समासीनं च कृष्णाजिनासने सौगन्धिनीगुणगर्भितां वार्तामिव व्याहरन्तं तं दीर्घसत्रं संत्रस्ता चासाद्य चेलांचलपिहितनयन-युगला गलदश्रुधारापरिबाधमानाधरा गद्गदनिरुद्धाक्षरा रोदनमयीव तस्थौ।

स तु कुलपतिर्निश्श्वासकंपमानहृदयां स्वेदसलिलशीकरद्विगुणिताश्रु-जलक्षालितस्तनमंडलां खरतररविकिरणारुणितवदनमंडलां वेपमानां वल्क-लांचलपिहितलोचनां नीरवां तन्नियमस्तकं रुदतीं तामवलोक्य वत्से !

किमेवं रोदिषि ? किमु संजातं ? न कदाप्यकारणं रोदनमुचितं हि ? तत्क्षिप्र-मावेदय। यदि परिहरणीयं परिहरामीत्यप्राक्षीत्। पृष्टा च सा शोकभरपरि-स्फुटितमतिकर्कशं श्रवणपुटविदारणचटुलं सौगंधिनीनिधनवृत्तमुत्तरयामास। अनुपदमेव श्रोत्रवर्त्मनांतः प्रविष्टाद्भयानकभाषितदंभोलिपातादिव भीताया-मंतर्हितायां संज्ञायां स कुलपतिः पपात वसुमत्यां। ससंभ्रमं सावेगं च क्षणादेव पवित्रतालपत्रकृततालवृंतव्यापारैः कमंडलुशीतलोदकैश्च समुप-जनयत्सु संज्ञां तापसेषु स मुनिपुंगवो वैखानसावलंबितवेपमानभुजदंडः क्वासि वत्से सौगंधिनि ? मां विहाय गंतुमुचितं किमित्युच्चैराक्रंदन्मंदमुत्थाय शोकावनमितमस्तकया किंजल्किया प्रदर्श्यमानमार्गः प्रसृमरबाष्पधारा-सारतया प्रमुषितदृश्यः सलिलप्लावितनयनतया स्थपुटितस्थलेषु स्खलद्भिः विलपितुमप्यशक्तैः व्यथाक्वाथ्यमानमानसैः वत्से ! सौगंधिनि ! विधि-र्विहायास्मादृशान्जरत्तरान्स्पृहणीयरूपां तारुण्यदर्शनीयां निखिलजननयना-नंदकारिणीं त्वामेवापजहार। कष्टं भोः ! कष्टं हंत ! इति वृद्धभाव-कम्पमानवचनैः तात ! मा रोदीः। स्थपुटितमिदमरण्यक्षितितलं। तत्परि-स्खलंति पदानि। तन्निवार्यतां नयनवारीति निगदता दुःखभरदम्यमान-कण्ठेन तरुणेन वधूजनेन परिगृह्यमाणैः जरत्तापसैः सहुंकारं सबाष्पं च तत्रात्यानाघ्रायाघ्रायानुसरद्भिः कुरंगमंडलैरनुगम्यमानः अंब ! कुतो रोदिषि ? कुतो वा सर्वेऽप्येते विलपन्तीति पदे पदे पृच्छद्भिः मुनिबालकैः विधिविलसितमिदमिहानिर्वचनीयमिति परस्परं व्याहरद्भिः बलान्निरुद्ध-बाष्पावेगैः नातिवयोभिः तपोधनैश्च परिवृतो मंदमवरुह्य सोपानपरंपरां नातिदूरे पतितां किमनेन निर्जीवेन शरीरेणेति बहिर्निर्गन्तुमुद्यतानां मदनानलानामूर्ध्वदेशमुद्गच्छद्भिः धूमनिवहैरिव विलुलितैः नीलकुन्तलैः कलुषितमस्तकां स्तोकमिव भ्रुकुटितभ्रूलतां रोषात्तर्जयन्तीमिव मारं, किंचिदिवोन्मीलितकषायितलोचनयुगलं विवृतवदनतया परिम्लानाधर-पल्लवं मुखमंडलं अवनितले निपतितं शैवाललेखाकल्माषितं निष्पंदमधुव्रत-

सनाथं विलुलितकिंजल्कं आतपपरिक्लांतं कमलमिवोद्वहन्तीमीदृशानर्थ-परंपराणां निदानीभूतस्य मनोभवस्य क्रुधा जिघृक्षयेव हृदयतलविनिहित-दक्षिणपाणिमुद्गतमनसिजद्रुमांकुरेणेव बाणेन सनाथवामपार्श्वामधोमुखं निपतितेनोपरतेन चारुवक्त्रेणाविरहितदक्षिणपार्श्वां निदाघदिवसश्रियमिव समुत्पादितसंतापां वनलक्ष्मीमिव कुसुमभूषणां शंकरशिरश्शशिकलामिव तनुतरपांडरतनुमुपरतां तां सौगंधिनीमपश्यत् ।

दृष्ट्वा च दुःखभरमंथरः परिपतदश्रुसलिलबिंदुसंदोहैर्दीपिकास्नेह-बिंदुसदृक्षैर्दंतुरितधवलतरकूर्चकलापः समासाद्य सौगंधिनीसमीपं कुलपति-रसौ हा ! वत्से ! त्रायस्व मां ! समुत्तिष्ठ । निर्गतिकोऽस्मि । निरवलंब-नोऽस्मि । विकलकरणोऽस्मि । अपहृतहृदयोऽस्मि । किंकर्तव्यता-मूढोऽस्मि । निर्घातजर्झरीकृतकलेबरोऽस्मि । गाढांधकारजठरप्रविष्टोऽस्मि । दूरीकृतबंधुतावृन्दोऽस्मि । मोहग्राहग्रस्तोऽस्मि । किं करोमीति शवोपरि निपत्य निपत्य पक्ष्मलाक्षि ! निरंतरपरिपतदश्रुतिरस्करिणीतिरस्कृतनयनस्या-धन्यस्य पापीयसो मे दुर्लभमभवत्तव दर्शनमपि । ननु कलभाषिणि ! कुतो वा न किमपि प्रतिवदसि ? विदितोदंतो नृशंसोऽयमुपालभते मां कृतपरपुरुषव्याहारामिति भिया किमु ? नाहमुपालभे नंदिनि ! नंदय मंदभागधेयं मां मंदमधुरगिरा । हंत ! वत्से ! किमु मां न जानासि दीर्घसत्रं वित्रस्तं विहस्तं परिदेवनपरम् ? पश्य प्रार्थयते दीर्घसत्रः । किमर्थं क्रोधः ? किमपराद्धं मंदभाग्येन मया ? भवदाज्ञानुयायी भवदभि-लषितं पूरयितुं । निवेदय दयया यदभिमतम् । ननु शिरीषकुसुमसुकुमारं शरीरमिह कर्कशशर्करातिनिशिते भूतले शाययितुं किमुचितम् ? अंब ! त्वयि शयानायां कथं जीवेदयम् । समुन्मील्य नयनकुवलयमवलोकय मामेकवारं दीनम् । हरिणेक्षणे ! पश्य तावदितः करकिसलयेन विलूय भवत्या बालतृणैः परिपोषिता हरिणास्तिष्ठन्ति सबाष्पं । नावलोकयसि वत्से ! भवत्यैव संवर्धितं सरसीजं ! पश्य हंत ! भवत्या सादरं करकिसलयविनिहितां

यज्ञवाटप्रांतपत्रभङ्गतरंगितां रंगवल्लीं कथमनेन नयनहतकेन द्रक्ष्यामि ? ननु कल्याणि ! पर्णशालोपांतकल्पितायां उपवनवाटिकायां साक्षात्त्वयैव करकमलविरचितालवालप्रोपिता दूरानीतकलशसलिलसेचनवर्धिता नव-मालिका भवदनवलोकनादितः परं म्लाना भवत्यपुष्पवती । हंतैक-वारमपि तत्कुसुमैर्नालंकृतस्ते धम्मिल्लः । हा ! वत्से ! मयि देवतार्चन-निरते सभक्ति कुसुमान्यर्पयेत्कावांब ! हा ! चारुवक्त्र ! सायकमेकं दयया निपातय । ननु सुतनु ! समुन्नमितपरिकरयोर्ध्वमुखबद्धलंबमाना-यतरमणीयवेण्या कलशसलिलपरिपूरितोपवनपवनकंपितलतालवालतया श्रमसलिललवकलितलपनकमलया वल्कलांचलविरचितव्यजनव्यापारया चञ्चलहृदयया भवत्या श्रमापनोदनाय संसेवितामिदानीं कथमिव द्रक्ष्यामि नमेरुतरुतलवेदिकाम् ? न हि दया ते ? रुदतीः जराजीर्णाः योषितः पश्य । हा ! दैवहतक ! विरक्तस्य जरत्तरस्य ममेदृशं रत्नं प्रदर्श्य तत्र प्रेम समुत्पाद्य जहिथ । किमिदमुचितं ते ? कुरु तावदिदानीमपि मह्यमुप-कृतिम् । मामप्युररीकुरु । तात ! चारुवक्त्र ! धन्योऽसि । यतो भवदर्थं त्यक्तप्राणामनुप्रयातोऽसि । नाहं तथा । गगनं गलितमिव शिरसि । किं करोमीति बहुधा रुदंतं दीर्घसत्रं समाश्वासयितुमिव कलापिबर्हकलाप-परिष्कृताभिः लंबमानगुंजामंजुलाभिः पिंडीकृतपाटलजटाभिः परिमंडितोत्त-मांगं नीलशिलींध्रनिचिताभिः प्रचलदिन्द्रगोपमालाभिः निबिडप्ररूढाभिः अलंकृतं घनदिवसमिवातपपर्यटनासितं विशंकटसितस्थासकं ललाटफलकं चन्द्रमंडलमभितः परिवृतांबुधरं गगनमिवोद्वहन्तं अनवरतमपि चर्व्यमाण-तांबूलरसरंजिताभ्यां श्मश्रुकलापाभ्यामटवीपर्यटनखेदानलप्रतप्ताभ्यां नासा-रंध्रद्वयान्निसरद्भ्यां मूर्ताभ्यां निश्श्वासाभ्यामिव भयानकं लंबमानस्तंबे-रमकुंभमौक्तिककृतकुंडलमंडितश्रवणजाहम् चित्रकायचर्मनिर्मितवर्मालंकृत-कायं कुमुदकुवलयकमलजालाच्छादितमिव तटाकं पुंडरीकगंडकादिमृग-खंडनशौंडचंडतरकांडपरिमंडितोद्दंडमंडलाकारकोदंडपरिमंडितभुजदंडं वरा-

टिकाविराजितवैकक्षमालापरिष्कृतवक्षस्स्थलमरालमरालराजिविराजमान - सानुदेशमिव क्रौंचाचलं सुगंधबंधुरविविधकुसुममालालंकृतवेण्या गुंजन्मंजुगुंजाहारमंजरीरंजितवक्षोजमंडलया मंजीरमंजुलशिंजितसंजितराजहंसतरुणीवाण्या तरुण्या विराजमानं लुब्धकं अपि मार्गणमनोरथपूरणनिपुणं डोलायमानखंजरीटनीडमंजरीमंजुपुंजपिहितया सरण्या पुरोभागे त्वराभरादापतंतं स दीर्घसत्रः किरातराजमपश्यत् ।

दृष्ट्वा च स कुलपतिरुन्मत्त इव तात! कस्त्वं? नमस्ते विहस्ते मय्यपि शिलीमुखमेकं क्षिप्रं प्राणहरं प्रहिणु । दिष्ट्या दृष्टोऽसि । कष्टमद्य मे दूरीकुरु दयया शरेण विदार्य वज्रसारकर्कशं हृदयमिति तच्चरणजिघृक्षया क्षिप्रमुत्क्षिप्य बाहुयुगलं रुरोदोच्चैः । किरातस्तु तापससकाशमासाद्य विलपंतं तं निर्निरोधं परिदेवनपरांस्तत्रत्यांस्तापसगणानवलोक्य समंदस्मितं किमिदमाश्चर्यमर्यमांशुस्तोमप्रकाशमानेष्वाशामंडलेष्वपि अंधकारनिकर इव ज्ञानभास्करभासुरमानसेष्वपि युष्मासु मोहांधकारः? हंत! तापापनोदनपटुषु जीमूतेषु परुषतरो भयंकरोऽशनिरिव यदि शांतेषु युष्मास्वपि निर्मर्यादो रोदनध्वनिः, किमु वक्तव्यमस्मादृशेषु मूढात्मकेषु? तदलं परिदेवनेनेत्यकथयत् । आकर्ण्य च तद्वचनं सर्वेष्वपि तापसेषु "तात! गतवत्यस्मदानंदग्रन्थौ ईदृशस्य शोकस्याविर्भावः" इति सगद्गदं निगदत्सु स किरातो निधनमनयोरनुचिंत्य परिदेवनमनुचितम् । जगतीह यदा जनिश्चेतनानामनुपतति खलु मरणमपि । किंचेयं सौगंधिनी तु रजोदूषिता चारुवक्त्रध्यानपरवशीकृतमानसा समीपसंचारात्कुपितेन तपश्चरता तापसेन सुजटनाम्ना शप्ता च "यमनुचिंतयन्ती मामेवमपरिशुद्धमकरोः । तेनैव निषूदिता भव" इति । तदनेनेयं निषूदिता श्येनेनेव शारिका तदलमनेन परिदेवनेन । संसृतिविरतानां हरिचरणस्मरणनिरतानां युष्माकमिदमनुचितम् । जगत्यनुभोक्तव्यं खलु कर्मणः फलमवश्यम् । निश्चलचित्तेष्वपि युष्मासु किमिदं मनश्चांचल्यम्? को वा शक्नोति

भवितव्यतां निवारयितुम्। तद्विवेकसलिलेन संक्षालनीयो ह्येतादृशक्लेश-कर्दमः। हृदयालवाले विवर्धनीया च शांतिलतेति बहुधा सांत्वयंस्तां-स्तपोधनानुपरतौ तौ सौगंधिनीचारुवक्त्रौ पस्पर्श पाणिभ्यां आशीर्षादा-पादतलम्। अनुपदमेव तावुभावपि विकसदरुणतरसरसिजकोरकसंकाशं करचरणं चालयन्तौ रसालकिसालयारुणकोमलतरदेहौ सभ्रूभङ्गं तारतारम-विरलमुच्चैः रुदन्तावर्भकौ बभूवतुः।

क्षणादेवोद्धूयमानविमानस्तोमपक्षपुटरभसस्वनैः प्रचलत्केतुपटपटुतर-पटात्काररटितैः निबिडतरसुरनिकरपरस्परभुजाभरणनिकषणजनितरणरण-रणितैः च मुखरितादंतरिक्षादापततां सौरभकृतघ्राणतर्पणानां पारिजातजात-जातरूपमयप्रसूनप्रकराणां परागैः पिंजरितमभवदटवीतटम्। ततश्च तपोधना-स्सर्वेऽपि सर्वमप्येतदवलोक्य निरतिशयानंदसलिलक्षालितदुःखकर्दमामल-मानसा विस्मयांकुरितरोमांचांचितगात्रास्सांद्रानंदकंदलितनेत्रांबुनिष्यंदार्द्री-कृतवल्कलाः कोरकितकरसरोरुहाः कस्त्वं तात! न हि लुब्धक इव दृश्यसे। यदि लुब्धकः क्व वा दातृत्वमीदृशानामानंदानाम्। मानुषा-कृतिः किमु भाग्यानां समुदयः। किंवान्तस्संतापापहरणनिपुणो नराकृतिः जलधरः? केयं पुलिंदसुन्दरो? सुन्दरतरांगलतिकां प्रदर्शय कृपया तथ्यामाकृतिमित्यभ्यर्थयामासुः। तदा स पुलिंदपतिस्तु भोस्तपोधनाः! इयं पुलोमजा। पुलोमजाजानिरहम्। इति निगदन्नेव प्रकाशयामास दिव्यं निजरूपम्। तदानीमेव मरकतमणिश्चन्द्रकस्य पद्मरागरत्नं गुंजा-हारस्य तपनीयकिरीटं पिशंगजटापिंडस्य हीरमणिमयविचित्रचित्रकं ललाट-सितस्थासकस्य लावण्यपण्यं मुक्ताफलं कुंडलमंडलस्य नंदनवनहरिचंदन-सुममाला वराटवैकक्षहारस्य नेत्रसहस्रं चित्रकायचर्मस्थासकस्य दंभोलिः कोदंडस्य च स्थाने बभूवुरादेशाः। अचिराद्रुचिराभरणभूषिता मसृणतर-दुकूलालंकृता मणिमयकनककुसुमपरिमंडितस्तनमंडला सापि शची चकाशे।

तदनु पाकशासनस्तापसानब्रवीत्। अपत्यार्थं मामुद्दिश्य तपः

चरति अरिभीकराधिपः वज्रबाहुर्नाम । तस्मै देयश्चारुवक्त्रश्शिशुः। पुलोमजाप्येनां सौगंधिनीं अपत्यार्थं व्रतमाचरंत्यै हेमपुराधिपमहिष्यै दास्यति हेमवत्यै । क्रमशश्चानयोः प्रवर्धते तथानुरागः यथा च तारुण्यमित्यभिधाय पाणिकमलाभ्यामादाय च तं शिशुं गृहीतसौगंधिन्या पुलोमजया सममंतरधात् । तदनु चारुवक्त्रान्वेषणाय मार्गवशादागतेभ्य-स्तेभ्यो भटेभ्यः किमु दृष्टो भवद्भिर्मृगयासक्तोऽस्माकं प्रभुश्चारुवक्त्र-नामेति पृच्छद्भ्योऽद्भुतमेनमुदन्तं कथयंतस्तापसास्स्नात्वा तटाके सप्रमोदं निजाश्रममयासिषुः । दीर्घसत्रस्तु वरमालिन्यै निवेदयंतु भवंतः "मा त्यज प्राणान्पुनरपि भवत्पुत्रं द्रक्ष्यसि मा शुचः" इति भटानादिश्य निजाश्रम-पदमाससाद ।

इति श्रीयदुशैलवासि, बालधन्विकुलकलशजलनिधिकलानिधि, विद्या-
विशारद, संस्कृतसेवासक्त, कविकुलतिलक, राज्यप्रशस्ति,
राष्ट्रपतिप्रशस्तिपरिष्कृत, श्रीमहीशूरनाल्वडिकृष्णभूपसुवर्ण-
पदक—साहित्यपरिषद्रजतपदकसमलङ्कृत—जग्गुवकुल-
भूषणमहाकविविरचितायां, जयन्तिकायां
तृतीयलहरी सम्पूर्णा ॥



## ॥ चतुर्थलहरी ॥

तदनु सुरपतिस्त्वंतर्हितगात्र एव गृहीतचारुवक्त्रशिशुश्श्याम-सलिलपानादिव नीलाभिस्तमालमालाभिः पूतायास्तव स्वादुतरं नीरपूरं वयमुपस्पृशामश्चरणेनैवेदमागोऽस्माकं मर्षणीयमिति नमस्कुर्वद्भिरिवानीर-मवनमितशिरोभिर्वेतसपादपैश्च नीरंध्रिततीरायाः परिपतत्तटरुहकुसुम-निकररसचन्द्रकमंडलतया तरंगाभिहतविनतशाखाग्रनिपतितकेसरप्रसव-प्रकरतया च नवरत्नखचितचूडामणिकुसुमपरिष्कृतक्षोणीवेणीसंदेहमुपजन-यंत्यास्सलिलक्रीडावतीर्णशौरितनुकांतिलिप्ताया इव नीलायास्तरंगभ्रूलता-चालिततमालपत्रतया शुकनिकरनिशितत्रोटिकोटिपाटिततटगतजंबूफलपट-लक्षरत्पाटलरसरक्ततया च कामुकीमिव विडंबयंत्याश्चालितचञ्चलशफरी-नयनतया गणिकाया इव पुरुषाह्वानसंज्ञामाचरंत्या इव विकचकमलपरिसर-परिभ्रमद्भ्रमरझंकारकैतवेन गायंत्या इव पृथुलकच्छपाक्रांततया मथनकालिक-समुद्रमिवानुकुर्वंत्या वानरवनिताया इव संचालितनततटरुहोदुंबरतरुशाखा-शिखरपातितपक्वफलवल्लर्या दुर्बलनृपालश्रिय इव महीभृत्स्खलंत्या निज-पितृकरलालिततयेव पोषितात्मकालिमश्रियः भीताया इव भ्रमाकुलितायाः प्रतिशिलापटलरंध्रप्रविष्टसलिलपूरतया कलकलरवकैतवेन सशब्दं हसंत्याः इव यमुनायास्तटीमधितिष्ठन्तं मुनिसमुचितवेषं स्थाणुमिवाचलं विटपिन-मिव मूलावलंबितस्थितिं तं वज्रबाहुमवाप ।

स तु वज्रबाहुरवकर्ण्योदीर्णकर्णाभ्यर्णविकीर्णपीयूषशीकरं शिशुरुदितं प्रमोदभरात्क्षिप्रमुत्क्षिप्य पक्ष्मणी दिक्षु विक्षिपन्नक्षियुगलमर्भकमनव-लोक्य विहस्तो मस्तकतलविन्यस्तकुड्मलितहस्तो नाथ ! निखिलगीर्वाण-गणमकुटकोटिघटितप्रत्नरत्नमरीचिराजिनीराजितचरणारविंद ! संक्रंदन ! संक्रामितवंदारुहृदयानंद ! बृंदारकाधीश ! दयया देहि मे दर्शनमिति सहस्राक्षमस्तावीत् । पुरंदरस्तु सस्मितमस्यापत्यप्राप्तिकुतूहलमनुचिंत्य

हंत ! जगति निरपत्यता तावज्जनानां निरतिशयक्लेशजननी। तत्रापि भूवल्लभानां तु हृदयं दहति कुकूलानलवदिति विचिंतयंस्तस्य नयनयोरतिथीबभूव। वज्रबाहुस्तु पुत्रपरिमंडितकरपुंडरीकमाखंडलमवलोक्य विस्मयविस्मृतगात्रस्स्वप्नो नु ? निरंतरकृतनिदिध्यासनतया मतिभ्रमः किं ? अथवा प्रतारणाय यातुधानविरचिता माया ? आहोस्विदनवरतापत्यस्मरणप्रगुणिता रणरणिका ? किमथवा संकल्पमात्रकल्पितं वैकल्यमित्यनेकधा प्रत्यक्षस्थितमपि वितर्कयन्नानंदातिरेकादितिकर्तव्यतामूढः स्तंभीभूतः प्रकटीचकार धरणीधरताम्।

तादृक्षं क्षोणीशमवेक्ष्य विलक्षस्सहस्राक्षः करुणया तात ! वज्रबाहो ! वज्रपाणिरहं तव तपसा सुहितो हितचिकीर्षया प्रत्यक्षतामुपगतोऽस्मि। गृहाणैनमर्भकम्। अयं तु धर्मेण धरणिभरणधुरीणो भविष्यति इति वितीर्यान्तरधात्। ततोऽयं नरपतिराजन्मदुर्गतो वित्तमिवातर्कितोपनतमपत्यमादाय निरतिशयानंदसिंधुपरिप्लाव्यमानमानसो मनसातीतभावनागम्भीरवदनारविंदश्शिशुदर्शनकंदलितमहानंदो महिषीमनोविनोदनप्रकारं मनसि भावयन्बंधुजनबृंदसंभ्रमानंदकार्यकलापमनुचिंतयन्नेवं मां शिशुशयं ससंभ्रममभ्युद्गच्छंति परिजनाः। हंत ! क्व वा कथमुपलब्धोऽयमिति त्वरातिशयात्पृच्छंति बांधवाः। शिशुरत्नादित्सयाहमहमिकया पुरः प्रसारयंत्यवरोधभुजिष्याः बाहुलताः इति भावनातरंगाप्लावितहृदयस्समासाद्यारिभीकरामनधिगतापत्यतया भृशं दुःखितायै निरंतरमपि पतिध्यानपरायै निजवल्लभानुष्ठीयमानं तपो निरंतरायं सफलयतेति गृहदेवताः प्रार्थयमानायै स्वयमपि चिरात्परिगृहीतव्रतनियमतया कृशांगलतिकायै सततमप्यपत्यवार्तामिव व्याहरंत्यै भुजिष्याजनसमाश्वास्यमानायै निरलंकारायै निजमहिष्यै रत्नचूडायै स्पृहणीयदर्शनं तमर्भकं समर्पयामास।

सा तु रत्नचूडा विस्तृतायतनयनकुवलया पीयूषह्रदतरंगपरंपराभिहन्यमानेव गगनतलांतर[illegible]हृदयेव कनकाचलमूर्ध्वांतरप्रविष्टेव

सुतदर्शनमात्रेणेतिकर्तव्यतामूढा दिग्भ्रांतिस्तंभीभूता किमिदं ? कोऽयं ? काहं? किमेतत्? अपि नाम सत्यम् ? किमथवा मतिभ्रांतिः? मंदभाग्यायाः मे भवेदपिनामेदृशी संपत् ? न खलु प्रत्येमि। अथवा को वा जानाति मानवानां भाग्योदयावसरम्। अपि नाम देवताप्रसादपात्रमस्मि ? वेति डोलायमानमानसा निजकरतले शयानमावर्तमनोहरैर्ललाटतटश्रवणमूल-लंबमानैः कोमलैः केशपल्लवकलापैः दर्शनीयोत्तमागं चक्रवातपरिघूर्णितै-र्नवजलधरशकलैरिव घनदिवसं ईषद्दृश्यमानकलंकलेखांकिताष्टमीशशांकानु-कारिसूक्ष्मतरभ्रूलेखासमलंकृतं ललाटफलकमुद्वहंतं ऊर्णासनाथभ्रूमध्यं राज्यलक्ष्मीलीलाकमलाभ्यामिवाश्रवणमूलविवरप्रसृमरलावण्यपूरकुल्याभ्या-मिव मुखलावण्यसलिलचलाचलशफराभ्यामिव च लोचनाभ्यामुपशोभमानं विकचकोकनदसच्छायाभ्यां श्रवणजाहाभ्यां मनोहरं ललाटौन्नत्यश्रीविजि-गीषयेव समुन्नतघोणं लाक्षारसपाटलाभ्यां समुद्यदिंदुमंडलानुकारिभ्यां भुजशिखरभविष्यद्राज्यलक्ष्मीवदनकमलावलोकनायेव विधिविरचितपद्म-रागमुकुरमंडलाभ्यामिव कोमलाभ्यां कपोलाभ्यां विराजमानमरुणतराधर-पल्लवमरुणारुणशरीरतया संध्यारागविरचितमिवाचिरारूढतुहिनकिरणकला-कलापकल्पितमिव जतुरसस्नापितमिव माणिक्यमंदिराभ्यंतरगतमिव किंशुककुसुमनिकरनिरंतरनिचितमिव कुंकुमकर्दमचर्चितमिव रुधिरच्छटा-मुद्वमंतमिव धातुधूलिपटलविलुठितमिव पारावारतीरमिव विद्रुमलतारुणं जरत्तापसमिवायतकूर्चं स्यंदनमिव परिस्फुरच्चक्रचरणं उपरक्तसुधांशुमिव केतुसमाक्रांतपादं दिवाकरमिव करप्रकाशितपद्मं पोतमप्यानंदसिंधौ मज्जयंतं तमर्भकमद्राक्षीत्।

तत्क्षणमेवांतःपूर्णतया हृदयाद्बहिर्निस्सरंती प्रीतिरसच्छटेव निस्सरति स्म तस्याः पयोधराभ्यां पयोधारा। तदनु सा रत्नचूडा व्रीडाभरारुणित-मुखीदंप्रथमसुतस्पर्शशर्मोद्गतस्वेदकणिकाप्रकरतारकितावयवा दृश्यमानकति-पयोडुमंडलांचिता प्रतीची हरिदिव संध्यारागेणोपांतप्रदेशं तेन सुतेनोत्संग-

देशमलंचकार । तदनु दुंदुभिगभीरघनध्वानदंतुरिततया मंगलकाला-गरुधूपधूमवितानिततया च घनदिवसशंकया संमदवितत्तीकृतबर्हकलापैरा-रब्धतांडवैरुदग्रग्रीवैरगारनीलग्रीवमिथुनैः परिवृतं सुतदिदृक्षया ससंभ्रमं गतागतललनाजनचञ्चलमंजुमंजीरशिंजितश्रवणेन भवनदीर्घिकाभ्यस्समा-गतान्गमनार्गलीभूतान्राजहंसान्सभ्रकुटि चरणकमलेनैवोत्सारयंतीभिः परस्पर भाषमाणार्भकलाभोदंताभिस्ससंभ्रममभिपतद्भुजिष्याजनभुजसंघर्षणपीडित-बाहुलताभिः पुरंध्रीभिर्नीरंध्रितं सप्रमोदं परस्परमर्भकादित्सया प्रसार्यमाण-पाणीनां धात्रीणां करवलयावलिरणितैश्चापूरितमभवदवरोधभवनम् ।

अथैकादशदिवसे स तु वज्रबाहुः राकामिव द्विजराजमंडलमंडितां रमणीवेणीमिव प्रसूनमालापरिष्कृतां वेश्यामिवानेकपुरुषाक्रांतां पञ्चशरशर-पीडितामिव शीतलपटीरसलिलसिक्तां शंकरशरीरश्रियमिव स्फटिकभि-त्तिधवलां कारयित्वा सभां पुरस्कृतपुरोहितो द्वितीयाद्वितीयश्चामीकरविष्टरे समुपविष्टो यथाविधि तस्य पुत्रस्य जीवसेन इति नाम चक्रे । ततश्चोत्सव-समयेषु गतेषु कतिपयदिवसेषु स शिशुरुत्तानशयः कथंचिदवाङ्मुखो भूत्वा धवलतरकौशेयकंचुकपरिष्कृतारुणमृदुलशरीरो धात्रीजनैः खेलयितु-मनतिदूरे विनिहितं मुक्ताहारं मन्दं मन्दं कथंकथमप्युपसरन्मृणालमिव राजहंसो लोहिततुंडेन गृहीत्वा तत्रत्यानानंदयामास । ततश्चांतरांतरा निबद्धकनकमयकिंकिणीगणरमणीयेन विद्रुममणिमयेन दाम्ना परिमंडित-तुंदिभनितंबतटस्स जीवसेनः कंठे डोलायमानं मौक्तिकमालाकलापं लालाजलैर्निजशरीरधारणयोग्यतामुत्पादयितुमिव क्षालयन्निजहाटकतुला-कोटिनादं निशम्य स्तोकमिव विवलितकंधरः पश्चादवलोकयन्जानुकर-कमलसाह्यश्चचार कुट्टिमतलेषु । तथैव तत्र तत्र संचरन्पवमान इव प्रकंपितशिरोभिः कंचुकिभिरसकृच्चुम्बितः तेषां करेभ्यश्च्यवमानो मृदुलतरं कलस्वरमर्थविकलं लालाजलकलितं स्वैरनिर्गतमस्फुटमनुलपन्वर्णबृन्दं तत्र तत्र भित्तितलप्रत्युप्तमत्ययतममलमवलंब्य मुकुरं मंदमुच्छ्वास च निजप्रति-

बिंबमवलोक्य परोऽयं मत्सदृश इति मात्सर्यादिव सहुंकारमूष्ममालिन्येन तिरस्कृत्य च करकमलताडनेन शैशव एव प्रकाशयन्निव क्षात्रवृत्तिं मृगमदतिलकशंकामुपजनयंत्या लंबमानया कोमलनीलरुचिरुचिरचिकुर-लेखया दर्शनीयललाटः सहासं प्रधाव्य च मुकुरागाराभ्यंतरं प्रतिमुकुरं प्रति-बिंबितबिंबतया भगवतो विश्वरूपं विडंबयन्निव परिगृहीतानेकशरीरस्स्वात्म-जिघृक्षया ससंभ्रममनुधावतो धात्रीजनानायासयंस्तंभयंश्च प्रार्थितस्तै-स्सहासं तत्करांगुलिमवलंब्य व्यत्ययविनिहितचरणपल्लवो मन्दंमन्दमस्पंदत।

एवं क्रमेण स्वयमेव प्रचलन्बालकस्सवल्गितं समंदहासं समधुरालापं सशिरश्चालनं च आत्मानमादातुकामस्य परिजनस्य सकाशमासाद्य प्रतार्य च तं जनं सरभसमितरकरमुत्प्लवमानो विघटयन्परिजनानां तत्तत्कार्यैक-तानतां क्रीडामयमिवानंदमयमिवौत्सुक्यमयमिवोत्साहमयमिव प्रासादमा-पादयामास । कदाचिदंसतललंबमानकबरीको लंबितडोलायमानचूडामणि-रमणीयललाटशिखरो मृदुलतरकुंतलावलिः मृगमदतिलकविलसदलिक-फलको मसृणांजनकालितलोचनपुंडरीको मुग्धकस्तूरिकास्थासकमंजुल-कोमलकपोलफलको नीलतरमृदुलमसृणांशुकविशेषवारवाणस्थगितसुकुमार-शरीरः प्रेंखोलत्पृथुलमुक्ताफलकलापकलितविशालवक्षस्स्थलो हीरप्रचुरांगद-मंडितबाहुदंडोऽतिमांसलमणिबन्धतया वलितरंगशंकामुपजनयद्भिः प्रत्युप्तै-रिव तनुतरैः कनकवलयैरलंकृतकरकमलो मांसलतया लावण्यतरंगैरिव मनोहरवलिरेखातरंगैः कमनीयोरूयुगलो मंजीरमंजुलचरणकिसलयस्स जीव-सेनः प्रविशन्सभां मन्दं मन्दमायातश्च केसरिकिशोर इव समायाति नरपति-तनयः पश्यपश्येति प्रदेशिन्या परस्परं प्रदर्शयद्भिः दूरस्थितैस्ससंभ्रमं समुन्नमितशिरोभिः विततपक्ष्मपुटैस्सभास्तारैरवलोक्यमानः पीयमान इव नेत्रपुटाभ्यां सामंतनरपतिभिराजिघृक्षया पुरः प्रसारितेषु प्रवेष्टेषु सशिर-श्चालनं सत्वरमुपसृत्य पितुरंतिकमुत्संगतलमलंचकार ।

एवं क्रमेणातिक्रांते च सकलजनमनोनयनानंदवितरणनिपुणे बाल्ये

विरचय्य च यथाविधि नृपालस्तस्य चौलोपनयनादि कर्म विद्यापरिग्रहाय सद्गुरुसादकरोदेनं जीवसेनम् । अथ सरस्वती मात्सर्यादिव राज्यलक्ष्मी-प्रवेशात्प्रागेवेतरदुर्लभमस्य हृदयमाविशत् । जीवसेनस्तु गुरुमुखादधिगत-सकलानवद्यविद्यस्समासाद्य च गुरोरनुमत्या पितरं क्रमशः प्रवाह इव वर्षेण वैश्वानर इवाज्येन जलनिधिरिव सुधांशुना यौवनेन ववृधे । एवं प्रवर्धमानस्तु स जीवसेनः पुरुषोत्तममनुकुर्वन्सुलक्षणैस्तिरस्कुर्वन्रूपेण शंबराराति गजरथतुरगपदातिपरिगतः पितुरनुमत्या प्रस्थितश्च दिग्विजयाय क्रमशस्तत्रतत्र समुन्नतान्नमयन्नतानुन्नमयंश्च पटुतरेंद्रियग्राम इव गृहीत-सकलविषयः निखातविजयवैजयंतीप्रकटितारिभीकराधिपप्रतापः निजसिता-तपत्रप्रच्छायप्रतिष्ठापितजयलक्ष्मीविलासः समुद्यदातोद्यध्वानशब्दापितदश-हरिदंतरालः सप्रमोदमासाद्य निरतिशयोत्सवमयीमरिभीकरां शुभे दिवसे शुभं-युमुहूर्ते पूतपाथोधिधुनीधौतोदकैस्सितदूर्वासितकुसुमप्रवालफलमणिरमणीय-गर्भैस्तापसजनसमानीतैरभिषिक्तश्च यशसेव धवलतरेण कौशेयेन परिवेष्टित-विग्रहश्शरदंबुदबृंदेन परिगतो रत्नसानुरिव सद्य एवोद्यदनवद्यहृद्यवाद्यनाद इव नाकाभोगं नाकाधिपनीकाशः काशकुसुमसंकाशधवलचामरपरिष्कृतो-भयपार्श्वस्सिह्मासनमारुरोह ।

अधिरुह्य च दीप्रमणिमयमकुटमंडितमौलिस्सकलनृपालमौलिमाला-लालितपादपीठो हरिश्चन्द्र इव सत्यात्तीकृतराज्यश्रीको दाशरथिरिव गुरुजनाज्ञानिर्वहणनिपुणः पांडुरिव धर्मभीमार्जुनादिकर्मावलोकनानंदितः नारायण इव सुदर्शनसाह्यनिहतक्रूरपरलोकोऽवनीसमवनसवनदीक्षितो दिक्कुंजर इव दानसलिलसिक्तकराग्रः समुदग्रसौंदर्यसमग्रविग्रहो रराज स राजा । इतस्तावद्धेमपुरे सापि हेमवती निरंतरमपत्यलाभाय कठोरतरव्रत-माचरंती बहुधा द्रविणार्पणेन संतोष्य दैवज्ञानपत्यप्राप्तिविषये पृच्छन्ती कृच्छ्रसाध्यमपि तैरभिहितं कर्म सादरं विदधती द्वन्द्वपरंपरां तृणाय मन्य-माना दूरीकृतमाना पावनपुराणेतिहासादिसत्कथाश्रवणनिरता निराहारा

तत्तत्कालोचितपरिजनपरिवृतापि भुजिष्येव स्वयमेव कर्मकलापं कुर्वती भूदेवबृन्दचरणसेवाहेवाका नानाविधदानानंदितदीनजना भगवन्नारायण-चरणस्मरणपरायणा कृततीव्रतरव्रततया परिश्रांता च स्थंडिलशायिनी निशीथिन्यां विस्मृतगात्री क्षणमिव निद्रासुखमनुबभूव ।

तदनु प्राभातिकमंगलवादित्रध्वानप्रतिबोधितां हर्षभरप्रफुल्लनेत्र-कमलां त्रपावनतमुखीं नवीकृतामिव दूरीकृतालस्यां निजवल्लभां तामव-लोक्य प्रतिदिनमिवागतस्सौखशायनिकस्सत्यकीर्तिः परिजनानीतमासन-मपि दूरीकृत्य प्रत्युद्गंतुमुद्यतां प्रियां निवारयंस्तत्पार्श्वे एव क्षितितले निषण्णस्सस्मितमपृच्छत् । ननु सुमुखि ! प्राभातिकं कमलमिव ते मुखकमलमिदं प्रफुल्लं पिशुनयति शुभोदर्कम् । कठोरं व्रतमाचरंत्या अपि तेनैवाद्य पश्यामि ग्लानिमंगेषु । अपिनाम प्रसन्ना गृहदेवता ? विलसति चांकुरितमंदस्मितमधुराधरं वक्त्रं कमपि हर्षोदन्तं गदितुमुद्युक्तमिव । निवेदय तावदपिनाम प्रसन्ना ते देवतेति । पृष्टा च सा हेमवती मंदाक्ष-मंदाक्षरा क्षरदमृतधारासारसारां गिरमेव मुदगिरत् ।

नाथ । किमिति ब्रवीमि ? कथं कथयेयं ? रोमांचयति गात्रं स्मरणमात्रेण । चिरविरचितव्रतजनितश्रमपरवशावयवतया स्थंडिलशायिनी संवेशवशा प्रत्युषसि स्वप्ने शरत्समयविशदेऽप्याकाशे काशकुसुमसंकाश-विततविशकलितावदातपयोदाभ्यंतरात्कामपि तरलतारतारां कनकच्छेद-कांतिमाविर्भूतां विद्युतमपश्यम् । सविस्मयं तामेवावलोकयंत्यां मयि शुभ्राभ्रशकलद्वयं कलहंसमिथुनतां प्रपन्नम् । तदुपरि सा तु विद्युदुद्योतमाना अमानुषतरुणीरूपेण परिणता दधाना च पाणिपल्लवे जातरूपमयपारिजात-प्रसूनमालां शरदंबुदविशददुकूलपरिमंडिता गगनतलादवतीर्य च मदुपकण्ठं समंदस्मितं गृहाण वत्से ! मत्सेवैकताने ! मालामिमामिति विन्यस्य तां पारिजातस्रजं मत्पाणितले क्षणादंतरधात् ।

हस्तगता तु सा सुममाला स्पृहणीयरूपस्त्रीशिशुरभवत् । अहं

पुनस्सविस्मयं सादरमवलोक्य शिशुरत्नं किमिदमद्भुतमिति हर्षभरादुन्मीलितलोचना प्रबुद्धा च शिशुरिक्तहस्तं निर्वर्ण्य वर्णनातीतदुःखभरदंदह्यमानहृदयापि प्राभातिकमंगलातोद्यध्वानेन मंगलतरस्वप्नवृत्तभावनया च समाश्वासिता शुभोदर्के निहितदृष्टिः प्रहृष्टास्मीति । एतदवकर्ण्य प्रमोदपरवशे तस्मिन्सत्यकीर्तौ ननु कल्याणि ! उषःकालिकस्स्वप्नोऽयं भाविशुभाशंसी। तत्रापि व्रतनिष्ठायास्ते समुपनतोऽयं तावदीदृशस्स्वप्नः। श्रद्धया विरचितं व्रतं तावन्न कदापि भविष्यति निष्फलम् । दिष्ट्या वर्धसे । हंत ! ते प्रसन्ना देवता । व्रतमपि प्राप सफलतां भविष्यस्यचिरादेवापत्यपूर्णोत्संगा । भविष्यति चास्मत्कुलमुद्धृतम् । अस्मत्पितरश्च वंशकरोरदर्शनेन प्रहृष्टा नर्तिष्यन्ति । किं बहुना ! धन्या वयमधिगतनिरतिशयभाग्या वयमिति व्याहरति, ससंभ्रममुपेत्य देवतागारद्वारपालकः प्रणिपत्य सप्रश्रयं देव ! देवतागाराभ्यंतरे शिशुरोदनध्वनिरिव श्रूयते । महदिदमाश्चर्यं न केनाप्युद्धाटितं कवाटम् । नाप्यंतः प्रविष्टं केनापि । एतदवकर्ण्य देवः प्रमाणमिति निवेद्य विरराम ।

निशम्य च तदुदन्तं प्रमोदपारावारतरंगपरिप्लाव्यमानांतरंगावप्यपिनाम सत्यम् विस्मयावहोऽयमुदन्तः । अपिनाम शिशुरोदनं तत् ? कथमनुद्धाटितकवाटे देवागारे तावदंतः प्रवेशः ? न किमु निद्रितो भवानिति बहुधा हर्षातिरेकात्परिपृच्छन्तौ पुलककवचितगात्रौ समुत्थाय कृतस्नानौ मंगलालंकारालंकृतौ शिशुदर्शनकुतूहलाक्रांतस्वान्तौ कार्तांतिकनिर्दिष्टशुभंयुमुहूर्तमनुपालयन्तौ कथमिदमद्भुतं संवृत्तम् ? केन तत्र विनिहितः शिशुः ? कथं वर्तेत ? कदा द्रक्ष्यामः ? इति परस्परं संलपन्तौ तावुभावपि जायापती प्राप्ते च कार्तान्तिकनिर्दिष्टे शुभे मुहूर्ते मंगलवादित्ररसितमुखरितं प्रविश्य देवतामंदिरं हय्यंगवीनप्रज्वालितदीपपल्लवविलसच्छातकुंभस्तंभभासुरोभयपार्श्वायां परिमलकृतघ्राणतर्पणमनोहरधूपधूमलतावितानितायां कनकशृङ्खलानियमितामलनवपल्लवमालापरिष्कृ-

तायां नवरत्नमयडोलायां शायितं शिशुं सुरतरुपल्लवराशिमिवारुणतरशरीरं रुदंतमपश्यताम् ।

तदानीं तत्र समुदचरदशरीरिणी वाणी । वत्से ! हेमवति ! संतुष्ट्या मयानुगृहीतासि । गृहाण प्रदत्तमिदं स्त्रीशिशुरत्नं चिरत्नव्रतोपार्जितमिति । सविस्मयं तदवकर्ण्य हेमवती हर्षभरप्रफुल्लनयनेन्दीवरा प्रणिपत्य देवतां तदादाय कुसुमसुकुमारमपत्यं पत्यनुमत्या निजांतःपुरं प्राविशत् । प्रविश्य च तस्यां हेमवत्यां शशोदरमृदुलतल्पसुकुमारे पर्यंके निषण्णायां प्रमदभरितप्रमदाजनैः कैश्चिदारब्धवीणास्वरसंयोजितालापतया स्वजातीय-स्वरशङ्कयोपवन-रसाल-किसलयस्थगितकोकिलालापैरतिसुभगो-दानादित्सया समायातस्य तत्र मदिरास्वादमदघूर्णिततारकाणां वार-रमणीनां रमणीयतरं नर्तनमवलोक्य श्लाघमानस्य भूसुरनिकरस्य साधुवादै र्मुखरितो दीयतामौर्णमंशुकं द्विजराजाय । पत्रोर्णममुष्मै । सुवर्णभूषणमस्मै । कनकचषकस्तस्मै । विनिहितमिह परिमलबहुलकुसुमसंभारभरितकनक-भाजनमत्र । मलयजरससौरभसमाकृष्टषट्चरणगणझंकृतिशब्दापितं कल-धौतभाजनमिह । वित्तराशिरत्र । इदंप्रथमप्रसूतवत्सानामुदीर्णसुवर्णाभरण-मंडितानां गवां कुलमित्यनुलपतां प्रयोजकजनानामादेशवचनैरतिमनोहर-स्तत्रतत्र लब्धद्रविणानां द्विजानां वत्से ! चिरं जीवेति व्याहरतां चाशी-र्वचनैर्मुखरितो विविधमंगलवादित्रगभीरध्वानपरिगुंभितो निरंतरोत्सवमयः प्राकाशत स तु प्रासादः ।

ततश्च स सत्यकीर्तिरेकादशे दिवसे तस्या बालिकायाः जयन्तिकेति नाम चक्रे । क्रमशः प्रवर्धमाना सा तु जयन्तिका वादित्रे चित्रे भरत-शास्त्रे स्त्रीपुरुषलक्षणपरीक्षायां सीवनकर्मण्यशेषभाषासु नानावेषेषु नूतना-ख्यायिकादिकथानिर्माणे नर्मालापे वीणावेण्वादिवाद्यकलापवादने गाने विचित्रपत्रभङ्गकर्मणि प्राणिशास्त्रे प्लवने लंघने विचित्रविविधक्रीडासु गम्भीरतरपरिहासे पुत्रिकानिर्माणे चित्रकर्मणि काव्यपठने सरसोपन्यासे

राजनीतौ कटुजनहृदयावर्जनभाषणे विविधविद्यासु परं कौशलमवाप। तथाहि कदाचिदेषा गृहीतवेणुवाद्या अनवद्यांगी वादनावसरभ्रुकुटितभ्रूयुगलतया स्थपुटितकस्तूरिकास्थासका प्रतिबिंबिताधरतया संजातकिसलयमिव तन्वती कनककेतकीकुसुमकोशनीकाशशालिप्रकोष्ठदेशा प्रतिबिंबितकोमलकरदलतया पल्लवितमिव निस्सरद्रागवैचित्र्यमिव च वेणुमाकलयन्ती कदाचिद्वीणावादनेन सरस्वत्या अपि त्रपामुपजनयन्ती कदाचिदारब्धनृत्या दिदृक्षया समागताभीरंभोर्वशीप्रभृतिभिरप्सरस्संहतिभिस्संश्लाघ्यमाना भरतशास्त्रमेव किमु गृहीतनारीरूपमिति शङ्कामापादयन्ती कदाचिच्चित्रकर्मणि प्रवृत्ता तत्तद्व्यक्तितादात्म्यमुदंचयन्ती कदाचिद्गानैकताना शुष्कमपि तरुं पल्लवयन्ती गंधर्वललनाजनमपि शिक्षयन्ती कदाचित्पत्रभङ्गरचनाप्रवृत्ता सत्यमिवोपवनं प्रदर्शयन्ती कदाचिद्धर्मोपन्यासेन दुर्जनमपि सज्जनमापादयन्ती कदाचिज्जलकेलिषु शफरीं विडम्बयन्ती कदाचित्काव्यवाचनावसरे गमकधोरणीं प्रदर्शयन्ती कदाचिन्मृदंगास्फालनेन सकलजनहृदयमुल्लासयन्ती सकलविद्यास्वेवं निष्णाता चिरंतनपुण्यविशेषपिशुना सकलानपि जनान्विस्मापयन्ती पित्रोरुदपादयदपारां मुदम्।

ततश्चाटवीव वसंतश्रिया विभावरीव शरच्चन्द्रचंद्रिकया मालतीलतेव कुसुममंजर्या हेमद्युतिरिव पावकशुद्ध्या सरसीव सरोरुहवीध्या कादंबिनीव सौदामन्या सुरसरणिरिव तारकापंक्त्या गजवशेव मदजललेखया जयंतिका तारुण्यश्रिया स्पृहणीयतरतामवाप। तदनु निर्वर्ण्य तारुण्यं नपुंसकमितीव क्वापि लीना बाल्यलीला। तारके चावामिवेयमप्यपांगवशतां नीतेति प्रदर्शयंत्याविव श्रितापांगे बभूवतुः। हृदि विजृंभमाणं मनोभवमिव विडम्बयन्तौ कुशेशयकोकनदस्पर्धिनौ वक्षोजाववर्धेताम्। तरुणजनहृदयनिकृन्तनधुरीणं मनसिजचक्रमिव विपुलतरं नितम्बमंडलं रराज। एवं तारुण्यस्पृहणीयलावण्या सा तु हरिणेक्षणा कदाचित्सखीभिरवरोधमसृणवरभित्तिलिखितेषु निखिलजगन्मूल्येषु विलोचने विलोभयन्ती

तेष्वेकतमं तेजोविशेषदेदीप्यमानमतिगम्भीरप्रकृतिं सौन्दर्यलक्ष्म्या विहार-स्थानं रतिव्यथानिवारणाय शंकरभीतिशंकया नृपालकुमारतामापन्नं शंबरा-रिमिव राजकुमारमवलोक्य प्रसृमरस्मरवैश्वानरज्वालया भस्मसात्कृत-हृदयतयेव गलितत्रपा कोऽयमिति निजहृदयनिर्विशेषां प्रियसखीं मराल-सेनामप्राक्षीत् ।

पृष्टा च सा मरालसेना समवगम्य हृदयमस्याः परिहासाय किमप्यजानन्तीव तमेकमंतरान्यमन्यं नृपकुमारं प्रदर्शयन्ती तस्य तस्य च नामावेदयामास । तदानीं परिकुपितया तया जयंतिकया तं सर्वमपि निराकृत्य मन्युभारान्नरपतिदुहिता भ्रुकुटितभ्रूलता सखीमुपालभमाना मानातिरेकात्सरभसमन्यतो निरगात् ! तादृशीं तामवलोक्य मरालसेना हन्त ! सत्यमेव कुपितेयम् । किं करोमीति सरभससुपसृत्य सपादपतनं समंद-स्मितं सविनयं च क्षंतव्यमागो मदीयमेकवारमिति सविभ्रमं तत्करपल्लव-मवलंब्य सानुनयं चित्रोपकंठमानीय वक्तुमारभत । ननु सखि ! यमुद्दिश्य पृच्छसि, निवेदयामि तस्य वैभवम् । शृणु तावत् । अस्ति प्रशस्त-तमारिभीकरा नाम नगरी । तामधिवसति गुणगणमणिरोहणाद्रिर्जीवसेनो नामावनीपतिकुमारः सोऽयमिति न्यवेदयत् ।

निशम्य च तदुक्तिं तदासक्तचित्ता जयंतिका संप्रेष्य च सखीजना-नितरान्विविक्ते ननु मरालसेने ! भवतीं तावदात्मनिर्विशेषं हृदयमित्या-वेदयामि । तद्भवत्या न परिहास्योऽयं जनः । वृषस्यन्तीति न तावदन्यथा कार्यं हृदये । किमिदमेवमिति न ज्ञातव्यम् । ललनाननुगुणं हृदयमिद-मिति न चिंतनीयम् । निर्लज्जतां धिगिति नाप्यूहनीयम् । स्त्रीजनप्रतीपेयं प्रवृत्तिरिति न मन्तव्यम् । त्वयि न्यस्तविस्रंभा प्रकाश्यं हृदयमिदं निवेदयामि । तद्दर्शनात्प्रभृति तदायत्तं संवृत्तं चित्तम् । यद्यपि न परीक्षिता तस्य स्थितिः । नाप्यवकर्णितस्तस्य गुणगणः । न चिंतितस्तस्य पराक्रमोऽपि । नाप्यवलोकिता तस्य संपत् । नैव विचारितं तस्याधिपत्यम् ।

न चर्चिते युक्तायुक्ते। हन्त! न जाने किमर्थमेवं संवृत्तास्मि इति। तद्रूपविलोभिता वा? किमथवा कामपरवशता वा? आहोस्वित्तारुण्यकार्यं वा? किमथवा जन्मांतरसंस्कारविशेषः? किमिति ब्रवीमि? कथं कथयामि? केन प्रकारेण निरूपयामि हृदयवैकल्यम्? कथं प्रदर्शयामि मनश्शैथिल्यम्? ननु मरालसेने! कदापि दृष्टा वा भवत्या मय्येवम-धीरता निर्लज्जता विवेकविकलता स्मरपरतन्त्रता योषित्स्वभावप्रतीपता समतिक्रांतमर्यादता? एवं भवितुं जन्मांतरसंबन्धसंस्कारविशेष एव निदानमिति प्रत्येमि। अत एव अयस्कांतमणिरिव लोहं तद्रूपमाकर्षति मे हृदयम्। स तु दूरे स्थितोऽपि सन्निहित इव प्रतिभाति। असंस्तुतोऽपि संस्तुत इव। अनवलोकितोऽपि विलोकित इव। तद्भवत्या तथा प्रयति-तव्यं, यथा न भवेन्मम संकल्पः स्वप्नस्वापतेयकल्पः इत्यकथयत्।

श्रुत्वा च तद्वचनं मरालसेना सुचिरं विचिंत्य च ननु सखि! भवत्यपि एवं भवतीति न चिंतितं मया स्वप्नेऽपि। साधु चिंतितं भवत्या। हृदयानुरूपमभिहितम्। आभिजात्यानुगुणं व्याहृतम्। रूपानुरूपमभि-लषितम्। गुणानुगुणं व्यवसितम्। सत्यप्येवं स तु जीवसेनोऽनेककन्या-पितृभिर्भूपतिभिरसकृदभ्यर्थितोऽपि पितृभ्यां सानुनयं प्रार्थितोऽपि विवाह-विमुखो निजरूपसंपत्तिमीदृशीं काननचंद्रिकामिव निष्फलीकुरुते। सकल-नृपालमंडलमिवेंद्रियग्राममपि स्वायत्तीकृत्य परिपालयति महीमंडलम्। तदिदानीं कथमिव ते संकल्पस्सफलतां व्रजेदिति न जानामीति निवेदया-मास। एवं निवेदिता जयंतिका किमिदम्? किमेवम्? कुतो वा नियतिरेव-मतानीत्? किमर्थं निरर्थकमाशांकुरमजनयन्मनसि? अपि नाम सत्यं यदभिहितं मरालसेनया? यदि सत्यं कथमितः परं प्राणिमि? क्रीडति खलु विधिरेवंविधचेष्टया। यदि न तत्प्राप्तिश्शून्यमिदं जगत्। किमनेन पितृगृहभवेन वैभवेनेति बहुधा नितांतचिंतासंताननतंतुस्यूतमानसेव तदेक-ध्यानशंकुकीलितेव च नासदन्यकार्यकलापेषु व्यग्रा। कदाचित्सज्जीकृत-

दंतकंकतिकाभिस्सखीभिरभ्यर्थितापि कवरीप्रसाधनाय किमपि विचिंतयंती न हि मयि प्रसन्नो जीवसेन इति सकृदेवोत्तरयंती कदाचिदाहूता च भुजिष्याभिरभिषेकाय अरिभीकराधिपस्मरणमात्रेण घर्मसलिलैरभिषिक्तास्मि। किं पुनरभिषेकवार्तयेति कथयंती कदाचित्क्रियते लाक्षारसैश्चरणकिसलय-मस्माभिस्सरागमिति निवेदितापि कृतमेव मनस्सरागमिति निगदंती कदाचिद्धवलीक्रियतां मुक्ताहारेण शरीरमिदमिति मुहुरभ्यर्थितापि प्रथममेव धवलीकृतं हि मुक्ताहारेण शरीरमिदमदयम् । इति व्याहरंती कदा-चित्कुसुमैरापीडयामो वयमिति सखीभिरभिहिता कुसुमशरापीडितायां मयि क्वन्ववकाशः ? इति निगदंती जयंतिका सखीजनानां हृदयेषु महतीं चिंतामुदपादयत् । तस्याश्च नासामणिरपि निरर्गलनिस्सरन्निश्श्वास-पवनचालिता कंपकैतवेन वासनाद्रव्यमस्यास्सकाशं मा समाहरतेति परिजनान्निवारयतीव रराज । मत्वा च मामंगदमनंगोऽयमंगाभ्यर्थनाय वदान्यावासमर्थीव मदाश्रयभूतामिमामुपगत इति शङ्कयेवांगदयुगलं कृशाभ्यामस्या बाहुलताभ्यां सस्रंसे ।

क्रमेण सा तु सुभद्रेवार्जुनालिंगितशरीरा बभूव । एवं शंबरारि-शरपीडिता सा तु जयंतिका जीवसेनध्यानैकताना कदाचित्तृतीये यामे सखीजनपरिवृता प्रासादोपवनमासाद्य तत्र यंत्रनिकृत्ततया समतामापादि-तानामंतरांतरा सितहरितपीतासितकुसुमविसरमनोहराभिर्वल्लीभिश्चित्रितानां समास्तीर्णविविधवर्णकुथानामिव समंततस्समुत्कीर्णसलिलबिंदुबृंदबंधुरकाह-लीनोकाशजलयंत्रकलितकरतलाभिस्स्फटिकशिलासमुत्कीर्णाभिस्समुन्नताभि-स्सालभंजिकाभिरभिराममध्यदेशानां शाद्वलानामुपकण्ठे कल्पितायां स्फटिक-शिलावेदिकायां स्तोकमिव विश्रांतिसुखमनुभूय तत्र पंजरपोषितशुक-शारिकाप्रभृतिशकुनिमनोहरालापश्रवणद्विगुणितमीनकेतनपीडा सहसोन्मत्तेव वेदिकायास्समुत्थाय चरणन्यासमात्रेण लगति मालिन्यमिति भीतिमुप-जनयतेव निर्मलेन पाटलमृदुलमृत्तिकामयतया समास्तीर्णकाषायांबरशंका-

मुत्पादयता सर्वदिक्षु सुदूरं प्रसृतेन दूरीकृतनिम्नोन्नतत्वेनानल्पायतेन वर्त्मना संचरमाणा हरिततरकदलीनिलयेषु विविधशकुनिनिकरनीरंध्रित-वेतसावसथेषु परिमलबहुलकुसुमविसरप्रवालमंजुललतागृहेषु च विलोचने विलोभयंती मसृणतरमेचकशिलाकल्पितैः कतिपयसोपानैर्मनोहरं सुधाधवलितपृथुलस्निग्धनिस्तलस्तंभप्ररोपितेषु विचित्रप्रसूननिचितहरितव्रतति-व्रातेषु निरंतराक्रांतपतत्रिप्रकरकलकलरावसंकुलं वलभितलपरिचलत्कलरव-हुंकारमुखरितं गारुत्मतफलकगोपानसीशिखरघटितचामीकरपंजरगतरुचिर-कीरमधुरापरिस्फुटव्याहारमनोहरं केकारवस्निग्धकंठनीलकंठमिथुनसनाथ-प्रतीहारं कलधौतशृङ्खलिकानियंत्रिततपनीयडोलाफलकविलसन्मध्यदेशं प्रत्युप्तमुक्ताफलप्रकरविराजमानभित्तितलं तनुतरचिक्कणानीलशिलाफलक-कृतकवाटैर्वातायनैरुपशोभमानं महिषीजनसमुचितं उपवनश्रीशिरोरत्नं भवनमभजत् ।

तत्र तावदसकृत्सानुनयं सखीजनैरभ्यर्थिता बलाद्विभूषिता च जीवसेनमेव मनसि विचिंतयंती तस्मिन्नेव डोलाफलके समुपाविशत् । तदनु रक्तं रविमंडलमनुरक्तं जयंतिकाहृदयमिव चिंतापयोनिधौ न्यमज्ज-च्चरमांबुधौ । अथ पारावतेषु नीरवमाश्रितविटंकेषु कलविंकेषु प्रविष्टभित्ति-विवरेषु पंजरकीरेषु निद्रालोलुपेषु मयूरेषु समधिगतस्वावासस्तंभेषु नाना-विधेषु शकुनिषु स्वस्वकुलायनिलीनेषु मंदस्पंदेषु विटपिषु विरतरावतया जपदिव विरक्तमिव समारूढनिद्रमिव चाभवदुपवनम् ।

अथ क्रमेण कलानिधौ सूत्रधार इव मनोभवविजयनाम्नो नाटकस्य तमोयवनिकामाक्षिपति निजकरैः भृङ्गमृदंगझंकृतिभिश्चकोरीनटीमधुर-गानैश्च कुवलयमापूरितमभवत् । वसुमत्यामपि जयंतिकायामिव स्मरानल-ज्वालया चन्द्रिकया धवलीकृतायां विजृंभमाणकुसुमबाणप्रहरणपरितप्य-मानमानसा सा तु जयंतिका मनोभवतापग्लपितशरीरतया नियुज्य कैतवेन सखीजनान्कस्मिन्नपि कर्मणि स्वयमेकाकिनी निर्गत्य तस्मान्नातिदूरे

विराजमानं मसृणतरेंदुकांतशिलाकल्पितकतिपयसोपानपंक्तितया विभाव-रीकरमरीचिसंपर्कसमुद्गलदमलसलिलधाराभिस्संक्षाल्यमानं सुदूरदृश्यमाना-भ्यंतरसन्निवेशतया सुहृदयमिव प्रकटितहृदयमतिस्वच्छतया चतुरश्रतया चोपवनलक्ष्म्यै प्रतिष्ठापितं निर्मलं मुकुरमिव कौमुदीद्विगुणितधवलिम-सुधाकरकांतशिलातलसमुद्गलदमलसलिलतया प्रमोदेन समुत्पतद्भिस्सुवर्णे-ष्टिकाच्छेदसवर्णैः सौदामनीशङ्कामुपजनयद्भिः पीनमीननिचयैरतिरुचिरं क्षरत्सोपानसलिलप्लावितत्या दूरीकृतनिद्रैस्समुत्क्षिप्तपक्षतिपिहितत्रोटि-कोटिभिस्समंद्रगम्भीरध्वानं सरभसं च समुन्नमितकंधरैस्सलिललंबित-प्रवालारुणचरणैस्सोपानतलात्प्लवमानैर्विकचपुंडरीकमयमिव विरचयद्भिः राजहंसैर्द्विगुणितधवलिमानं सलिलनैर्मल्याकृष्टहृदयेन निजकलंकक्षालना-कांक्षयेव प्रतिबिंबकैतवेन समवतीर्णेन विधुमंडलेन स्पृहणीयदर्शनं जनानां गव्ये पयसि निरादरतां अमराणां त्वमृते निराशतां चकोराणां चंद्रातपे निर्लोलुपतां कोकानां दिवसेऽपि निरुत्सुकतां सदोपजनयन्तं स्फटिक-वेदिकासनाथतटदेशं कांतिधवलितचतुराशं नैर्मल्यन्यक्कृतशरदाकाशं विडम्बितसितभसितधवलिममहेशं धवलिम्नां कोशं धौतद्युतिधिक्कृतदुग्ध-सरिदीशं सरोवरमवाप ।

अवाप्य च सा जयंतिका स्फटिकवेदिमध्यमध्यासीना वामकर-किसलयतलविनिहितकोमलकपोलफलका किमप्युन्मत्तेव विचिंतयंती मात्सर्यादिव मरालमिथुनमुपालभमाना तुषारशीतलमंदगन्धवहचालित-कुटिलकुंतलावलिर्धवलदुकूलालंकृता सुन्दरांगी वनलक्ष्मीरिव रराज । तदानीमहं तावद्गन्धर्वपतिश्चित्ररथो नाम विमानेन वियति पर्यटन्निषण्णां विषण्णहृदयां तामेकाकिनीं हरिणाक्षीमद्राक्षम् । तद्दर्शनमात्रेण कयापि विकृत्या विवेकविकलः कुसुममार्गणमार्गणजर्झरीकृतहृदयोऽनिर्वचनीयेन मोहेनांधीकृतस्तत्संश्लेषणाय कुतुकी तत्संश्लेषणमंतरा प्राणधारणमशक्यं मन्वानः ज्ञातपूर्वेऽपि तदुदंते स्मरपरतन्त्रतया तत्रैव नियन्त्रितोऽभवम् ।

को वा शक्नोति भवितव्यतां निवारयितुम् ।

अहं तावद्विमानादवरुह्य रिंसया तां कुरंगशाबाक्षीं अक्षीणलावण्यां न्यक्कृतसुरपण्यांगनां सकलतरुणहृदयदरीकेसरिणीमिव प्रविशंतीं मानस-विनिहितजीवसेनां समुत्कीर्णामिव लिखितामिव प्रत्युप्तामिव कीलितामिव निष्पंदांगकां जयंतिकां मन्दं मन्दं समुपसृत्य पश्चादसितायते तस्याः नयने पिधातुकामः प्रसारितवान्पाणियुगलम् । पश्चात्प्रसारितपाणियुगले च मयि तन्मुखाभिमुखं चिंतानिस्तरलस्वांततया साध्वसेन समुत्क्षिप्तेव विधुतेव चालितेव च सरभसं समुत्थाय मामवलोक्य कंपमानहृदया रोषकषायितलोचना भ्रांतचित्ता चक्रवातूलभ्रामितेवास्थिरस्थितिरितिकर्त-व्यतामूढा धावितुमप्यस्वाधीनचरणा निरतिशयावेगानिस्सृतवाणी स्तंभित-गात्री क्षणमिव तस्थौ । तादृशावस्थां तामवेक्ष्य विलक्षोऽहं ननु पक्ष्म-लाक्षि ! किमिदमकांडे भीतिः ? कोऽयं संभ्रमः ? कुतो वा आवेगः ? पश्य मां गन्धर्वपतिं चित्ररथम् । पूरय मे मनोरथम् । दैवयोगादागतोऽस्मि । भवादृशमनुष्याणां मादृशगंधर्वसम्बन्धो दुर्लभः । दिष्ट्या संघटनमिदम् । भवती तावन्निरतिशयसुकृतवतीति जानामि । यतोऽहं स्वयमागतः । तदिदानीं शंबरारिशरविघूर्णितचेतसः भवदधीनस्य पूरय मे मनोरथम् । व्रजतु ते सौन्दर्यमिदं सार्थक्यम् । लावण्यमिदं तारुण्यमिदं सौकुमार्य-ञ्चेदं मास्तु काननचन्द्रिकाकल्पम् । अनल्पाभिलाषकषायितस्वांततया परवशोऽस्मि । दयां कुर्विति सविनयमकथयत् ।

तदा सा स्तोकमिव स्रस्तसाध्वसा सोल्लुंठनं किमिदम् ? महदिद-माश्चर्यम् । मानुषीं योषितं मामभिलषसि गंधर्वपतिरपीति । देवविशेषे लब्धजनिरपि स्वाश्रितजनमनोवैक्लब्यनिवारणशक्तोऽपि कृत्याकृत्यविवेक-निधिरपि मनश्शैथिल्यलब्धविकारः केवलं कामपरतंत्रः मय्यनुरक्तोऽसि । हंत ! किं ब्रवीमि ? तद्विरम । जीवसेनमंतरा नाहमन्यं कटाक्षेणाप्यव-लोकयामि । तदितः क्षिप्रमेव प्रस्थितो भवेति सामर्षमब्रवीत् । तदाकर्ण्य

दैन्येनाहं तु ननु कल्याणि ! किमिदमेवमभिधीयते ? देवविशेषो मनुष्येषु कृतानुरागो दृष्टपूर्वश्श्रुतपूर्वश्च । मेनका विश्वामित्रमकामयत । पाकशासनोऽप्यहल्यामूर्वश्यपि विक्रमम् । किं बहुना ! बहवो देवविशेषा मनुष्येष्वनुरक्ताः । तदलं विचारेणेति यदा तदालिंगनोत्सुकोऽभवं, तदा भीतभीता पवनप्रकंपितकदलीव कंपमाना मानातीतामर्षस्फुरदधरपुटा सा जयंतिका मूर्ख ! तिष्ठ तावद्दूरे । यदि कदापि जीवसेनमंतरा नान्यं पुरुषं मनसापि चिंतयेयम् । नृशंस ! राक्षसीं वृत्तिमाश्रित्य विरचितकरालकर्मतया प्राप्तो भव नृशंसतानुरूपामस्रपतामित्युक्त्वा सरभसं तस्मान्निरगात् । तस्याः पातिव्रत्येन भवेयमेवमेवेति निश्चित्य भिया तामनुगतः दैन्येन सांजलिबन्धं ननु महाभागे ! क्षमस्व मदीयमिममपराधम् । धिङ्मम स्मरपारवश्यम् । कृपया शापावधिमनुगृह्य पालय मां इति प्रार्थितवान् ।

तदा सा त्वनुकंपया किंचिदिव विचिंत्य यमनवरतमपि चिंतयामि तेनैव जीवसेनेन निषूदितश्शापान्मुक्तो भविष्यसीत्यभिधाय सरभसं प्रासादं प्राविशत् । शप्तश्च तया संतप्तहृदयः परिगृहीतभयानकयातुधानजन्मा घोरतरे कांतारे पर्यटन्सत्वपिशिताहारः तपस्विजनानां तपो विघटयन्मखप्रियोटजतटविशङ्कटाटवीमेनामगमम् । ततश्चिरं पर्यटता मया तावदाचरिते मखप्रत्यूहे प्रकुपितस्त्वया स मखप्रियो मारयामास माम् । वत्स ! जीवसेन ! मम तावन्निशाचरजन्मनो निदानमेतदेव त्रिकालज्ञेन तेन मुनिना मखप्रियेणानुजिघृक्षया भवानेव नियुक्तो मम निशारणाय । ननु सोऽयमसि जीवसेनः । यश्च पञ्चशरशरविशीर्णहृदयया तयानुचिंत्यते । तात ! मा भूदियता कालेन येन केनापि सा परिणीता स्यादिति मनसि चिंता । न तावदतीतो महान्कालः । किंतु शापग्रस्तेन मया नीताः षण्मासाः । किञ्च कुत्र वा याति भवंतमंतरान्यत्र तच्चित्तम् ? निरंतरमपि भवंतमेव चित्रगतं समीक्षमाणा सखीमुखाद्भवदुदंतमेवाकर्णयन्ती भवद्ध्यानैकाहारा कालमतिवाहयति । तदितो यावदभिलषस्यदर्शनं न तावत्

दृश्यसे केनापि। मदनुग्रहात्तदिदानीं छन्नरूपो निर्निरोधं प्रविश्य तदवरोधं गांधर्वविधिना भवदेकजीवितामुररीकुरु। याहि वत्स! कल्याणाय। पश्य तावदियमेव सरणिर्हेमपुरस्य। क्षिप्रमेवाप्नुहि। भद्रमस्तु। सुखयात्रा भवतु तवेत्यभिधायांतरधात्स गंधर्वपतिः।

अंतर्हिते च तस्मिन्सत्वरं तया जयंतिकया संयोजयितुमेनं जीवसेनं दूतीव मधुरगम्भीररवा कादंबिनी समाश्लिष्टसौदामनी समंतादाविरासीन्न-भोंकणे। जीवसेनस्तु प्रतिदिवसमप्यनवरतमंतराले प्रधावतो रवितुरगस्य दुःखापनिनीषया विधिना वियति निरंतरविरचितदृढतरविततपृथुला-योमयाट्टमिव तदुपरि परिधावतो रविरथचक्रस्य गभीरघोषशङ्कामुपजन-यन्तमिव सस्तनितं तमोमयमिव पांथानां जगत्याश्च हृदयमाकलयन्तं पुष्करमंडलमपि कुवलयमयमिव विरचयन्तं मा भूवन्नष्टकाष्ठामहिष्योऽपि विशिष्टजनदृष्टिगोचरा इति विधिविरचितगारुत्मतभित्तिवलयमिव लोका-लोकशिखरिचरमतटविशंकटांधकारसोदरं पुंजीभूतकल्परात्रिकल्पं तपनातप-तापपरिजिहीर्षया तमालपलाशस्तबकस्तोमकल्पितविततकायमानमिवांजन-गिरिमिव वियति डयमानं वातविततीकृततूलपुंजमिव मषीकालितं प्रसृम-रसौदामनीलताततितया लीलासमुद्धृतपुष्करोत्कीर्णगगनगंगाप्ररूढकनक-कमलिनीलताकुलितशरीरं दिक्कुंजरनिकरमिव विडम्बयन्तं निपतद्विविधो-रगतनुलताजालं समुद्गलद्धूमस्तोममलिनमलिनं जनमेजयाध्वरागारमिवानु-कुर्वन्तं घटितासितनिबिडतरयवनिकमसकृन्नृत्यन्तीभिस्सौदामनीभिर्लासि-काभिरुपेतं रंगस्थलमिव प्रकटयन्तं पथिकाननिलचालिततपनीयप्रताननी-जालावेष्टितस्य सुरतरुनिकरस्य भ्रांतिमुपजनयन्तं सनिर्घोषं प्रचालिताभिः कनकवेत्रलताभिर्दूरमुत्सारयंतमिव पथिकान् त्रिदिवादानीयमानैः परिच्यव-नायामीक्ष्णं परिलुठद्भिरप्सरोगणैः परिवृतं पौलस्त्यमिव विडम्बयन्तं शश्व-द्विटपांतरप्रसृमरदवानलज्वालाप्रकरं तमालस्तोममिवानुकुर्वन्तं काश्यपमिव कद्रुविद्युद्रमणीयं सुनासीरमिवामोदभरिताङ्गुमायसीकृताशिलीमुखं कल्पांत-

संध्याकालमिव विजृम्भमाणनीलकंण्ठतांडवं युधिष्ठिरमिव दूरीकृतधार्तराष्ट्रं पुरोधसमिव परिधृतकुशं द्रोणाद्रिमिव मारुतजातानीतं क्रूरसत्वमिव समुपजनितपथिकभीतिं दशरथतनयमिव निरस्तविभीषणसंतापं दंडकारण्यप्रदेशमिव कबंधाक्रांतमपि मनोहरं शंकरमिव धृतविषमपि विकचकेतकीपरागामोदितं संतमिव समाश्रितसत्पथमपि निपातितपरुषतराशनिजनितजनखेदं शंबरजनकमपि शंबरारिजनकं रोदसोरपि निह्नुतराजहंसं जीमूतव्रातमपश्यत् ।

दृष्ट्वा च स जीवसेनो मनोभवभीत इव मुहुर्जलधरस्तनिततर्जितस्तामेव जयंतिकामनुध्यायन्शंपापातभीतो गंधर्वपतिवरबलादंतर्हितशरीरो गत्वा च सत्वरं गंधर्वराजनिर्दिष्टया शर्करिलप्राययारण्यानीसरण्या रमण्यालोकनकुतुकाविदितमार्गश्रमो वात्याहतोन्नतमहीरुहपर्णनिचयसीत्कारराव - भीषित इव क्वचित्तिष्ठन्पवनोत्थापितानुसृतशुष्कपलाशनुन्न इव क्वचिद्धावन्घनतरघनावलिनिरंतरांधकारमेदुरतरुगहनतया क्वचिन्मन्दं व्रजन्निरंमदपिहितनयनतया क्वचिद्दिग्भ्रांतः तिष्ठन्क्रमेण समतिक्रांतसमुच्छ्रितमहीरुहमहीधरधुनीनाकुकुंजपुंजसरश्च भ्रशर्करिलसरणिस्समुदग्रशातकुंभकलशशतनि - शितशिखरविलेखनविदलितजलधरगलितजलधाराधौतैरत्युन्नततया सभ्रमणं समारब्धकंदुकक्रीडाभिर्वातशकलीकृतस्यायतवातायनविवरादभ्यंतरमायातस्य कंदुकशंकया करकिसलयतलास्फालिततया परिस्फुटितस्यानतिपृथुलस्य वलाहकपिंडस्य सलिलैस्स्नापिताभिः कृततालाट्टहासाभिर्बालिकाभिर्नीरंध्रितक्षौमैर्वलभिशिखरतलप्रतिष्ठापिताः विविधवर्णचित्रिताश्च मृण्मयमयूरीस्समुन्नमितोद्दण्डमसृणतरस्निग्धश्यामलकण्ठैर्विस्तृतायतमंजुलचन्द्रकसहस्रैः सतांडवं मुहुरनुसरद्भिर्भवनमयूरैरुपशोभमानैः क्षपाप्रवृत्तविस्रब्धमिथुनकेलिकालालापश्रवणरूढसंस्कारतया प्रभातेऽपि गुरुजनाग्रतस्समारब्धतद्व्याहारतया च समंदाक्षस्मितं सभ्रूभङ्गं च समुपालभमानाभिस्तदुक्तिगोपनकृतयत्नाभिः विलासिनीभिः दीयमाननानाविधरसभरितफलास्वादपरैः कनकपंजरगतैः

शुकनिकरैः अलंकृतैः अचिरकृतशावकतया तत्र तत्रान्विष्य कृमि-कीटकादीन्सरभसं समासाद्य वलभितलार्पिते दर्पणे विलोक्य चात्मप्रति-बिम्बं निजशावकतोदनाय समापतत्यपरः पारावत इति रुषा निशित-त्रोटिशिखरेणाभिहत्य मुकुरमधः पतद्भिः कपोतैर्धूसरितैः विशालशाद्वलशंक-येंद्रगोपगणनिचिततया प्रत्युप्तविद्रुममणिमंडिताभिरिव मसृणमरकतफलक-भित्तिभिरुपेतैरभ्यन्तरेषु निवसन्तीनां सुन्दरीणां सौंदर्यदिदृक्षया सस्पृहम-सकृदागत्य निर्गतानां सुरसुन्दरीणां चरणन्याससक्तार्द्रालक्तकरसरागाभि-रिव कुट्टिमतलास्तीर्णनवपल्लवाभिश्चन्द्रशालाभिरतिरमणीयैर्विविधवर्णस्पृह-णीयप्रसूनप्रचुरव्रततिततिवितानितप्रतीहारैः प्रसृमरपद्मरागप्रभाविच्छुरिततया लंबितारुणांशुकैरिव विततवातायनैरुपेतैर्विपिनैरिव चित्रखगमृगदर्शनीयैः उदधिभिरिवांतर्निहितरत्ननिचयैः विलासिनीसमारब्धमधुरगानतया तिष्ठतेति गच्छतः पथिकान् विलासिनीगानश्रवणाय स्थापयद्भिरिव शतसहस्र-संख्याकैर्भवनैर्भासुरमाम्नायघोषशंकामुपजनयद्भिः परिभ्रमद्भ्रमरनिकरझंकारै-र्मुखरितेन कुसुमफलभरितविविधविटपिलतावितानिबिडितेन समारब्ध-तांडवशिखंडिमंडलमंडितलतामंडपेन विविधविचित्रक्रीडापर्वतशिखरपरि-कल्पितकृत्रिमकुल्यानिपतद्ध्वनीकलकलनादमेदुरेण परिमलवहगंधवहमन्दां-दोलितमहीरुहाभिरामेण विचित्रयंत्रनालिकासमुत्कीर्यमाणसलिलशीकरकरं-बितकृत्रिमपल्वलशीतलितेनारामस्तोमेन मनोहरं कुथोपविष्टैर्मृदुलपट्टोपधान-तलसाचीकृतचरमांगैरतिस्थूलतया चलितुमप्यनीशैः पिचंडिलैरसितकायै-श्श्रेष्ठिभिरलंकृतमध्यदेशाभिस्तत्र तत्र कृतमौक्तिकराशिभिः कुत्रचित्पौलस्त्य-सेनाभिरिव कर्बुरोपशोभमानाभिः कुत्रचिद्राकाभिरिवोदग्रप्रत्यग्रशुभ्रांशुक-काशमानाभिर्वारसुन्दरीभिरिवानेक-पुरुषसकाशाकृष्टस्वापतेयाभिरटवीभिरिव कंदमूलफलसनाथाभिरापन्नयौवनाभिरिव पुष्पवतीभिरवरोधश्रीभिरिवानव-रतपरिचलद्वामनबधिरपोगंडषंडाभिः द्रुपदकृतस्वयंवरमंटपश्रीभिरिव पांचा-लिकावलोकनानंदितसकलजनहृदयाभिरशुनासीरसरासनलेखाभिरिव नाना-

वर्णसमाकुलिताभिर्घनदिवस-लक्ष्मीभिरिवेन्द्रचाप-विविधवर्ण-मंजुलांबराभिः कुरुसेनाभिरिव पुरस्कृतद्रोणाभिस्सतुलाभिरप्यतुलाभिरुत्सेधविविधधान्य-बन्धुरपृथुलभस्त्रिकाभिः कलकलरवबधिरीकृतश्रवणविवराभिर्निषद्याभिः हृदयंगमं रसवतीभिरपि दूरीकृतधूमगन्धाभिश्श्यामाभिरपि हेमाभाभि-स्सकलकलाकलापकोविदाभिः कोकिलालापाभिः कोमलाभिर्मुक्ताभिरिव लावण्यमयीभिस्सौंदर्यन्यक्कृतसुरसुन्दरीभिः सुन्दरीभिरतिसुन्दरं अभ्यंतर-स्थितवारतरुणीप्रतिबिंबमंडितमुकुरमंडलाभिमुखविनिहितादर्शपरंपरानीत -बाह्यांकणस्थापितदर्पणदृश्यमानतद्रूपैर्विश्रांतिविषयोऽयमागम्यतामवगाह्यतां च निर्वृत्तिपीयूषह्रदतरंगपरंपरास्विति पथिकतरुणान्प्रतिकलं कलरवं मुहुरनुलपद्भिर्बाह्यप्रतीहारपंजरकीरैरतिसुभगैः विविधकुसुमकुंकुमपटीर-कालागरुधूपकंदलितपरिमलविरचितघ्राणतर्पणैर्गानकलासमाकृष्टसकलसहृदय हृदयैर्वारवनितानिकेतनैरुपशोभमानं कुंजरतुरंगममहोक्षक्रमेलकप्रभृतिभिः प्राणिभिराकृष्यमाणैर्विचित्रस्यन्दनबृन्दैर्निबिडितायताध्वाक्रांतं त्रिविक्रम-पदक्रममिव समाक्रांतरोदस्कं सामवेदमिव निखिलनिगमवरं वत्सराजमिव रत्नावलिमनोहरं गंगाजठरमिव विधृतवसुवर्गं स्पृहणीयदर्शनमतिविशालं विदुषामावासस्थानं नानाविधदेवतामंदिरसुन्दरं हेमपुरं प्राविशत् ।

प्रविश्य च विविधदृगासेचनकविचित्रकलाकलापकमनीयं समुत्सेधं सौधमधिगत्य प्रत्नरत्नप्रचुररुचिरदर्शनीयकुशलकलाविशेषवशीकृतरसिक-मनांस्यनेककक्ष्यांतराण्यतिक्रम्य स तु धराधिपः शोणाधराजनविधीय-मानमानातीतनानाविधमधुरकार्यविधानधुरंधरवधूजनबंधुरमवरोधमनधिगत-निरोधो गंधबंधुरसरसिजनीरंध्रितं सरः कमलिनीग्रहणाय गंधसिंधुर इव प्रविश्य रमणीमणिपरिग्रहणाय प्रत्युप्तविशालमुकुरनिकरपरिष्कृतस्निग्ध-भित्तिपरिगतं दुग्धाब्धिवीचिविशदकौशेयोल्लोचकल्लोलशिखरफेनायमान-पृथुलमुक्ताफलकलापमालम्बालंबितचीनांशुकधवलितप्रतीहारं मृदुलपट्टोपधा-नसनाथ-विचित्र-कलधौत-विष्टरपरंपरा-मनोहर-मत्यायतमायतनमात्मकांत्या

प्रकाशयन्तीं कनकशृङ्खलालंबिते सख्या क्षितितलनिषण्णया मरालसेनया स्तोकमिव चाल्यमाने नवरत्नमये डोलाफलके विनिहितकूर्परोत्तानितकरकमलशायितोत्तमांगां उपधानोपरि किंचिदिवोदस्य पूर्वकायं आनितम्बबिम्बं प्रसार्य च वामबाहुलतां शयानां सगर्भकोत्फुल्लधम्मिल्लमध्यकोलितहीरभासुरपारितथ्यां परिधिपरिगतेंदुमंडलमिव विभावरीं चिकुरकलापवलाहकतया कनकलतानिभसीमंतसौदामनीरुचिरतया कुटिलभ्रूलतेंद्रचापतया चञ्चललोचनचातकतया च मुखमंडलेन घनदिनगगनमिव विडम्बयन्तीं कर्पूरजातिफललवंगपूगसंयोगभोग्यपूगं नागवल्लीपल्लवं साचीकृत्य तालुतले मंदमसकृच्चर्वन्तीं सपरिहासं समंदस्मितं च सखीं प्रति किमपि व्याहरंतीं पीनपयोधरमंडलालंबमानया मुक्ताफलमालया क्रीडाशिखरितलान्निपतंत्या तनुस्रोतोधारयेव डोलाफलकतलं धवलयन्तीं परिधृतनिजतनुरुचिसच्छायचामीकरमयपत्रभङ्गसुभगमहाधनां भुवनभाग्यानुबुभूषयावतीर्णामिव मनुष्यरूपेण तिलोत्तमां निरंतरसुन्दरीजननिर्माणाभ्यासलब्धवैदग्ध्येन विधात्रा सौन्दर्यराशिभिरेवं सृष्टामिव लावण्यमयीं कांतिमयीं मूर्तिमतीमिव राज्यलक्ष्मीं किन्नरेशश्रियमिवालकोद्भासिनीं राकाशशांकश्रियमिव मृदुलकरकांतिदूरीकृतसरोरुहरुचिं सरसीमिव पद्मगंधिनीं प्रतीहारस्थलीमिव नासामणिरमणीयां जयंतिकामद्राक्षीत् ।

दृष्ट्वा च मनस्येवमचिंतयत् । अहो ! शतधृतेर्निरतिशयकुशलता । मन्ये तावदस्याः प्रत्यवयवरचनायानेकरम्यवस्तुनिर्माणैः प्रतिक्षणमपि शिक्षितो बहोः कालात्ततस्सावधानमधुना सृष्टिविधानधुरीणो विधाता तावदेनामतानीत् इति । तथाहि—प्रथममब्जयोनिस्तिमिरमुदिरादिरचनया निष्णातश्चिकुरकलापमस्याः विरचय्य च चञ्चरीकांश्चूर्णकुंतलालिं कृत्वा च कुवलयखंजनमीननिकरान्नयनयुगलं विधाय च चंपकतिलकुसुमानि नासिकां परिकल्प्य च बिंबफलान्यधरं अभ्यस्य च कुन्दकोरकमौक्तिकानि रदनराजिं निर्माय च सुधांशुबिंबसरोरुहनिवहान्वदनं विरचय्य च

कंबुगणान्कंधरां सृष्ट्वा च चक्रवाकसमुन्नतकठोरमहीधरव्रातान्पयोधरयुगलं कृत्वा च वल्लीतल्लजान्बाहुलते विधाय च वियदवलग्नं निर्माय चावर्तसहस्रं नाभिकुहरं समभ्यस्य च सिकताराशिरथांगशतं नितम्बमंडलं परिकल्प्य च स्तंबेरमशुंडादंडकदलीकांडकरभनिकरं चोरुयुगलं कृत्वा च कोमलतरशिरीषकुसुमराशिं शरीरमसृजत् ।

नूनमेनां मनोहरांगीं सृजति विधातरि सर्वाश्च गीर्वाणोरगगन्धर्वांगना नियुक्तास्तदभ्यासपदे । विषमिवेयं मोहमुपजनयति । पित्तमिव उन्मत्तयति । मदिरेव परवशयति तरुणजनहृदयम् । कर्पूरधूलिरिव शीतलयति लोचनयुगलम् । किमियं स्वाप्नसुन्दरी ? कुतस्त्यमीदृशं सौंदर्यम् ? चतुरेण चतुराननेन कथमिव संकल्पितम् । कति वत्सरान्विचिंतितमस्यास्सृष्ट्यै ? कुत्र संपादितमीदृक्सामग्रीजालम् । अथवा स्यादेवम् । चिरविरचिततपोबलेन ध्यानमात्रेणैव निर्माय सुन्दरीमिमां प्राकाशयन्निजकुशलतां प्रजापतिः । अहो ! मध्यमलोकभागधेयम् ! पुरा कीदृशं कृतं मध्यमलोकेनानेन तपः ? किं वापराद्धं त्रिदशालयेन । हंत ! चतुराननकृपापरीवाहो मनुजनयनपथसंचारिणीमेनामतानीदिति । तदानीं मरालसेनायां निर्वर्ण्य जयंतिकावदनं परिहासाय सस्मितमयि ! पक्ष्मलाक्षि ! परिस्फुरदिव ते वामाक्षि । तज्जानीहि सन्निहितं जीवसेनमिति निगदंत्यां निरंतरमपि हृदयनिहितजीवसेनतया सा तु तन्नामश्रवणमात्रेण केनाप्युत्थापितेव ससंभ्रमं डोलाफलकात्समुत्थाय गलितत्रपा परितो विक्षिप्तनयना तमनवलोक्य निर्वेदेन दीनदीना कोपकषायितेन सबाष्पं चक्षुषा मरालसेनां पिबन्तीवावलोकयन्ती सभ्रूभङ्गं समारोपितकोपेव धिगसमीक्ष्यकारिणि ! किमु तव खेलनस्याहमेव भाजनमिति तामुपालभमाना हृदयगतदयितावलोकनायेवावनतमुखी वामकरतलशायितकपोलफलका तस्मिन्नेव डोलाफलके समुपाविशत् । जीवसेनस्तु तादृशीमारोपितकोपामवलोक्य मनसीत्थमचिंतयत् ।

प्रार्थितमपि न खलु लभ्यते सविभ्रममीदृशावस्थं मुखमंडलम्। धन्योऽस्मि। यदेनामेवं निर्निरोधमवलोकयामि। कोपोऽपि दर्शनीयो भवति खलु यदाश्रयात्। प्रायो जगति विविक्तगतानामात्मनिर्विशेष-सखीसहचरीणां मुग्धानां नर्मालापपेशला अन्यादृशी खल्वालापधोरणी। किमिह वक्तव्यम्। नर्तयति तावदेनां मन्दमारुतो लतामिव। कन्दर्पस्तु सूत्रधार इवान्तर्निगूढ एव नर्तयति तरुणीम्। तथापि सा तु लज्जायव-निकांतर्हिता झडिति नैव प्रकाशयति हृदयगतं भावम्। सा त्वेकांतगता स्वात्मनिर्विशेषायै सख्यै प्रफुल्लयति हृदयकमलम्। बहिरुदासीनेव पञ्चशरशरहतितप्यमानापि निगूहयत्यात्मभावमिति विचिंत्य चाधुनाह-मात्मप्रदर्शनेनोपशमयामि कोपमित्यात्मानं प्रदर्शयामास। हन्त! सत्यमेव कुपिता सखीति दीनवदना मरालसेना भित्तितलदत्तदृष्टिः सविस्मयं प्रति-मुकुरगतं जीवसेनप्रतिबिंबमवलोक्य हर्षभरोद्गतपुलककवचितांगी ननु पक्ष्मलाक्षि! नाहं मिथ्यावादिनी। दर्शयामि जीवसेनसहस्रम्। तत्कोप-मपास्य मुखकमलमुदस्य पश्य तावदिति न्यवेदयत्।

जयंतिका तु मरालसेनां परिहासवादिनीं मन्वानापि मानस-विजृंभमाणजीवसेनदर्शनकुतूहलतया सखीवचनश्रवणसमनंतरमेव भित्ति-तलदत्तदृष्टिर्जीवसेनप्रतिबिंबपरंपरामवलोक्य विस्मयाश्लिष्टांतरंगा हर्षाति-शयात्किमिदं मायाप्रकल्पितमाहोस्विदनवरतानुध्यानजनितरणरणिकाकार्य-मथवा मतिभ्रमः? महदिदमाश्चर्यं! बिंबमंतरा न हि प्रतिबिंबस्यावकाशः। इति बहुधा विचिंतयन्ती निरतिशयानंदविस्तारितनयना प्रतीहारदेश-विवलितकंधरा जीवसेनमवेक्ष्य वैलक्ष्येणेतिकर्तव्यतामूढा त्रपाभरावनत-मुखी तस्थौ। तदानीं जीवसेनस्तु समंदस्मितमुपसृत्य मरालसेनां प्रति ननु प्रियजयंतिके! किमिदमियं ते सखी दृश्यते चिंताकुलितस्वांतेव। कथमिव गतो जीवसेनोदंतः तावदस्याः कर्णपथम्? कथं वा मदागमन-प्रत्याशा; यदनुपालयति मदागमनमेव; निवेदय दयया तदखिलमपि

इत्यपृच्छत्। पृष्टा च सा मरालसेना सप्रश्रयं देव! सखीयं मुक्तेव भवद्गुणस्यूतहृदया भवद्दर्शनाभिलाषिणी कदाचिद्भित्तितलविलिखितं राजकुमारनिकरं विलोकयन्ती मध्ये विराजमानं भवंतमवलोक्य तरलहृदया कोऽयं सशरीरो मनोभव इति मामपृच्छत्।

पृष्टा चाहमखिलमपि भवदुदन्तं न्यवेदयम्। तत्प्रभृति भवच्चरण-सरसिजसेवावाप्तये समाश्रितव्रतयेव निरंतरमप्यनयांगीकृतं मौनम्। समुज्झितान्यभिमतान्याभरणानि। दूरीकृतश्चाहारः। समाश्रितश्च विविक्तो देशः। निमीलितं च नयनयुगलम्। विनिहितं च ध्येये मनः। किञ्च भीतभीतैस्सखीजनैः इयमसकृदाहूतापि निरुत्तरा पक्ष्मपालिस्यूताश्रुजल-बिंदुबंधुरतयेव सकृदेव मंदमुन्मील्य लोचनकुवलयं स्तोकमिव सखीजना-नवलोकयन्ती दीर्घापांगप्रणालिकया स्रावितैरश्रुसलिलपूरैर्मदनानलजनितं हृदयसंतापमिव वारयन्ती क्षणादुन्मत्तेव किं स्थितास्मि? किमु निषण्णास्मि? किमथवा प्रस्थितास्मि? किमालपामि? किमु मूकास्मि? किं निमीलितलोचनास्मि? किमेकाकिन्यस्मि? हंत! निर्घृणाः खलु परिजनाः। यद्धृतप्राणामपि मां प्रवेशयिष्यंत्याश्रयाशम्। तपति मम प्रत्यवयवमिति व्याहरंतो भयविह्वलैः परिजनैः परिकल्पिते कमलकुवलय-कल्हारास्तरणे बलादनिच्छंत्यपि शायिता पटीरसलिलसेकशिशिरेणोशीरमयेन तालवृंतेन मया वीज्यमाना कदाचिन्मदनानलसंतापासहिष्णुतया धारा-धरोदरप्रविष्टा चंद्रकलेव नीलनलिनीदलोदरमाविशन्ती कदाचिद्भुजंगीव निर्मुक्तकंचुका चन्दनरससिक्तांगी च कदाचिच्छरदिव सिताभ्रधवलिता कदाचिद्भार्गवीव कमलालयनिषण्णा कदाचिद्गंगेव घनप्रालेयशीतलिता सखीजनानां हृदि महतीं चिंतामुत्पादयन्ती दिवसमखिलमप्यत्यवाहयत्।

अस्तमुपगते च गभस्तिमालिनि तारकाकोरककलितं संध्यारागारुणं गगनाभोगमिव शशिकला प्रतिमणिप्रतिबिंबितदीपकलिकं प्रविश्य माणिक्य-मंदिरं तत्र स्फटिकशिलाकल्पिते मसृणतरे समास्तीर्णनीलोत्पलप्रकरतया

अनभिव्यक्तांतर्निलीनचञ्चरीकनिकुरुंबे पर्यंके शयाना संवेशोत्स्वप्नायमाना नन्वार्यपुत्र ! गृहीतोऽसि । क्व यासि ? न जानासि मामिति ; प्रबुद्धा च सरभसमुत्थाय च तल्पात्स्वेदसलिलस्नपितसकलावयवा युगायमानां त्रियामामनैषीत् । एवं भवन्निमित्तं क्लेशमनुभवन्ती कालमत्यवाहयत् । तदन्वेकदाहमनुपलब्धोपायांतरा सखीप्राणपरित्राणकृतादरा दराकुलित-स्वांतोपह्वरे तदाशयाविष्करणाय संमंत्र्य समुपलब्धानुमतिर्विदग्धमेकं वैवधिकं भूदेवं निवेदितैतदवस्थाविशेषं विधायारिभीकरां प्रति प्राहिणवम् । स तु विदितोदन्तो मामुपेत्य न्यवेदयत्सर्वमपि । तत्प्रभृति भवदागमन-संभावनया भवदुदन्तगर्भां कथामेव कुर्वतो कालमतिवाहयति । यदि भवानधुनापि नागमिष्यज्जीवलोकं निरालम्बमकरिष्यत् । दिष्ट्या भवदा-गमनमिति न्यवेदयत् । गन्धर्वराजमुखादवगतभवदुदन्तोऽहं जीवसेनः अनुपदमेवागतोऽस्मि ; इति व्याजहार । तदा सा जयंतिका स्तंभितगमना विविधतुलाकोटिपरिष्कृतचरणपल्लवांगुष्ठशिखरेण कुट्टिमतलमालिखन्ती विन-मितवदना सदृष्टिक्षेपं कृतसंज्ञा तस्मिन्नेव डोलाफलके मरालसेनया क्षितीशमुपावेशयत् ।

समुपवेशितो जीवसेनस्स्तनितगभीरया गिरा ननु मरालसेने ! तव सख्या तावदनलंकृतेयं डोला मामिव मदीयं हृदयमपि चालयतीति सपरिहासमब्रवीत् । तदा तया मंदस्मितमधुराधरपल्लवया मरालसेनया विफलनिजानुनययापि बलादनिच्छंत्यपि तत्पार्श्वे एवोपवेशिता जयंतिका तेन जीवसेनेन ननु पक्ष्मलाक्षि ! किमिदम् । तरलतरलाभ्यां नयनाभ्यां प्रकटयसि भयतरलहृदयताम् । सन्निहिते च मयि कस्माद्वा तव भीतिः ? तदलं साध्वसेन । सविस्रंभं सरसं च प्रकाशय निजाशयं पीयूषनिष्यंदिन्या गिरा । तव तावन्मधुरालापश्रवणकुतूहलत्वरातिशयविवशहृदयस्सुदूरा-त्समागतोऽस्मि । मुधा कालमतिवाहयसि । यातुधानवचश्श्रवणात्प्रभृति भवदायत्तचित्तोऽस्मि । निरवलंबनोऽस्मि । पञ्चशरशरव्योऽस्मि । तदा-

भाषय माम्। धन्यमापादय माम् । सिञ्च मामपांगवीक्षणामृतधारया । अनुगृहीतो भवेयमिति सानुनयं बहुधाभिहिता त्रपया भिया आवेगेन चावनमितमुखी सकिलकिञ्चितं डोलाफलकदत्तदृष्टिः कथंकथमपि वक्तुमुपक्रांता लज्जाभरश्लिष्टवचना मधुरमधुरं मन्दं मन्दं स्विन्नगात्री न्यवेदयत्। नन्वार्यपुत्र! किं ब्रवीमि? बाधते मां स्त्रीत्वनिसर्गजा लज्जा प्रकाशयितुं निजाशयम्। यद्यदभिहितं मरालसेनया तदखिलमपि सत्यमेव। भवद्दिदृक्षा बलवती संजाता। दिष्ट्या पश्यामि भवन्तम्। क्व वा राजधान्यरिभीकरा नाम? क्वेदं हेमपुरम्? कथं वा मदुदन्तप्राप्तिः? कथमिहागमनम्? कथं भवद्योगः? सर्वोऽपि मे मनोरथः स्वप्नकल्प इति निरंतरचिंतासंतानव्याकुलितमानसाभवम् । तेन यातुधानेन कृता खलु महत्युपकृतिः। तथाप्यधुना महदंतरायग्रस्तास्मि। नितरां भीतास्मि। यदिमां मां पिता मे सत्यकीर्तिः निजसुहृदः कांभोजभूपस्य पुत्राय दातुकामश्चिरादनिच्छन्तीमपि प्रयतते। हन्ताहमपि भवदागमननिरीक्षया तावदप्रकाशितहृदया समाश्रितमौना कृतभवदानयनप्रयत्नाभवम्। तदिदानीमुदन्तोऽयं यद्याविशेत्पितुश्श्रवणपथं तदानर्थाय कल्पते । तदिदानीमनया सुरंगसरण्या निस्सराव इति।

श्रुत्वा च नयोपेतं तत्कालसमुचितमंतरायभयनिवारकं वचनमस्यास्सत्वरं समुत्थाय च जयंतिकया सह जीवसेनस्समंदस्मितं मरालसेनायाः करकिसलयमवलंब्य पाणिना ननु मरालसेने! किमु दीयते भवत्प्रियसखीगमनायानुमतिरित्यपृच्छत्। पृष्टा च सा मरालसेना प्रमोदनिदानमप्यशनिपरुषतरं विचिंत्य नरपतिवचः निरर्गलनिर्गलदश्रुसलिलप्लावितटारका विनमितोत्तमांगी दुःखभरदम्यमानकंठनालतया निरुत्तरा च सखीविरहासहिष्णुतया बाष्पपूराभिषिच्यमानकपोलफलकवक्षोजमंडला दृढतरं परिरभ्य बाहुलताभ्यां जयंतिकां सगद्गदं ननु मत्सुखदुःखसमभागिनि! जयंतिके! मदीयं तावदिदं हृदयं वज्रसारकठोरं भवच्चेतसा संस्यूतं

खल्वाबाल्यात्परस्परप्रेमतन्तुसंतानेन। तादृगेकीभूतमधुना द्विधा विधाय विधात्रा दूरीकृतं खलु। विहाय मामेकाकिनीं यास्यसि। यद्यपि चिरप्रार्थितेन वल्लभेन योगो मोदावह एव। तथापि प्राणनिर्विशेषां भवतीमन्तरा कथमिवाहमनाथेव प्राणिमि ? मम तावत्त्वां विना कालकलापि युगायते। कथमिवातिवाहयामि दीर्घतरान्कालान् ? कदा वा द्रक्ष्यामि पुनरपि भवतीं ? स्यादेतत्। पृष्टा च भवत्पित्रा सत्यकीर्तिना क्व जयंतिकेति किं ब्रवीमि ? शून्यं जातमिदं भवनं भवद्भिरहितम्। भवन्निषेवितं वस्तुजातं तावद्द्विगुणयति मे दुःखम्। कनकपंजरपोषिताः कीराः जयंतिकेत्याह्वयंति। तदाकर्णनेन विह्वलितं भवति मे हृदयम्। भवदनवलोकनदुःखितां ते जननीं कथमिव समाश्वासयामि ? परिजनानामावेगं कथमिव निवारयामि ? निंदन्ति खलु मदनवधानतां सर्वेऽपि। कथं भवेयमित्यनुलपन्ती मन्दं मन्दं सगद्गदमरोदीत्।

श्रुत्वा च सखीवचनं जयंतिका दुःखभरदम्यमानकण्ठी बाष्पसलिलपूरितनयना मरालसेनायाश्शिरः परामृशन्ती करतलेन त्रपया सखीकपोलतलविनिहितमुखपुंडरीका ननु मरालसेने ! किमिदं ? प्रमोदावसरेऽपि रोदनपरासि। जानीहि तावत्पुनरपि त्वरितमेव पितृदिदृक्षया सन्निहिताम्। तदनुजानीहि गमनाय मच्छुभोदर्कतर्कणैकताना। मा तावदधुनैव निवेदयोदंतमेनं मत्पित्रे। कालानुरोधेन समयमनुपालयन्ती पितुश्श्रवणपथं प्रवेशय वृत्तमेतत्। न किमपि वक्तव्यमस्ति तुभ्यम्। चतुरा भवती खलु। मनस्सांत्वयेति सगद्गदं निगदन्ती सांत्वयामास ताम्। जीवसेनस्तु प्रेमातिशयकंदलितमेवं परस्परसल्लापमवकर्ण्य समंदस्मितं ननु मरालसेने ! किमिदमेवम् ? यद्यपि परस्परमैत्रीविवर्धितसंबंधस्य विघटनमरुंतुदमेव; तथापि लता तावदुपघ्नतरूमंतरा वृद्धिं नाधिगच्छति खलु ? निरवलंबना नारी नैव शोभते। तत्कस्यचित्पुरुषस्यावलंबनमवश्यं जगत्यपेक्ष्यते। यदि न तथा तस्या जन्म निरर्थकम्। एवं स्थिते श्लाघनीयः खलु सत्पुरुषसंबंधः।

तत्रापि योषाभिलषितपुरुषविशेषप्राप्तिः प्रमोदस्थानं हि! तदलं क्लेशेन। इदानीं सानन्दं प्रेषय तावत्तव सखीम्। अपरिहार्यो हि योषितः परवेश्म-निवासो भुजंग्या इव। स्त्रीणां तावत्तावदेव हि परस्परमैत्रीप्ररूढस्सहवासः यावन्न यास्यन्ति पतिगृहान्। मातापित्रोरपि दुहितरि तावदेवाधिकारः यावन्न ग्राहयिष्यतः पतिपाणिपंकजम्। किंच स्पृहणीयरूपा सुकवेः कवितेवानधिगतसदवलंबना विचित्रालंकारशय्यापाकगुणभूयिष्ठापि अप्राप्तशृंगारादिरसप्रकाशनावकाशा तरुणी दुहिता वर्धयति जनयितुर्निरंतरमपि हृदये तावदपरिमितं शोकम्। तदलमनेन सखीविरहजन्मना शोकावेगेन। कृते च कालविलम्बे परस्परसल्लापेन प्रयाणप्रत्यूहस्समापतति। पश्य तावत्समंतात्तिमिरनिभं मुदिरनिकरं काष्ठाचतुष्टयमपि गारुत्मतरचितभित्तिरिव समावृणोति जीमूतमाला। नर्तकीवासकृन्नृत्यति सौदामनी। तर्जयन्निव गर्जति जलधरः। गन्तव्यं च सुदूरं वर्त्म चरणाभ्यामेव। तद्यातु नाम तव सखी सत्वरमित्यकथयत्।

ततश्च जयंतिका ननु मरालसेने! भवती तावदिहैव सादरं मत्पाणिनैवात्मनिर्विशेषं पोषितां निर्मितालवालां नवमल्लिकां विलोकय। मा तावदपचिनु मल्लिकाप्रतानन्याः तारुण्यशोभादायिनं प्रसूनप्रकरम्। वसंतसमये च प्ररूढप्रसवप्रकाशितानुरागस्य बालाशोकतरोरुत्सवं कौमुद्यां सखीमंडलपरिवृता निर्वर्तय सजग्धिकेल्या। सादरमनुभूतनूतनविवाहं चाटुवचनचतुरं मा विस्मर कदापि प्रमादेन पंजरगतं केलीशुकशारिका-मिथुनम्। समाश्वासय सांत्ववचनैर्मद्विरहजृम्भमाणशोकनिमग्नहृदयां ममांबाम्। उपवनक्रीडाशैलसानुकृत्रिमस्रोतस्विनीस्रोतस्तीरकुंजविहारचणं बर्हिणं प्रतिसायं सादरं प्रापय मेघनादप्रासादम्। बालसहकारस्य निर्वर्तय सुसमये बालमालत्या सहोद्वाहकर्म। मच्चरणविरचितदौहृदकर्मणो बालाशोकस्य कुसुमोद्गमे तावदाचर महोत्सवम्। पदेपदे निकृन्तनचित्रितं कारय लतागृहम्। दर्शं दर्शं शुष्कमापूरयालवालं कुल्यानीरैः। पदे पदे

प्रसाधय मद्भवनगता देवता इव मणिमयसालभंजिकाः। मा विस्मर मामिति बहुधाभिधाय निवार्य च सांत्ववचनैरनुव्रजन्तीं सखीं लज्जाभर-विनमितमुखी सुधाकरमिव रोहिणी प्रस्थितं जीवसेनमनुसरंती सुरंगसरण्या निरगात्।

गत्वा च सा पक्ष्मलाक्षी जीवसेनेन साकमवाप्य चाटवीतटं चरमगिरितरुषंडांतर्हिते च चंडकिरणमंडले निबिडतरजलभरितवलाहका-कुलितेषु दशदिगवकाशेषु मुदिरपरुषरावमुखरिते च कांतारे सर्वतः प्रसृमरे चांधकारे मुहुर्मुहुः परिनटत्कुटिलचटुलतटित्पटलतया द्विगुणितांधकार-पिनद्धनयनव्यापारे कांताराध्वनि गाढध्वांतविध्वंसितनयनपथतया कृच्छ्रा-त्सावधानं करोन्नमितलंबमाननीवीकलापा भयविह्वलापि वल्लभानुगमन-लब्धधैर्या पल्वलतटकटुरटन्मंडूकारावकदर्थितकर्णविवरा शाद्वलतलखेलत्-खद्योतव्रातद्योतसाह्यगमनसौकर्या परितः प्रसरत्तारतरझिल्लीरावदंतुरित-दिगंतरदत्तदृष्टिः जीवसेनभुजशिखरविनिहितदक्षिणपाणिकमला अविमल-कच्छतलकर्दमकलुषितचरणयुगला कथंकथमपि मन्दं मंन्दं कटुकण्टक-निचितेन स्थपुटिततलेन वनवर्त्मना ययौ। एवमायांतीं गमनखेदमा-वेदयन्तीमशनिभीकररावजर्झरितहृदयां क्व गन्तव्यम्? कुत्र स्थातव्यम्? किमु कर्तव्यम्? किं व्यवसितं मनसि? त्यक्तबन्धुवर्गाहमेकाकिनी भवंत-मनुगतास्मि। कियद्दूरे राजधानीत्यसकृत्पृच्छन्तीं जयंतिकां समाश्वासयन् सांत्ववचनैः गच्छंश्च मन्दं मन्दं सगर्जनं सशीकरासारं वर्षितुं समारब्धे जीमूते क्रमेण पृथुलतां गते च धारापाते जंझावातपरिघूर्णिततरुनिकरपर्ण-पटलपटपटात्कारमुखरिते कांतारे साध्वसेन सोढुमशक्योऽयं धारापातः। गंतुमशक्तास्मि। निपतत इवांघ्री। परिश्रांतास्मि। यत्र कुत्रापि स्थातु-मिच्छामीति पदे पदे निवेदयन्तीं जीवसेनः भुजदंडावेष्टिततदवलग्नः सद्यः प्रादुर्भूतविद्युल्लताप्रकाशितां दीर्घतरोदरां गुहां प्राविशत्।

प्रविश्य च तत्र शयानो मा भीरहमस्मि इति नरपतिरनुनयपुरस्सरं

परिरंभणकुतूहलेन प्रसारितभुजदण्डो लज्जाभराददत्तांगकयापि शश्वदाविर्भवत्तटित्तरलद्युतितया भीतया तया कोमलांग्या सपदि दृढतरं समालिंगितः साधुसाध्विति सौदामनीं श्लाघमानः वक्षोजजिघृक्षया प्रसारिते च पाणिकमले व्रीडया बाहुलतायुगलकृतस्वस्तिकबंधनस्थगितस्तनमंडलयापि हरितकंचुल्युपरि शाद्वलशंकया परिपततां खद्योतानां ससाध्वसं समुत्सारणाय व्यापारितबाहुयुगलतया सप्रमोदमागृहीतसमुत्तुंगपयोधरकुंभयुगलः प्रशंसन् खद्योतव्रातान् प्रकटिते च चुम्बनेच्छयाधरोष्ठपुटे करपुटपिहिताधरतया निजहीरमणिप्रसृमरभासुरकिरणगणकांत्यसहिष्णुतया सरभसं नयनपिधानाय शिथिलिते करयुगले निष्प्रत्यूहमधरामृतमापिबन् उषाप्रतीक इवानिरुद्धालिंगनाभिनंदितः जडभरत इव कुरंगीकिशोरतरलतरनयनानंदितहृदयो वामदेव इव वामप्रतीकैकीकृतनारीतनुः वैनतेय इव दंतप्रावरणयंत्रामृताहरणनिपुणः उपघ्नतरुरिव लताबाहुवेष्टितः मन्दं मन्दं सम्लिष्टं किमपि किमपि शर्मवशाद्व्याहरंत्या जयंतिकया सुरतसुखमनुबभूव ।

एवमनुभूय च निधुवनश्रमसलिलसिक्तावयवौ परस्परबाहुलतावेष्टितग्रीवौ श्रमभरविस्मृतशरीरौ निद्रार्द्रजतुरसघटितपक्ष्मपुटौ दीर्घाध्वगमनश्रमद्विगुणितदेहशैथिल्यौ निद्राभरपरवशीकृतमानसौ किमपि किमपि विवक्षू अपि बहिरनिस्सृतवाग्व्यापारौ अगणितशिलातलकठिनस्पर्शौ अचिंतितवनसत्वभयौ तावुभावपि निद्रासुखमनुबभूवतुः । निद्राविद्राणौ तौ तु जंझावातभ्राम्यमाणाभ्रंलिहमहीरुहनिवहतारतारराबमपि शिलाद्रवीकरणनिपुणस्थूलजलधरधारापातध्वानमपि कठोरस्फूर्जथुघोषमपि नाज्ञासिष्टाम् । एवं गाढनिद्राविद्राणचेतसोस्तयोस्सतोः विलसति च भगवति भास्वति पूर्वपर्वतशिखरे रविकरचित्रितगंधर्वनगरे चांबरे यामिनीं निरंतरवर्षधारानिर्णिक्ततया बालातपकांतिविशेषभासुरे च कांतारे विटपिपत्रपटलपुटक्षरत्सलिलबिंदुपातप्रचुरगर्तकपंक्तिकदर्थिते क्षितितले विविधविचित्रपतत्रिषु सकलकलरवं डीयमानेषु गगनांकणे शीतलसलिलसंपर्कजडेन विकच-

केतकीकुसुमपरागसौरभभरसुभगेन प्रभंजनेन पात्यमानेषु कदंबमुकुलेषु तारतारकेकानादनादितदशदिगंतरेषु मयूरेषु मंडूकषंडरटरटात्कारमुखरितेषु पल्वलतटेषु अचिरसंभूतवर्षसलिलसिक्तक्षितितलतया समुद्भवद्विविधकीट-पटलग्रहणव्यग्रेषु काककदंबेषु कर्दमबहुलकच्छतलप्लवमानभेकग्रहणलंपटेष्व-लगर्देषु पल्वलसलिलचरकीटविशेषादानदत्तावधानेषु बकेषु शिशिरसमीर-प्रतिबोधिता जयंतिका निमीलितलोचनैव मन्दमंगभङ्गकैतवेन पार्श्वप्रसारित-बाहुलता अनुपलब्धार्यपुत्रस्पर्शतया भवेन्निद्रावशविवर्तनाद्दूरे शयान इति विचिंत्य पाणिपल्लवाभ्यां परिमृज्य लोचने मन्दं समुन्मील्य पतिविरहितां शून्यां गुहामद्राक्षीत् ।

अनवलोक्य च वल्लभं भीतभीता सरभसमुत्थाय विलुलितं कुंतल-कलापमाश्रवणमूलं करेण समुत्सार्य क्वापि बहिर्निर्गतो भवेदित्यनुचिंत्य कंपमानोरुयुगला कथमेकाकिनी बहिर्निर्गच्छामीति कातर्यकदर्थितस्वांताप्या-वेगवशात्कथंकथमपि बलाद्गुहाया निर्गत्य शोकातिरेकदम्यमानकण्ठी नाथ ! क्वासि ? देहि मे प्रतिवचनमित्युच्चैराक्रंदन्ती वेपमानतनुलता अनुप-लब्धप्रतिवचनतया द्विगुणितभयाकुलितहृदया दशसु दिक्षु विक्षिप्ताक्षी क्षीणबलेतिकर्तव्यतामूढा गाढांधकारावृतेव तस्थौ । एवं स्थित्वा च साध्वसेन व्यथया च क्वाथ्यमानमानसा सा वल्लभादर्शनकंदलितचिंता-परंपरापरिघूर्णितोत्तमांगापि स्मृतिपथाधिरूढदमयन्तीवैदेहीप्रभृतिपुरंध्रीजन-चरित्रा तत्र तत्र प्रियमन्विष्यन्ती निजदुःखदर्शनासहिष्णुतयेव पत्रपुटक्षर-न्नीरबिंदुकैतवेन विलपद्भिरिव पादपसन्दोहैर्दुरवगाहे निरंतरसलिलसिक्त-शरीरतया सपटपटरटितं समुद्धूयमानपक्षपुटैः विटपिविटपकोटिनिषण्णैः पतत्त्रिभिरभिरामे कुत्रचिददभ्रवर्षतया कच्छविच्छुरिते कुत्रचित्संफुल्ल-कदंबतरुकुञ्जविटपशिखरगता मयूरीविततश्लक्ष्णमेचकमंडलपरिमण्डितैः ग्रीवाकुंचितप्रकटितप्रेमधोरणीविशेषैस्सकेकारवमनुसरद्भिः कलापिभिर्दर्शनीये कुत्रचित्कर्दमकलुषिततया दुस्संचारमार्गे कुत्रचिज्जलबहुलशाद्वलप्राये कुत्र-

चिच्छिलींध्रनीरंध्रिते कुत्रचिद्विकचकनकसवर्णकुसुमकोशनिरवकाशकेतकी-परंपराकंटकिते कुत्रचिदचलप्रस्थप्रस्थितनिर्झरझरीरवमुखरिते कुत्रचित्परिवह-दरुणनीरपूररयनामिततीरवेतसतरुबहुले कुत्रचिन्मरुत्तरलितविकचकुटज-कुसुमपटलपरिमलसुभगे कुत्रचित्पुलिंदसुन्दरीजनापचीयमानविकचकेतकी-कुसुमपरागधूसरिते कुत्रचिद्दीर्घघोणाशिखरविदारितानूपांतःप्रवेशितवदनैः सामोदं मुस्ताकंदवृन्दं चर्वद्भिः घुर्घुररवतिरस्कृतघरट्टघर्घरध्वानैः कर्दमित-कायैर्वनवराहैरतिभयानके कुत्रचिदार्द्रकर्दमचर्चितकठिनपृथुलकृष्णकाय-निकषणविशीर्णत्वक्पटलपादपस्कंधदेशैः मदभरारब्धपरस्परकलहतयात्याय-तावनमितकठोरकुटिलविषाणमंडलसंघट्टनटीत्कारराववाचालितदिगन्तरालैः लुलायपटलैरतिभीषणे, कुत्रचिदुच्चतरुनिपतितवलीमुखापह्नियमाणविशीर्णबीज पूरफलादित्सया सरभसमनुधावद्भिर्भल्लूकैराकुलिते, कुत्रचित्तरुमूलनिबद्ध-विषाणमंडलाः वनमहिषीः कैश्चिद्दूराकृष्यमाणतद्वालैः कैश्चिद्दुग्धं दुहानैरयो-विरचितैरिवासितकठिनकायैः निजाकारप्रकाश्यमानक्रूरकर्मभिः वनशबरैः परिवृते, कुत्रचिद्विराटावरोध इव बृहन्नलाक्रांते महारण्ये तावदशरण्या हा! नाथ! नावेक्षसे किमु मामीदृशीमनाथां पर्यटन्तीम्? किमु भवता तावदभ्यस्ता विद्येव विश्वासघातुकतापि। किमिदमुचितं नरपतेः शरणा-गतजनप्रतारणम्? किमु लभसे मादृशीं अबलां भवदेकशरणां प्रतार्य? शुभोदर्क नन्वार्यपुत्र! भवत्प्रतिकृत्यवलोकनप्रभृति भवन्तमेव सर्वस्वं मन्वानायाः परित्यक्तात्मबंधुजनतायाः भवदनुगमनैकतानायाः मम ताव-त्किमिदमेव फलम्? हन्त! दुर्लभं ते दर्शनमिति रुदन्तीं प्रियसखीं मरालसेनां सत्वरमागतां मामवेहि मुहुरिति सांत्ववचनैस्समाश्वास्य भवंत-मेवानुव्रजन्तीं मामबलां दुर्गमे निर्गतिकां विधायैकाकिनीं गतोऽसि? पुनरपि कथमिव प्रदर्शयेयं मुखमिदं सख्यै? हन्त! तात! सत्यकीर्ते! प्रेमातिरेकेणात्मप्राणनिर्विशेषं मां परिपोषितवतः ते मामनवलोक्य कीदृशी दशा भवेत्? अम्ब! चिरमनुभव दुहितृविरहदुःखम्। नाहं पुनरपि

प्रदर्शयिष्यामि ते मुखमिदम्। भो! भो! नृशंसाः! वन्या मृगाः! निजवल्लभेनैव दूरीकृतया किमनयेति यूयमपि दुरितकारिणीं मामिमां परित्यजथ। भक्षयित्वा च मां परुषहृदयां पूरयत स्वोदरं, मन्मनोरथमपि। हन्तार्यपुत्र! किंवा मयापराद्धम्? किमर्थमयममर्षः? निरनुक्रोशोऽसि। विश्वासघातुकोऽसि। बहुधैवमरण्ये प्रलपन्तीमेकाकिनीं भीतभीतां मामवलोक्यापि नानुकंपया कंपितहृदयोऽसि। कुरंगा अपि तरंगितेक्षणा मद्दुःखासहिष्णुतया बाष्पसलिलकलुषितकपोलाः परित्यक्तशष्पकबलास्समुन्नमितमुखास्समाश्वासयन्त इव सहुंकारं मामनुवर्तंते। हन्त! न ते धर्मः। नापि कृपा। न गुणपक्षपातित्वम्। नाप्याश्रितजनशीलपरिशीलनम्। न हि दुःखिजनदुःखनिराकरणचणं हृदयम्। अहो! वञ्चनशीलता! कठिनहृदयता! विस्रब्धघातुकता! निरनुक्रोशता! प्रतारणपरता! हा! नाथ! क्वासि? देहि मे प्रतिवचनम्। क्व लीनस्ते तादृक्प्रेमपरीवाहः? कृपया मामेकवारमाकारय। किमु परिहासार्थं तया तिरोधानविद्यया पार्श्व एवांतर्हितशरीरोऽसि? अलमनेन परिहासेन। साध्वसेन जर्झरितहृदयास्मि। इति बहुधा विलपन्ती कंटकजालमप्यविगणय्य स्थपुटितस्थलमप्यनालोच्य गर्तमप्यनाकलय्य समुन्नतदेशमप्यविचिंत्य निबिडतरकुंजपुंजकुहरमप्यलक्षीकृत्य दशसु दिक्षु दत्तदृष्टिः बाष्पाविललोचनतया काननमखिलमपि सलिलमयमिव पश्यन्ती शोकेन साध्वसेनावेगेनोन्मत्तेवागणितशरीरश्रमा निराहारा वल्लभैकहृदया सुदूरमामध्याह्नं परिबभ्राम।

अदृष्टपूर्वामिमां द्रष्टुकाम इव गगनमध्यमधिगतवति चण्डकिरणे नखंपचातपासहिष्णुतया प्रच्छायान्वेषणपरा जयंतिका कतिचित्पदानि गत्वा रसालसालपरिवृतं तमालमालाशीतलं नमेरुमहीरुहपरीतं विविधपत्ररथव्रातकलकलबहुलैः वलिविलुलितत्वक्कलितप्रचालितशाखाभुजैः धवलप्रसूनपटलपटावगुंठितशिरोभिः गलितस्वनवानीनतिवैद्यवादपरिस्फुटाक्षर-

निवहे वाक्कलहे प्रागल्भ्यं प्रदर्शयतो द्रविडजरतीजनाननुकुर्वद्भिः विटपिभि-र्मनोहरं, नानानोकहनिवहपरस्परनिरंतराश्लिष्टच्छदविच्छुरितविटपपटला-च्छादितांतरिक्षतया तमोमयं, शीतलप्रचलत्प्रकंपनप्रकंपितप्रताननीप्रसव-प्रकरप्रसृमरसौरभसंभृतमुत्तुंगमहीध्रप्रपातनिपतन्निर्झररवमुखरितं, तत्र तत्र पाणियुगलावलंबितपृथुलमहीरुहमूलैः धरणितलविनिहितचरणैः उन्नमित-कंधरैः उत्क्षिप्ताक्षिसूक्ष्मतरपक्ष्मभिर्विपिनमभितो विलोकयद्भिरत्युन्नतैः स्थूलस्थूलैरतिभयानकैर्विविधशाखामृगैः प्रकाश्यमानसाध्वसं निबिडतरकुंज-पुंजशाद्वलहरिततया केकारवानुमेयकेकिकुलमुदग्राग्रदर्भपटलतया तदभ्यंतर-संचरणपरैः हरिणमंडलैरतिरमणीयं, प्रदेशमदृष्टपूर्वमेकमपश्यत् ।

प्रविश्य च तदनातपं तपोवनं विटपिवाटांतरे पर्यटन्तं तापसमिव दूरादेकमद्राक्षीत् । तद्दर्शनमात्रेण जीवसेनबुद्ध्या ससंभ्रममुपसृत्य निर्वर्ण्य च वितथमनोरथा दीर्घमुष्णं च निश्श्वस्य भगवति ! पापकारिणी सत्यकीर्ति-दुहिता जीवसेनपरिगृहीताप्यधुना तावदनाथा जयंतिका प्रणमतीति निवेदयन्ती नयनसलिलधारासारप्रक्षालिततच्चरणारविंदा सप्रश्रयं बद्धां-जलिपुटा तस्थौ । तदा सा तु तापसी तपस्विनीमिमामवलोक्यानुकंपया वत्से ! विदितमेव ते पितृभर्तृनामधेयम् । का ते माता ? कुतो वा काननमिदमतिदुर्गममनाथेव समागतवती ? किमर्थं रोदिषीति पृच्छंत्येव तया सहानतिदूरवर्तिनीं निजगुहां प्राविशत् । प्रविश्य च तां जयंतिका-मुपवेश्य चैकदेशप्रतिष्ठापितशिलापीठे स्वयमपि परिगृहीतकृष्णाजिनासना पप्रच्छ । निवेदय भवदुदंतमखिलमपीति । सा तु जयंतिका मुहुर्बलात्कारेण परिपृष्टा सबाष्पगद्गदं समंदाक्षं च व्याहरंती निजोदंतं दुःखातिरेकाद्गत-चेतना पपात वसुमत्याम् । सावेगमुत्थाय च सा तापसी कमंडलूदक-सेचनतालव्यजनकर्मणा विधाय च सचेतनामेनां मंदमुत्थाप्य च वत्से ! मा रोदीः । यदा च जनिरिह तदैव दैवनियोगादनुपतति सुखमिव दुःखमपि शरीरिणम् । तत्किमनेन परिदेवनेन ? जननांतरोपार्जितं कर्मफल-

मनुभवेनैव परिहरणीयं, नान्यथा। तत्समाधेहि। स्वांतं निधेहि परमकारुणिके भगवति। स तु तारयिष्यति दुःखसागरादिति तां सांत्वयामास।

तदनु दमितदुःखभरा सा तु मृगाक्षी वीक्ष्य च गुहाभ्यंतरमभितः प्रसृमरतपनबालातपद्युतिमेकत्र शंकुलंबितां माणिक्यमालामालोक्य सविस्मयं कुतस्त्येयं मालिका? का त्वम्? का ते माता? कस्ते पिता? किं ते पूततमं नामधेयम्? कुतो वैकाकिनी निवससि दुर्गमे कानने तावदशरण्या लब्धतारुण्यागण्यलावण्यपण्यापि। न हि ते सौन्दर्यमिदं तावदुपपादयति तापसीत्वम्। कुतो वा तवेदृशो वेषः? सूचयति ते मुखकमलमिदं कमप्यंतस्संतापम्। कृपया निवेदय भवदुदंतमखिलमपीत्यप्राक्षीत्। पृष्टा च सा तापसी दीर्घमुष्णं च निश्श्वस्य समुद्गलदश्रुधाराप्रक्षालितकपोलस्तनमंडला सनिर्वेदं वत्से! प्रगल्भासि! मन्मुखावलोकनमात्रेण विदितमदंतस्तापासि। हन्त! भवत्या तावत्स्मारितपूर्ववृत्तांतास्मि। तत्स्मरणमात्रेणापि दहति मे हृदयं दुःखानलः। किमुत तद्व्याहारेण? तथापि कथयामि ते मंदभाग्याया ममोदन्तम्। यतस्त्वमौत्सुक्यस्पृष्टहृदयासि। शृणु तावदस्ति चित्रपुरे सुशीलावल्लभो वीरकेतुर्नाम सार्वभौमः। सत्वनपत्यतादूयमानमानसो धर्मैकतानो निरंतरक्रियमाणावदातकर्मा चिरेण प्रसादोन्मुखदेवतानुग्रहान्मामेकं पुत्रमलभत। तदनु सुकेशः इति नाम्ना समाहूयमाने मानोन्नते मयि प्रादुर्भवति तारुण्ये, तारुण्यकंदलितकायकांतिविशेषः कदाचिदहमेक एव मृगयालालसमानसः तुरंगमाधिरूढः प्ररूढानेकानोकहकांतं कांतारमासाद्य तत्र तत्र निहत्य च सत्वगणान्क्लान्तः श्रमापनिनीषया तत्रैव प्रच्छायशीतलं तरूतलमधिशिश्ये। निद्रापि द्रागेव मद्रामणीयकाकृष्टा विलासिनीव संमुद्य मद्दृग्युगलं द्रावयामास श्रममखिलमपि।

तदनु गलितगहनश्रमोऽहं परिमृज्य नयनयुगलमुन्मील्य च मच्चरणतले निषण्णां मनसिजकृषिकपोषितहृदयालवालकंदलितानुराग-

लतापल्लवाभ्यामिव कोमलाभ्यां पाणिपल्लवाभ्यां संवाहयन्तीं मच्चरणयुगलं तापसतरुणीमेकामपश्यम् । विलोक्य च ससाध्वसावेगं समुपविष्टः सप्रश्रयं यदा प्रणतिपरोऽभवं ; तदा सा तु तापसतरुणी सविभ्रमं त्रपाभरनतोत्तमांगी कुमार ! मा चर प्रणतिम् । पूरय मे मनोरथमिति निवेदयन्तीव भ्रूभंगेन पञ्चशरशरहतिवेदनां प्रकटयन्तीव मकरकेतनपरतंत्रास्मि इति मंत्रयमाणेव स्पंदमानाधरपयोधरा क्षितितलदृष्टिर्नखमुखच्छिद्यमानतृणा भवता तावद‌-नंगीकृतेयमहमेतत्कल्पेति सूचयन्तीव गात्रकंपकैतवेन प्रकाशयन्तीव मनोभवभयं निरतिशयानुरागदिग्धं निजाशयमाविश्चकार ।

अहं तावदवगम्य च सम्यक्तदाशयं तस्या भीतभीतस्तावदलमनया मदनविकारपरंपरया ननु मृगाक्षि ! प्रत्यक्षीकृतपरोक्षप्रवृत्ताखिलव्यापाराणां तपोधनानां ज्वलदमर्षज्वलनज्वालामालायास्तदा शलभो भवेयम् । यदि च पूरयेयमहमधुना तवेदृशं मनोरथम् । तन्मुंच मामिति तत्पादयोर्न्यपतम् । तथापि सा तु सानुनयं किमिदमेवमभिधीयते ? स्वयमागतां वृषस्यन्तीं परित्यक्तुमुचितं वा ? धर्मज्ञोऽसि । को वा युवा मामीदृशीं स्वयमागतां त्यक्तुं कामयते ? यद्यपि तपोधनाः परोक्षचक्षुषः तथापि मामेवापराधिनीं मन्यमानाः वात्सल्यातिरेकाद्भवद्विषये क्षमाशीलाः भविष्यंति । तत्कृपया मामुररीकुरु । मा मुञ्च मामिति बहुधा प्रार्थनैकताना तस्थौ । अहं तु सुचिरं विचिंत्य समुपलब्धविवेकः तन्मनःपरिवर्तनायेत्थमकथयम् । ननु मुग्धे ! कल्याणि ! नृशंसः खल्वनंगः ! स त्वशरीरः पिशाच इव पीडयति शरीरिणम् । तदाविष्टः त्यजत्याहारमिव लज्जामपि । निद्राविहीनः पर्यटत्युन्मत्त इव । नैव गणयति गुरुजनमिव निजकुलगौरवमपि । स्वाभिलषितलाभैकदत्तदृष्टिस्तपस्वीव ध्येये विनिहितमनास्सततमपि चिंतयति । तदर्थं दुस्साधमपि कर्म करोति । किं ब्रवीमि मकरकेतोश्चातुर्यम् ? स तु दृगगोचर एव सुकुमारकुसुमशरप्रयोगेण ज्ञानिनमपि विवेकिनमपि वशीकृत्य पुत्रिकानर्तं नर्तयति । प्रायशो जगति

मनुजस्तु निजमनोवृत्त्यनुगुणतया कुर्वन्नधर्मं धर्म्यत्वेनोपपादयति। कामिनो मनसि स्वेच्छाक्रियमाणासु कामचेष्टासु नोदेति दोषमनीषैव। भवत्यपि तावदेवमेव विवेकिनी मनसि विचारय भावि क्लेशम्। मा भव मनोभव-परवशा। तदलमनया प्रार्थनयेति।

एवं प्रतिबोधितापि सानुनयमनभ्युपगंतारं दूरीकृतरतिसारं मामति-कुपिता वितथप्रार्थना सा तु तापसतरुणी भवतु "भवानपि लब्धस्त्री-भावस्तारुण्ये तावदप्राप्तपुरुषसंपर्कसुखविशेषः विपिनवासरतः" इति शप्त्वा सबाष्पं सरभसं निजाश्रमोपकण्ठमधावत्। ततश्चाहमुद्विग्नहृदयो दीन-दीनस्तामेवानुसरन्बाष्पपूरपरिप्लावितनयनस्समासाद्योटजवाटं तापससंसदि न्यपतम्। तत्रत्यास्सर्वेऽपि सानुकम्पं कंपमानतनुमतनुदैन्यक्लांतवदनं मामवालोकयन्। ततश्च पृष्टोऽहं प्रह्वभावेन न्यवेदयं तदुदंतमखिलमपि। श्रुत्वा च तेषु कश्चन जरत्तरः तपोधनः कृपापरवशमानसः तामुपालभमानः निजमणिबन्धबद्धां माणिक्यमालामालोक्य सुचिरं विचिंत्य च वत्स! मालामिमामंगीकुरु चिरं जीवेति मणिबन्धादवमुच्य दत्वा च मह्यम-कथयत्—कुमार न कदापि वंध्यो भवति सत्यवचसां शापः। तत्सिद्धमेव स्त्रीत्वम्। तदलं चलितानुशोचनेन। माला पुनरियं योषामपि पुरुषमिव तनोति यादृशमनुचिंत्य पुरुषाकारं निबध्यते मणिबन्धे। न तु पुंस्त्वं समुलभ्यते। किञ्च धृत्वेमां भूत्वा च पुरुष इव यदि क्वापि नाशयेदेनां ततश्च विना मालया पुनस्सा दुर्लभैव योषाकृतिरपीति।

अहं पुनरादाय सविनयं तां मणिमालां न यदि स्यां पुरुषः किमनयेति विचिंतयन्नपरिमितदुःखदहनदह्यमानहृदयो नारीत्वमधिगत्य निजनगरमगत्वैव तापसीवास्यां गुहायां न्यवसम्। ततश्च मम जनयिता वीरकेतुस्सुतविरहसंतप्तमानसस्समंततोऽन्विष्य स्वयमेव मामदृष्ट्वा विषण्ण-हृदयोऽस्मिन्नरण्ये पर्यटन्नविगणिताटवीपर्यटनक्लेशो मार्गवशादुपेत्य गुहा-मिमां मामवलोक्य निरर्गलनिर्गलदश्रुधाराप्रक्षालितकपोलफलको बद्धांजलि-

पुटो निवेदयांब ! दयया । अपि नाम दृष्टो मृगयायातष्षोडशवत्सरदेश्यो मारोपमरूपो राजकुमार इत्यपृच्छत् । अहं तु तद्दुःखदर्शनद्विगुणितसंतापा तावदचिंतयम् । अहो ! प्रेमबन्धः । हन्त ! वात्सल्यम् । जगत्यनपत्यतैव दुःखजननी । चिराद्व्रतादिना प्राप्तपुत्रस्य पुत्रविश्लेषोऽनिर्वचनीयक्लेशवर्धको हि ! नितरां कुकूलानलवद्रात्रंदिवं दहति हृदयम् । कथमहं नापश्यमिति निवेदयेयम् । तदाकर्ण्य कीदृशीं दशामनुभवत्ययम् ? अपि नाम पृच्छेयमंबा कथमिति ? नैतदुचितमिव । हन्त ! जननी तावत्कथमिव सहते मद्विरहम् । भवेदपि परित्यक्ताहारा निर्निद्रा च बाष्पसलिलैः प्रक्षालिततनुतनुः क्षणमपि युगवदतिवाहयन्ती जगदखिलमपि दुःखमयमिव पश्यन्ती मन्नामप्रलपनपरा चेति विचिंत्य वज्रसारकठोरस्वांता पिहितनिजोदंता विषयेषु दूरीकृताभिमानतया बन्धुषु निस्स्पृहतया प्रेमबन्धस्य त्याज्यतया च नाज्ञासिषं तव तादृशं तनयमिति दुःखितमपि पितरं प्राहिणवम् । तत्प्रभृति गुहैकशरण्यापि नारायणैकशरण्या करोत्पाटितसुक्तवनजनेत्रापि विलसदतिस्पृहणीयवनजनेत्रा विटपिशाखेव त्वगंबरावृतापि फलशून्या योषिदाकृतिविदार्यमाणहृदया विविक्तेऽस्मिन्नरण्ये वसामीत्यकथयत् ।

तदवकर्ण्य जयंतिका संतप्तहृदया धिङ्नारीणां चपलताम् । धिक्तासां तारुण्यम् । धिक्पुरुषसौंदर्यैकलोलुपताम् । कामिनी तु सौदामनीव प्रदर्श्यात्मकांतिमन्धयति चक्षुः । मृगतृष्णेव तृष्णोपशमनजीवनाधारभ्रांतिमुत्पाद्य हरिणमिव तरुणमपि सुदूरं धावयति । कुसुममञ्जरीव रूपगंधसंपदा वशयति जनहृदयम् । महदिदमाश्चर्यम् ! यौवनं तु नारीणां गंधर्वनगरमिव क्रमेण विशकलितं रूपांतरमापादयति । न स्थिरं तत् । तादृशतारुण्यपरिभूतास्चेष्टन्ते कामिन्यः । अत्र तावदहमेव निदर्शनमिति सगद्गदं विललाप । सा तु तापसी रुदतीमेनां जयंतिकां बहुधा सांत्वयन्तीत्थमकथयत् । वत्से ! मा रोदीः । धैर्यमवलंबस्व । मा भून्मनसि चिन्ता । द्रक्ष्यसि

शुभोदर्कम् । नैकरूपः कालः । भवेदनधिगतनिधनः क्वापि जीवसेनः । प्राप्स्यस्यचिरादेव तम् । तदत्रैव भव मत्सहचारिणी विस्रब्धस्तब्धमृगयूथबंधुरे परिचयवशादुपकदंबतरुसमारब्धतांडवैः केकारवाकारितदयितैर्मयूरैः मनोहरे पद्माकरतीरराजद्राजहंसमिथुनसनाथे विविधप्रताननोप्रसवप्रकरपरिसरपरिभ्रमद्भ्रमरझंकारहृदयंगमे सुहृद्भिरिव पर्यटद्भिः परिचितैः वलीमुखभल्लूकनिकरैस्समावृते वनदेवताडोलायमानानेकलतावितानेस्वादुतरविविधफलभारभंगुरमहीरुहे नमेरुतरुपरिहृतसंतापे गिरितटनिपतन्निर्झरझरोपरीवाहदर्शनीये विविधपतत्त्रिनादमोदावहे तपोवनेऽस्मिन्विलोचने विलोभयन्ती कालमतिवाहय । यावद्दैवं शुभप्रदं भविष्यतीति सांत्वयामास ।

तदनु तदनुमत्या जयंतिकापि निरंतरं पतिमनुचिंतयन्ती तत्रैव तापस्या सममवसत् । एवं गतेषु कतिपयेषु मासेषु तापसीसम्पर्कादिव सत्वगुणभूयिष्ठा पांडरतरशरीरा मृदुलतरतया पतिविरहविजृम्भमाणशोकानलकालीकृताभ्यामिव मेचकचूचुकाभ्यां भूवल्लभार्भकपानार्हपयःपालनावगुंठितनीलचेलमुखाभ्यामिव कांचनकांतिकांतकुचकलशाभ्यामुपशोभमाना तनुतरतया शून्यं मन्यंते मामिह कोविदा अपि । वक्षोजयुगलं तु समुन्नततया करिकुम्भडंबरमनुकरोतीति विचिंत्य तज्जिगीषयेव दूरीकृतकार्श्येनावलग्नेन भासमाना समुन्नतोदरतयोत्तुंगोत्तानभृगुतलान्निपतंत्या कालिंदीवेण्येव रोमराज्या विराजमाना ज्वलनापत्यसंपर्कान्निजोदराभ्यंतरापत्यात्ययशंकयेव परित्यक्ततपनीयमेखला परिहसितगजदंतच्छेदक्षीरगौरकांतिकांतकाया लावण्यधिक्कृतमौक्तिकलावण्या रत्नाकरवेलेव परिस्फुरत्पोताकुलोदरा वेशंतश्रीरिव पांडरगंडका घनदिवससुरसरणिरिव पयःपूर्यमाणपयोधरा समापन्नसत्वापि गलितबला पूर्णगर्भलक्षणोपलक्षितालक्ष्यत पक्ष्मलाक्षी । ततश्च कुसुमांचिताकुंचितचञ्चलचूर्णकुन्तलपंक्तिचञ्चन्मस्तकां मंदाक्षमंदमधुरया गिरा जयंतिका प्रणमतीति व्याहरन्तीमुदरभारान्मंदमतिबलादवनितलकृतजानुकरकमलां प्रणिपतन्तीं जयंतिकां प्रसमरार्भकारुणरुचि-

रुचिरोत्संगा कुरंगाक्षि ! क्षिप्रमेव भव वल्लभसहचारिणीत्याशीर्वचनैर्मुखरयंत्यः कांतारमंतर्हिता बभूवुर्वनदेवताः ।

तदनु दशमे मासे सा नरपतिदुहिता जयंतिका जयंतमिव पुलोमजा मुकुन्दमिव देवकी पुत्ररत्नमसूत । स शिशुर्जननीहृदयशोकपावकतप्ततये-वारुणतनुरनुरागरसस्नापित इव हृदयाद्बहिर्जीवसेनः जयंतिकाहृदय-जनितदयितवियोगशोकाश्रयाशतापासहिष्णुतयेव बहिरुत्प्लुतो मनोभव इव हृदयशोकनिराचिकीर्षया प्रत्यक्षीभूतस्सशरीरः आनंदसन्दोह इवा-राजत । क्रमेण च वलक्षपक्षक्षपाकर इव प्रतिदिवसमुपचीयमानस्संचरण-चतुरः षडब्ददेश्यो नग्नः क्रीडारसैकमग्नः प्रफुल्लविचित्रप्रसूननिचितलता-विरचितहारमंडलो नयनोपकंठलंबिनश्चिकुरनिकरानसकृन्निजपाणिनोत्सार-यन्नाश्रवणमूलमेकाकी कंदरद्वारदेशे पर्यटन्नवलोक्य च प्रधावंतमेकं वातायु-पोतं तज्जिघृक्षया स बालः सुदूरमन्वधावत् । जयंतिका तु वर्तते बहिः क्रीडासक्तो वत्स इति मन्वाना सुचिरं तापस्या जीवसेनोदन्तमेवानुलपन्ती कंदराभ्यंतरे बहोः कालादप्यनागतं तनयं द्रष्टुकामा बहिरागत्य तमदृष्ट्वा चावेगसाध्वसवेपमानहृदया निजदौर्भाग्यमनुचिंत्य भृशं दुःखिता सबाष्प-गद्गदं वत्स ! वत्सेति तारतारमाह्वयन्ती निर्निरोधमाक्रंदन्ती समुद्विग्न-हृदयया तया तापस्या सह तत्र तत्र कुंजपुंजेषु विटपितटेषु गिरिविवरेषु पल्वलकूलेषु दरीषु वल्मीकप्रांतेषु स्रवंतीतीरेषु चान्विष्यान्विष्य तदलाभ-दुःखभरदम्यमानकंठापि मुक्तकण्ठी विललाप ।

हा ! क्वासि वत्स ! मंदभाग्यामिमां मां विहाय क्व गतोऽसि ? पतिविरहितापि धृतप्राणा परुषहृदयेति किमु मच्चित्तभावनया मज्जिहासया क्वापि गतः ? कथमद्य प्राणिमि पापकारिणी ? किमिदानीमपि न स्फुटितं हृदयं मदीयम् ? हा ! प्रलोभनशील ! विधिहतक ! नाहं पति-सुतविरहिता प्राणिमि । भवत्संकल्पमन्यथा कल्पयामि । वत्स ! तिष्ठ तावद्यावदहमपि भवंतमनुव्रजामि । हा ! इति बहुधा रुदती भृगुतटा-

न्निपत्य प्राणपरित्यागाय निश्चिकाय। तदा बाष्पदिग्धमुखी तापसो निर्वर्ण्य विवर्णवदनामेनां प्राणपरित्यागाय कृतोद्यमामचिंतयत्। कथमिव निवारयाम्येनाम्? कथं वा सांत्वयाम्येनाम्? न हि लगति तावदधुना मदुपदेशोऽप्यस्या हृदये। कथं कथमपि पतिविरहजश्शोकस्तनयमुखाव-लोकनेन शांत इवाभवत्। इत्थं सुचिरं विचिंत्य तामवलंब्य दुःखभर-स्फुटितवचनाश्रुधारापरिबाधमानाधरा बलान्मंदमित्थमकथयत्। ननु कल्याणि! विलोक्य च भवद्दशां वक्तुमपि सांत्वोक्तिं वदनमिदं परावर्तते। तथापि कथयामि। सावधानमवधारय। दीनाया अपि पराधीनायाः प्रमदायाः अनुचिता हि स्वच्छन्दप्रवृत्तिः। एते च जीवसेन-विद्राणाः तव प्राणाः। तद्विरमाद्य तावदनेन यत्नेन। बालभावेन चञ्चलप्रकृतिस्तव तनयः क्वापि प्रयातोऽतिगहनतया परिभ्रष्टवर्त्मा कस्यापि पुलिंदस्य भवेद्वशवर्ती। प्राप्स्यसि पुत्रमन्वेषणेन। तदधुना धीरा भव। तदन्वेषणपरा भव। जीवसेनोऽपि क्वापि भवेद्भवदाशया। किं साधितं भवति प्राणपरित्यागेन। "जीवन्भद्राणि पश्यति" इति मुधा नैव कथितं प्राज्ञैः। तदिदानीं नीतिमत्या धृतप्राणया त्वया तावत्तदन्वेषणयत्नः कार्यः। विस्रब्धा भव मद्वचसि। गृहाणेमां रत्नमालाम्। बध्वा च मणिबन्धे स्मर पुरुषाकृतिं मनोहररूपाम्। तदनु चित्रपुरे भवाभिषिक्ता प्राप्स्यस्यवश्यं प्रियं तनयं च।

तत्र प्राप्ताधिकारश्च प्रेषय तावत्सर्वत्रान्वेषणाय चतुरांश्चरान्। अहमपि पुत्रविरहशोकजर्झरितहृदयाय मत्पित्रे वीरकेतवे निवेदयामि दृष्टो दिष्ट्या तव तनयस्सुकेश इति। तदवकर्ण्य कर्णामृतं स वीरकेतुस्सादर-मानाय्यावश्यं भवतीमभिषेक्ष्यति। तत्सांत्वय पर्यालोचनया हृदयम्। दूरीकुरु शोकावेगमिति। आकर्ण्य च जयंतिका शुभोदर्कमपि सद्यः कर्णकर्कशं तापसीवचनं निश्श्वस्य हन्त! मंदभाग्यायाः मम किमवशिष्टं राज्याधिकारेणैनेनेति मुहुः ताडितवक्षोजयुगलं सगद्गदं रुदती सा बभूव!

राज्याधिकारः। पतिसुतविरहितायाः किमनेन ? क्वाप्यनाथ इव पर्यटति दीनदीने सुते पत्यौ कथमहं सिंहासनमधिरोहामि ? राज्यं तावदरण्यमिव प्रतिभाति मे। तदलमनेन यत्नेनेति तारतारं विललाप। अगृहीतनिजोपदेशायास्तस्या निशम्य परिदेवननादं तापसी खिन्नमानसा पुनरप्यचिंतयत्। अहो ! विधिविलसितम् ! क्व वा हेमपुरम् ? क्वेदमरण्यम् ? क्वाहं विविक्तवर्तिनी ? क्व चेयं जीवसेनमहिषी ? हंतेदृशावस्थयानया कथमिवोपनतस्सहवासः ? किमिदमपि विलिखितं मदीये ललाटे विधिना ? हंत ! न सहे द्रष्टुमिति विचिंत्य च तापसी वल्कलांचलेन परिमृज्य नयनवारि भद्रे ! राजभावमवलंब्य माणिक्यमालाबलेन सत्यमवाप्स्यसि सुतपतिसमाश्लेषसौख्यम्। तदंगीकुरु मम प्रार्थनां कृपयेति न्यवेदयत्।

सा तु जयंतिका सकरुणमंब ! तथैव भवतु भवद्वाण्या। करुणयानुगृह्णातु भवतीति व्याहृत्य विरराम। सा तापसी प्रमुदितांतरंगा दृढतरमाश्लिष्य बध्वा च मणिबंधे तां मालां ध्यात्वा च भगवन्तं निजगाद। ननु कल्याणि ! कल्याणाकृतिं पुरुषं ध्यात्वा च तिष्ठ तावदिह यावदानेष्यामि मत्तातं सुतदर्शनोत्सुकमिति तत्कण्ठं पुनरप्यालिंग्य निरगात्। सत्वरं प्रस्थिता सा तापसी चित्रसन्निवेशं चित्रपुरं प्रविश्य च नरपतिप्रासादप्रतीहारे द्वारपालमब्रवीत्। काचन तापसी भवद्दिदृक्षया द्वारि तिष्ठतीति निवेदय प्रभवे इति। द्वारपालस्तु सरभसमुपेत्य राज्ञे न्यवेदयत्। श्रुत्वा च नरपतिः पाताललोक इव बलिसमाक्रांतः विपिनदेश इव तिलकांचितः केदार इव समुल्लसत्कुल्याकुलपार्श्वः प्रदीपज्वालाकोरक इव समधिगतदशाग्रः मुदेव जरया कंपिततनुः स वीरकेतुः प्रासादद्वारमाससाद ! आसाद्य प्रणम्य च भगवति ! पावय चरणन्यासेनास्मत्सौधमिति सविनयं नीत्वाभ्यंतरं समुपवेश्य कनकपीठे किमागमनकारणमित्यपृच्छत्। तदा सा तापसी भो राजन् ! भवतस्तनयस्सुकेशनामास्मत्तपोवने तपश्चरति। तदानयनाय मया साकमायाहीति निवेदयितु-

मागतास्मीति जगाद ।

तदनु स वीरकेतुरनुगृहीतोऽस्मि धन्योऽस्मि महानानंद इति तापसीं सत्कृत्य तया सह स्यंदनेन प्रतस्थे । प्रस्थितश्च तपोवनमासाद्यारुण-तरदृगंचलं तनुश्मश्रुराजिप्रकाश्यमानपुंभावं मांसलांसपीठमतिपुष्टतयाति-सारतया च पृथग्विभक्ताभ्यामिव स्थपुटिताभ्यां भुजदंडाभ्यामुपशोभमानं कठिनतरायतक्रोडकवाटमवयवेषु पुरुषोचितव्यज्यमानकाठिन्यं स्फुटदृश्य-मानरोमकूपांचितगात्रं स्थूलस्थपुटितकठिनोरुयुगलं कांतारसंचारोचितकठि-नजंघाकांडं मणिबन्धबद्धमाणिक्यमालामुषितयोषावेषं रमणीयाननमपि समाश्रितकाननं मुनिसमुचितवेषमपि सुजातरूपं समाश्रितारण्यमपि रमणीय-पुरोपशोभमानं निदानमानंदानां शिलातले तरुच्छायाशीतले निषण्णं सुकेशाभिधानं निजात्मजप्रतिपत्त्या नातिदूरात्तमपश्यत् । दृष्ट्वा चानंदमंदी-कृतगमनोऽपि हृदयोल्लसत्त्वरातिशयेन परिस्खलद्गतिरुपसर्पन्मन्दं वत्स ! वत्सेत्याह्वयंस्तदुपकण्ठमासाद्य तस्थौ । जयंतिका तु तादृगवस्थं स्थविरं निरीक्ष्य करुणार्द्रहृदया किं वा न कारयति वात्सल्यमिति विचिंत्य झडित्युत्थायावनमितोत्तमांगतयाधोमुखलंबमानजटापटला त्रपात्रस्तमानसा कथंकथमपि कथयन्ती सुकेशः प्रणमतीति सप्रश्रयं प्रणनाम ।

अनुपदमेव स वीरकेतुस्सादरं प्रसारिताभ्यां कंपमानाभ्यां पाणिभ्या-मुत्थाप्य तं शिरसि परामृशन्वत्स ! किन्नु खल्विदं ? लोकव्यवहार-प्रतीपतया प्रतिभाति तवाचारः । क्षत्रावतंसस्य नायं क्रमः । शैशवे तावदभ्यसनीया हृद्या विद्या । तारुण्ये तु प्रजापरिपालनपरेण गृहमेधिना विषयैषिणा भवितव्यम् । समार्जितयशसः निर्वर्तितधर्मकार्यस्य प्रजोत्पादनेन विवर्धितात्मवंशस्य वार्धके तावदीदृशी वृत्तिरुचिता । तात ! भवता त्वधुनैवेयं समाश्रिता या मयेदानीं समाश्रयणीया । पश्य वत्स ! वृद्धाः अपि सचिवाः भवत्पुरप्रवेशप्रार्थनाभिकांक्षयैव सन्निहिताः । प्रजा अपि भवत्पट्टाभिषेकमहोत्सवविलोकनकौतुकाक्रांताः निरीक्षन्ते भवदागमनम् ।

ननु वत्स ! त्वयि तापसवृत्त्या तावदरण्यशरण्ये भवदेकपुत्रस्य मे का गतिः ? राज्यलक्ष्मीरपि निरवलम्बना भविष्यति । परराजवशवर्तिनी च । स्यादेतदखिलमपि; विमृशतु भवानेवाधुना मदीयामिदानींतनीं स्थितिम् । पश्य माम् । कापुरुष इव परिस्खलद्घूर्णोऽस्मि । जरया तावदहं शिशुभावाविशेषितोऽस्मि । प्रायो जगति जनाः वयसीदृशे सुखलिप्सया किल पुत्रमभिलषंति । वत्स ! मामीदृशावस्थं परित्यजतस्तव न तावत्पश्यामि किमपि फलं तपसा । त्यक्तपितृवरिवस्यस्य न किमपि कर्म सिध्यतीति वदंति प्राज्ञाः । तदुत्तिष्ठ । निधेहि धर्मे धियम् । धवलयोपार्जितेन यशसा भुवनमण्डलम् । प्रकाशयात्मसंभूतेन पुत्रेणास्मद्वंशम् । आनंदय साधुजनपरिपालनेन प्रजानां मनांसि । तर्पय देवताः क्रतुकर्मणा । मानय गुरूजनान्नामय विपक्षोत्तमांगानि । ततश्च कृतकृत्यो लब्धवृद्धभावो वृत्तिमिमामेवावाप्स्यसि । गंधर्वनगरमिव प्रतिक्षणं परिणाममुपयाति वयोऽपि । तद्विधिना यदा च यद्विहितं तदा तदवश्यमनुष्ठेयम् । अन्यथा कृतमकृतम् । भवांस्तु क्षत्रकुलोत्पन्नः । तदवश्यमधुना वोढव्यो राज्यभारः । तदिदानीं प्राप्ततारुण्यस्य धर्मो हि राज्यपरिपालनम् । नेदं तपः । कुमार ! मा तावदुपयातु मोघतां काननचन्द्रिकेव तवेयं रूपसंपत्तिः । मा च वनलताप्रसूनमिव ते यौवनमपि जोर्यतु वने एव । तदेहि वत्सानंदय पौराणां नयनानि नोदय पित्रोरावयोर्वयोविह्वलयोः पुत्रविरहजक्लेशमित्यभ्यर्थयामास ।

तदनु वयोवृद्धैर्ज्ञानवृद्धैश्च ननु कुमार ! माररूपोऽसि । किमनेन तपोनुगुणवेषेण । पितृमनस्संतोषणमेव हि पुत्रकृत्यम् । तदेव तपः । तदेव धर्मः । तदेवावदातं कर्म । तदेव परलोकसाधनम् । तदेव क्रतुः । तदेव यशोमूलं; यत्पितृमनोरथपूरणम् । तदेहि राज्यावनायेति सचिवैः प्रार्थितस्स सुकेशः बद्धांजलिपुटः ननु भगवति! तपोधने! भवतीमंतरा नाहं कामये राज्यसुखमपि । तदायातुमर्हसि मया साकम् । निरंतरमपि

सन्निहिता भवती हितैषिणी, चित्रपुरमपि पवित्रयन्ती चरणविन्यासेन मामनुगृह्णातु कृपयेति प्रार्थयामास तां तापसीम्। सा तु तापसी सस्मितं वत्स! कुमार! किमेवमभिदधासि? क्व राजधानी? क्वारण्यानी? भोगः क्व? क्व च तपः? परित्यक्तसर्वविषयायाः नोचितः खलु नगरवासः। कामक्रोधाद्यावासः खलु राजधानी। अकृत्यमपि कारयति तत्रत्यस्सहवासः। अवाच्यमपि वाचयति। अगण्यमपि गण्यतां नयति। अश्राव्यमपि श्रावयति। मानमत्ततामुत्पादयति। अप्रतीक्ष्यमपि प्रतीक्षयति। अविवेकप्रसवित्री खलु राजधानी तावदाशाविवर्धिनी। तदलमनया प्रार्थनया। गच्छतु भवान्पित्रा साकम्। निरंतरमपि धर्मपरो भव प्रजापरिपालनेन। अहमस्मि कानने। यदा च मद्दिदृक्षा तदागच्छतु भवान्मदुपकण्ठम्। मा मनसि चिंता तावदेतदर्थम्। तद्याहीत्यकथयत्।

तदवकर्ण्य स सुकेशः सविनयं बद्धांजलिपुटः भगवति! भवत्यास्तपसस्तावन्नैव प्रत्यूहः। तत्र परिजना अपि यथाभिलाषं भवतीमनुसरंति। कल्प्यते च भवदर्थं विविक्तो देशः। अयमभिनिवेशेन मामेवं निर्बध्नातीति मनसि न कर्तव्यम्। भवत्सान्निध्यं निरंतरमपि भवत्विति मनीषयाभ्यर्थये। तदनुगृहाण मामनुगमनेनेति प्रणिपपात। वीरकेतुरपि सप्रश्रयं भगवति! पवित्रय चित्रपुरमपि। मत्पुत्रप्रार्थनामंगीकृत्य तत्र स्थिता च कालानुगुणनीतिबोधनेन सन्मार्गगामिनं करोतु भवती कुमारम्। भवादृशास्तावदंकुशप्रायाः खलु राज्यलक्ष्मीमदोत्कटनृपालमातंगानाम्। निरंतरमपि परोपकारपरायणाः खलु तपोधनाः। तदिदानीमलंकरोतु भगवती भवती शिबिकामिमां इत्यसकृदभ्यर्थयामास। निशम्य तद्वचनं जयंतिकायाः प्रार्थनां च विचार्य मनसि चिरं विचिंत्य च सा तापसी किं कर्तव्यम्? कथं वर्तितव्यम्? किमनुष्ठातव्यम्? बलवती खलु! भवतां प्रार्थना। निराकर्तुं तां परावर्तते मे मनः। भवतु तथा यथा च नियतेस्संकल्पः। तमन्यथा कर्तुं नाहं समर्था। तदिदानीं प्रस्थितास्मीति निजकंदराभ्यंतरं

प्रविश्य दंडकमंडलुकृष्णाजिनचीरांबरादिकमादाय निधाय च शिबिकायां स्वयमप्युपाविशत् ।

तदनु सप्रमोदं कतिपयबलपरिगतस्सन्स सुकेशो मधुवर्णं सिंधुजातं सैंधवमधिरुह्य मंदारनामानं चित्रपुरमभिप्रतस्थे । प्रस्थितश्च दुर्गमं कांतारमतिक्रम्य च विचित्रचित्रचित्रितं चित्रपुरं प्राविशत् । तदानीं मत्तकाशिन्योऽहमहमिकया समाश्रितक्षौमाः क्षौमालंकृताः राजमार्गेणापतन्तं समनयनमपि विषमनयनमिव महासेनाढ्तं सुजनपरिगतमपि निस्त्रिंशपरिगतं लक्ष्मीहृदयमिवाच्युतरूपाक्रांतं सुकुमारं रूपापहसितमारं राजकुमारं विलोक्य ननंदुः ।

एवं प्रदक्षिणीकृतनगरः पौराभिनंदितः पुरंध्रीभिर्विरचितमंगलविधिः सचिवैरनुगम्यमानः प्रासादं प्राविशत् । प्रविश्य च तस्यै तापस्यै सौधे एवावासमेकत्र विविक्तमकल्पयत् । तदनु शुभेऽहनि शुभे मुहूर्तेऽभिषिक्तश्च स सुकेशो मणिगणरुचिरविविधविचित्रपत्रभङ्गं लम्बमानपरिमलबहुलप्रसूनमालापरिसरपरिभ्रमद्भृङ्गं सितातपत्रसमुल्लसितशृंगं प्रत्नवरत्नप्रभापिशंगं समुत्कीर्णसुवर्णसालभंजिकातरंगं राज्यलक्ष्मीलासिकानर्तनरंगं तुंगं सिह्मासनमारुरोह । आरुह्य च सामंतनरपतिमूर्धावतंसितसुममालाप्रसृतमधूलीधुनीपालीमरालीकृतचरणयुगलः नरपतिरराजत ।

इति श्रीयदुशैलवासि, बालधन्विकुलकलशजलनिधिकलानिधि, विद्याविशारद, संस्कृतसेवासक्त, कविकुलतिलक, राज्यप्रशस्ति, राष्ट्रपतिप्रशस्तिपरिष्कृत, श्रीमहीशूरनाल्वडिकृष्णभूपसुवर्णपदक—साहित्यपरिषद्रजतपदकसमलङ्कृत—जग्गुवकुलभूषणमहाकविविरचितायां, जयन्तिकायां चतुर्थलहरी सम्पूर्णा ॥

## ॥ पञ्चमलहरी ॥

तदनु सा विधृतनरपतिवेषा जयंतिका त्वखिलविटपिपटलपरिगत-मुरुगजरिपुमुखमृगगणसमुपजनितभय - मचिरकरिकलभविलुलितकिसलय-कुसुमनिचयपरिमलबहुल - मतिचटुलकुपितकपिकुलकलहचलितविटपिविटप-शिखरदलनिवहरवमुखरित - मतिरुचिरपिककुलकलरवकलितपरिमलबहुल-कुसुमविसरपरिसरचरमधुकरनिकरनिनदसुभग - मनुस्तृतवनचरजनभयचलि-तहरिणनिचयचरणगतिरयपरिमृदितधरणितलनिपतितरविकिरणपरिणतदलर-वबहुल - मुलपपिहितकिटिपटलहननकुतुकिमृगयुसमुदय - मतिरयचरचमर-मृगगणचरणनिशितखुरहतिविदलितपवनचलितचरमतनुरुहनिवहविसृमर - मृदणुगणशबलित-मचिरवनचरनिहतकुररवमुखरित-मविरतवनजनमिथुन-निधुवनमथितशिथिलितकचनिचयगलितविकचविविधकुसुमपरिमलवहपवन परिचलितलत - मुरुकरटतटनिकषणजनितसुखदरविवृतवदनकुहरगलितनल-कबलगजचरणकलुषिततरुतलपरिसर - मतिमधुरसरिदुदकविहरणपरविविध-पतगगणरसितसुभगतर - मनवरतमपिमृगपतिपरुषरवमुखरितगिरिविवरमुरग-ततिमुखविषपवनमुषितमूषिकं विपिनमुपेत्य वनविहारकैतवेन तत्र तत्र पुत्र-मार्यपुत्रं च स्वयमेव तुरगाधिरूढा मृगयति स्म ।

प्रधावितस्य तुरंगमस्य वेगमवलोक्य त्रपयेव त्रयीतनुतुरगेऽपि चरमगिरिसानुतलनिलीने तुरगखुरपुटकुट्टनत्रुटितगिरितटगैरिकधातुक्षोदैरिव रंजिते संध्यारागैर्गगनांकणे दरविवृततरुत्वगभ्यंतरेषु विटपिकोटरेषु च नीरवं निलीने च विविधशकुनिसंघाते निद्राविद्राणैः शाखामृगैः नीरंध्रासु तरुशाखासु निबिडकीचकध्वानदंतुरे कांतारे कुंजपुंजमधिशयानेषु भल्लूकेषु परिस्फुरत्स्फुलिंगसंकाशखद्योतसमुद्योतिते शाद्वलतले दवदहनज्वालाशंका-मापादयत्सु ज्योतिर्लतापटलेषु तारतारझिल्लीरवमुखरितेषु हरिदंतरेषु घूक-संघघोरघूंकाररवशब्दायितेषु गुहाभ्यंतरेषु समाधयसमवलोक्य ध्वांतावनद्धं

वनाध्वानं दृढतराकृष्टेन खलीनेन कशाभिघातेन च निवर्तिततुरंगमा पार्ष्णिताडनद्विगुणितजवं वाजिनं प्रकालयति स्म पुराभिमुखम्। प्रधावति च सैन्धवे खरतरखुरशिखरपरिरिंखणविदलितशिलाशकलपरिस्फुरत्स्फुलिंग-संगदग्धक्षितितलनिपतितशुष्कपत्रपटलतया सभयमुत्प्लुतशशबृंदसंकुलं दव-दहनशंकया कुलायेभ्यः प्रस्थितानां पत्ररथव्रातानां दीनरावदंतुरं प्रबुद्धानां क्षिप्रमृक्षहर्यक्षतरक्षुप्रमुखानां वनसत्वानां रूक्षारवैः परिक्षुभितं काननम-भवत्।

सा जयंतिका तु कशाभिघातेन द्विगुणयन्ती वाजिजवं परिस्फुर-न्मणिदीपपंक्तिं क्वचिद्वीणां सारयन्तीभिः क्वचिदालापैकतानाभिः क्वचि-ल्लास्याभ्यसनपराभिः क्वचिद्विचित्रप्रबन्धवाचनव्यग्राभिः बालिकाभिः दर्शनीयागाराभ्यन्तरां क्वचिद् द्विजवरगीयमाननारायणविचित्रस्तोत्रवाचा-लितां चित्रपुरीं प्राविशत्। प्रविश्य च राजमार्गेण गच्छन्ती समासाद्य च प्रासादं द्वितीयकक्ष्यांतरे ससंभ्रमसुपसृतपरिजनपरिगृहीतखलीनात्तुरंगमाद-वतीर्य दूरीकृतपरिजना स्वयमेकैव भित्तिनिखातनागदंतलंबितकाषाय-वल्कलं विमलोदकसंभृतकमंडलुमंडितैकदेशं प्रभुप्रेषितविविधमधुररसभरित-फलसांद्रकनकभाजनसनाथवेत्रासनं विस्तारितकृष्णाजिनशार्दूलचित्रकाया-जिनदर्शनीयमेदिनीतलं शंकुलंबितस्फाटिकजपमालं भित्तिसाचीकृतरज्जु-खट्वांगं पृथुदंडघटितरांकवभस्त्रिकासनाथकोणदेशं एकदेशविनिहितहसन्ती-समारोपितदुग्धभाजनं प्रविश्य च विविक्तं भवनं समास्तीर्णरुरुचर्मोत्तर-च्छदतल्पसनाथे पर्यंके निषण्णायै तस्यै तापस्यै नमश्चक्रे।

नमस्कृत्य च तया समुपदर्शिते समासीना भद्रासने सगद्गदमंब! भगवति! पट्टाभिषेकदिनादारभ्य केनापि कैतवेन तुरगाधिरूढा तावदह-मितो गता कांतारेषु भृगुप्रांतेषु वल्मीकोपांतेषु गुल्मेषु वेशंतेषु कंदरोदरेषु गिरिदुर्गेषु तरुनिवहेषु गाधेतरावटेषु स्रवन्तीप्रांतेषु पक्कणेषु नगरपरंपरासु च यथेच्छमन्यत्रापि तत्र तत्रान्विष्य तनयं वल्लभं चालब्ध्वा परिगृहीत-

ग्राम्यजनोचितवेषा पुनरप्युपशल्येषु पक्कणेषु च विचारयन्ती अभिज्ञान-शंसनपुरस्सरं तत्रत्यानप्राप्तमनोरथा भिक्षुरूपाच्छादितात्मरूपा नगरेषु परिभ्रमन्ती तदलाभनिर्वेदविषण्णहृदया पुनरप्यस्मिन्नहनि प्राप्तकांतारा मुधा आसायं परिभ्रमन्ती वितथमनोरथा प्रतिनिवृत्तास्मि। बहुधा चिंतित-मपि नैव स्फुरति तत्प्राप्तिसंभावनापि। यदर्थमनभिमतोऽप्यंगीकृतोऽयं वेषः। राज्यसंपदप्यनुमता। हन्त! नैव गणितो राज्यभारक्लेशोऽपि। समाश्रितश्च कुलप्रतीपोऽयमाचारः। जल्पितमप्यनृतम्। धिगिमां माम्। तयोरलाभे किमनेन वेषेण किमनेन राज्येन किंवा जीवितेन? जगदिदं शून्यमिव प्रतिभाति। निरयप्रायं खलु राज्यमिदम्। सुखमिदमप्य-सुखायते। ज्वलनज्वालेव मां दहतीयमाभरणपरंपरा। विभूषणमणि-रश्मिजालबद्धेवास्मि राज्ये नियन्त्रिता। निरर्थकं मे जन्म। तदिदानीं क्षणमपि नाहं वसामि सौधेऽस्मिन्नरण्यानीशरण्या भवेयम्। भवतु भवत्येव तावदिह वीरकेतुमनस्सांत्वनाय। दत्वा चाहारार्थं वनसत्वेभ्य-श्शरीरमिदं सार्थयामि जन्म मदीयम्। इति व्याहरंती मन्दं श्रमापनि-नीषया भूषणमखिलमप्यवतार्य स्वयमेव निवार्यं च मुखकमलतलसमुल्लस-च्छ्रमजलबिंदुजालं चेलांचलेन वीजयंत्यात्मपाणिना चिंताक्रांतस्वांता बभूव।

तदानीं सा तु तापसी श्रमापनयनाय वीजयंत्यास्तस्यास्तावद-दृष्ट्वा मणिबन्धे मणिमालां सावेगं वत्से! किन्नु खल्विदम्? न दृश्यते ते मणिबन्धे निबद्धा सा मणिमाला। किमु भवत्या क्वाप्यवतार्य विनिहिता-भ्यंतरे? आहोस्विदरण्ये परिभ्रमंत्या त्वया क्वापि विनिपातिता? किमिदम्? शून्यमणिबन्धासि। इत्यपृच्छत्। एवमभिहिता सा तु जयंतिका निजमणिबन्धमवलोक्य मालारिक्तमावेगेन साध्वसपरिस्फुरद्धृद-येतिकर्तव्यतामूढा किं करोमि? नास्ति खलु मणिबन्धे माला। हन्त! वाजिनो जवोत्पादनाय समुच्चालितभुजदंडतयांधकारस्थगिते कांतारे क्वापि प्रच्युता भवेत्। धिगेनां मां मंदभागिनीम्। किमद्य करोमि? कथं

जीवामि ? हन्त ! सर्वथा प्रतिकूला नियतिः नर्तयति मामेवं धृतप्राणाम् । तत्त्यक्ष्यामि प्राणानिमान् । किमितः परमनेन जीवितेनांब ! प्रवेशितास्म्यंधतमः । परिभ्रमत्युत्तमांगम् । शुष्यति जिह्वा । कथं वर्ते ? न जानामीति बहुधा विललाप । एवं विलपन्तीं तामवलोक्य नितांतचिंतासंतानतांतस्वांता सा तापसी मनसीत्थमचिंतयत् । हन्त ! किमद्य करोमि ? प्रतिकूले तु दैवे सर्वमपि प्रतीपतया प्रवर्तते । मया तावत्प्रवर्तितः प्रयत्नस्सर्वोऽपि प्रतिभटतयाभिपतति । अनिच्छंत्यपि कथमपीयं राज्ये स्थापिता प्रभ्रष्टपतितनयान्वेषणयुक्तिरप्युपदिष्टा । तदर्थं शक्तिविशेषसाधनीभूता प्रदत्ता मणिमाला । हन्त ! भोस्सर्वमपि भस्मनि हुतमिवाभूदिदानीम् । किमु लगति ममोपदेशोऽस्या हृदि ? भविष्यति सांत्वोक्तिरपि चर्वितचर्वणरूपा । वेदांतार्थप्रतिपादनमपि भवत्यूषरक्षेत्रवृष्टिकल्पम् । आयतिशुभंयुवार्तापि परिहासाय कल्पते । लोकोक्तिरपि नैव मनः परिवर्तयति । क्लेशजातमुपर्युपरि पतमानं शिलामयं मानसम् तनोति । ममापि परावर्तते जिह्वा सांत्वोक्तिमभिधातुमपि । किं कर्तव्यम् ? कथं कथनीयम् ? किं व्यवस्यतीयमिति बहुधा विचिंत्य च जयंतिकामित्थमकथयत् ।

ननु जयंतिके ! यद्यपि दयनीयासि । भवद्दशामवलोक्य किमपि वक्तुमपि परावर्तते मे जिह्वा । दयिततनयवियोगदंदह्यमानहृदयासि । निर्वेददूरीकृतजीविताशासि । क्लेशपरंपराजिहासितदेहासि । तथापि मनस्समाधेहि निधेहि मदीये वचसि । प्रायो जगति तावदेव प्रगल्भंते; दुर्विदग्धा अपि विदग्धा भवंति । बालिशा अपि कल्पंते कार्यनिर्वहणाय । अमान्या अपि मान्यंते मानवैः । दुश्शीला अपि सुशीला विलसंति । अनभिजाता अपि आभिजात्यपदवीमारोहंति । कुरूपा अप्यपहसितमनसिजरूपाः प्रकाशन्ते । यावन्नियतिरनुकूला कलयति निरतिशयकटाक्षविशेषं नरेषु । ईदृशे क्लेशव्यतिकरे तु नियतिपराङ्मुखतादशायां तद्व्यतिरेकिणो भवन्ति मानवाः । तद्विवेकिना कष्टकालेऽपि नैव त्याज्यं धैर्यम् । न

शिथलीकरणीयं पौरुषम् । न विसर्जनीयो यत्नः । कर्तव्यं कर्म । स्मर्तव्यश्शुभोदर्कः । हातव्यं दैन्यम् । चिंतनीयः कर्तव्यांशः । समाश्रयणीयं धाष्ट्र्यम् । दूरीकरणीयं वैक्लब्यम् । चेतयितव्यं चेतः । चेतनमनुसरति हि द्वन्द्वपरंपरा । नत्वचेतनम् । संपदि वापदि वा अतर्कितमेव श्येनपातं अभिपतति । न गणयति गुणान् । न लक्षयति लक्षणानि । न परिशीलयति शीलम् । नेक्षते कुलम् । न पश्यति वयः । नावलोकते रूपम् । किं बहुना चतुराननोऽपि सावधिकाधिकारो हि नियते काले । ततश्च सोऽपि मादृश एव । तत्प्रकृतेः परिणामशीलतां परिशीलयन्मनीषी दुःखे सुखे च समदृष्टिः नैव जहाति कर्तव्यं कर्म । तद्भवत्यपि साधु विमृश्य स्थितिमिदानींतनीं धैर्यमवलंब्य च कर्तव्यकर्मरता भवतु । अद्य ते तु नैव स्त्रीत्वम् । नापि पुंस्त्वम् । उभयविलक्षणं हि रूपम् । कदापि यदि सन्निहितस्तव दयितः कथमिव प्रत्येति भवतीमीदृशवेषां जयंतिकेति ? माणिक्यमालां तामंतरा ते दुर्लभमेव प्राथमिकं स्त्रीरूपमपि । हन्त ! सा तु माला क्वापि नष्टा । किमद्य कर्तव्यम् ? कथमन्वेष्टव्या ? कुत्र वा निपातिता । सा तु माला तनुतनुतरा वल्मीकोदरे वा महति विवरे वा यदि निपातिता कथमिव तदुपलब्धिः ? निरवधाना संवृत्तासि ? बहुधा चिंतितमपि न मे किमपि प्रतिभाति । तदेवं मनसि कृतम् । पुरुषमुद्योगिनमुपैति लक्ष्मीः । वयमपि कृतप्रयत्ना भवामः । श्वः कल्य एव तुरंगमाधिरूढे आवामन्विष्यावः । तदलमनया चिंतया । याहि वत्से ! भुक्त्वा सुखं स्वपिहि । किं प्रयोजनं केवलेन परिदेवनेन ? प्रयत्नपरे भवावः । नियतिरनुकूलयति । द्रक्ष्यसि शुभोदर्कमिति ।

तदनु सा जयंतिका प्रणिपत्य तापस्यै सबाष्पं भगवति ! भवदनुग्रहविशेषाद्भवत्वेवमेवेत्यभिधाय निर्गत्य च तस्मात्कृताहारा चिंतायत्तस्वांता आनिशांतमनारूढनिद्रा तल्पतलपरिवर्त्यमानगात्री प्रतिपालयति स्मारुणोदयम् । मंदालोके प्रत्यूषसि समुत्थाय तत्पादनमिलषितपरिजनपरिचर्या

चर्यादत्तदृष्टिर्निर्वर्तितस्नानादिविधिः विधिनिहितभारा तापसीभवनमासाद्य प्रथममेव प्रबुद्धां निर्वर्तितस्नानां तापसीं प्रणम्य तया साकमाद्वारमाजगाम। उभे अपि ते द्वारि स्थितौ वाजिनावधिरुह्य प्रस्थिते। निद्रासक्तपौरजनतया नीरवेण नगरमार्गेण मंदालोकतया दृश्यादृश्यगर्तमनल्पतुहिनपातजडतरशाद्वलं कुंजोदरपुंजीभूततमःपटलं प्रतिक्षणमाविर्भवदालोकतया विस्तार्यमाणमिव पेचकपीडासमारटत्काकपटलदीनरावमुखरिततिमिरबहुलतरुषंडं तिमिरनिरंतरश्वभ्रपतनभियेव मन्दं मन्दं चरता मारुतेन प्रतिबोध्यमानवनसत्वं दरविकसद्विविधवनकुसुमचित्रगन्धबन्धुरं दुरवगाहं गहनमवजगाहाते। तावता कालेन दिनांते परिगृहीतं तेजः पुनरप्यर्पयितुमिवादित्यागमनमनुपालयतः समाश्रितप्राचीहरितः जातवेदसः तेजःपुंजेनेवारुणोदयरागेण रंजिते पूर्वहरिदन्तराले प्रबुद्धपतत्त्रिणां विविधरवैः शब्दापिते कांतारे क्रमशः प्रकाशमाने रविमण्डले वत्से ! पूर्वेद्युः किमत्र प्रयातम् ? उतात्राहिंडितम् ? वदेति पृच्छन्ती तापसी मालान्वेषणपरा जयंतिकया साकं कांतारमभितः पर्यटति स्म।

तत्र तत्र मार्गणव्यग्रे दुर्गममार्गपरिभ्रमणखेदमप्यविगणयन्त्यौ बभ्रमतुरामध्याह्नम्। अंबरमध्यमधिगतवति भगवति भास्वति ज्वलनस्फुलिंगनिकरैरिव प्रचण्डैरातपैः परितप्यमाने कानने खरतरातपपरिजिहीर्षया प्रच्छायतलमाश्रितेषु वनसत्वेषु सुदूरं कांतारे कृतधावनतया तीक्ष्णतरातपपरिक्लांततया च स्नापिताभ्यामिव स्वेदजलार्द्रविग्रहाभ्यां पदे पदे प्रस्फुरन्नासारंध्रं चलाचलोदरपार्श्वं च निस्सरन्निश्श्वासाभ्यां पिपासया कासारदेशविवलितकंधराभ्यां सैंधवाभ्यामवतीर्य करगृहीतखलीने कतिचिदिव पदानि गत्वा निबिडातपसंतापासहिष्णुतया तलगतैर्बिसारविसैरुपेतं नलिनीदलोदरनिलीनमरालपोतक्वणितसुभगं तरंगशीकरशीतलकमलकषायगन्धपरिवेषणैकतानमारुतिकिशोराभ्यर्च्यमानाभ्यागतजनं जानुस्थितैणकुलपीयमानतटसलिलं प्लवनावतीर्णप्लवगालोडितकमलवनं संतापहरण-

धुरंधरं सरोवरमवातरताम् ।

अवतीर्य च स्नानपानपरिहृतश्रमौ तुरंगमौ पर्याणविहीनौ च विधाय बध्वा च तेनैव खलीनेन तरुमूलतले प्रकीर्य च पुरोभागे करोत्पाटितघाससंभारं अनासादितरत्नहारतया दूयमानमानसे तद्वार्तामेव व्याहरंत्यौ वीचिमालाशीतले तीरशिलातले कंचित्कालं चिंतातरलितस्वांते समुपाविशताम् ।

तदा सा तापसी निन्दन्तीमात्मनः कर्म निर्मर्यादविषाददूषितात्मजनिं जयंतिकामब्रवीत् । अयि कल्याणि ! मा रोदीः । इयन्तं कालं कृतः खलु कर्तव्यः पुरुषप्रयत्नः । स तु फलेग्रहितां नैव लेभे । तदितो नियतौ नियतं निहितात्मभरा भव । तदुत्तिष्ठ । कृतस्नानविधिः प्रयतस्वांता प्रार्थयास्मत्पुराधिदेवतां दुर्गाम् । यद्युपलभ्येत सा माला तदपहर्तुरेव शिरस्तुभ्यं समुपहारीकरिष्यामीति । सा तु दुर्गा प्रसादसुमुखी प्रार्थितमर्थं निर्वर्तयिष्यतीति । श्रुत्वा तापसीवचनं समुचितमचिरादेवावतारितोष्णीषा सलिलमवगाह्य च निर्वर्तितस्नानविधिः जयंतिका धृतार्द्रांशुकैव विशुद्धाशया बद्धांजलिपुटा दुर्गामेव हृन्मार्गे चारयन्ती तथैव प्रार्थयामास । सापि तापसी सरसि कृतावगाहा हृदयकुहरविनिहितदुर्गा अंब ! भगवति ! जयंतिकामनोरथमापूरयेति सभक्ति कृतांजलिरभ्यर्थयामास ।

तदनु तुरगाधिरोहणसमुचितवेषा जयंतिका पर्याणपरिष्कृतं वाजिनमधिरुह्य हयाधिरूढया तापस्या सह प्रस्थिता मध्येमार्गं नात्युन्नतं सोपानशतपरिमंडितं ददर्श शिलोच्चयम् ।

विलोक्य च ते उभे अप्युपरि दिदृक्षया वाहाभ्यामवतीर्य तदुपत्यकायां नातिदूरे तरुमूले बध्वा च वाजिनौ मंदमधिरुह्य सोपानपरंपरां सुधाधवलितप्राकारपरिगतं नात्युन्नतचतुरश्रशिलापीठप्रतिष्ठापितेन तालतरुतुंगेन समुत्कीर्णबद्धांजलिपुटसुपर्णविग्रहेण शिलास्तंभेन विराजमानपुरोभागं [illegible] किसलयपंक्तिहरित-

रेखांकित-प्रदक्षिणमार्गं दक्षिणपार्श्व-प्ररूढपाटलपादपनिपतितकुसुमपटल-पाटलितैकदेशं तदुपकंठविलसदलिनिकरझंकृतिमुखरितकेसरतरुपरिपतज्जरत्त-रच्छदेनाच्छादिततलमिष्टकचितशिथिलगलितैकदेशतटमंडलेन विशीर्णकोण-विवरसमुद्गतदंतशठाजालकेनानतिगभीरतया परिवृतनिबिडांधकारतया च लोष्टपातोत्पादितशब्दानुमेयसलिलेन सलिलप्रांतशिलाघनलिप्तशैवालनीलेन प्ररूढविविधलतामूलशिथिलितसंधिबन्धेन कूपेनोपशोभमानवामपार्श्वं चंडात-पासहिष्णुतया विवरच्छायाशीतलतलानुभूयमाननिद्रैः पारावतैर्धूसरितेन चिरगलितसुधेन स्रस्तभग्नभुग्नकतिपयमेचककलशेन कैश्चिद्विशीर्णैः कैश्चि-दपगतकरचरणैर्विवर्णैः पुत्रिकागणैः परिवृतेन नात्युन्नतेन गोपुरेण विराज-मानोर्ध्वभागं प्ररूढाश्वत्थवृक्षकशिथिलीकृतस्तोकस्रस्तगोपानसीशिलाफल-कपरंपरं द्वारवितर्दितलाचिरनिपतितनीरसचुक्रपिंडसंसूच्यमानताम्रभाजन-निर्णेजनं संमार्जनीपुंजीकृतावकरनिकरसमुद्धरणव्यग्रद्वारांतर्गतजरद्वृषलं भक्तजनतासमुद्दीपितकर्पूरधूमपटलकालीकृतबलिपीठं लोहार्गलनिकटघटि-तायोमयवलयप्रोतायसपृथुलशृंखलिकामंडलकलितकवाट-युगलेनानल्पायतेन पाषाणप्रतीहारेण मनोहरं पृथुलशंकुलंबितपटहमर्दलकाहलं स्फुटितचर्म-प्रावृतभेरिकाक्रांतैकदेशं एकदेशविनिहितचिरंतनशिथिलवैनतेयवाजिवारण-वायुसुतमरालादिवाहनं साचीकृतजीर्णसितातपत्रपटलाक्रांतकोणदेशमधोमुखं शंकुलंबितधूमकालितचिक्कणचामरयुगलविलसद्भित्तितलमर्धोद्घाटितस्फुटित-प्रांतस्नेहचिक्कणचिरंतनतिरस्करिणीपिहिताभ्यंतरद्वारं तैलसंसर्गहरितारकूट-शृङ्खलिकालंबितचिक्कणदीपभाजनतनुदशाग्रनिश्चललोहितमंदालोकदीपकलि-कालंकृतगर्भगृहं अचिरकृतस्नानतया शिरोग्रस्थापितपलितचूडाशिखरबद्ध-ग्रंथिना बहुलरजनीसोदरदेहद्युतिना वलिरोमनासागलितधूमदलचूर्णकाली-कृतशिखाणांकितस्नेहचिक्कणपटच्चराच्छादितवामभुजशिखरेण देहलग्नमेचक-यज्ञोपवीतेन विगलितकतिपयरदनतयाऽपरिस्फुटस्तोत्रपाठावसरतरलतर-विरलकर्बुरमलपंकावेष्टितरदनराजिदर्शनीयवदनेन मांसलेन पिचण्डिलेन

वामनेन धवलारुणकरवीरकुसुमगुंभनव्यग्रकंपमानांगुलिपाणिना सप्तति-वत्सरदेशीयेनाजानु-विरचित-धूमकलुषितदाडिम-कुसुमसवर्णचोरांबरकच्छेन मलिनतरस्विन्नश्वेतमृत्तिकोर्ध्वपुंड्रेन मंडितमसृणासितललाटफलकेन गर्भ-गृहद्वारदेशनिषण्णेन देवलकेनोपशोभमानं जरद्वृषलकृतपृथुलकुटिलरंगवल्ली-रेखातरंगालंकृतांकणं देवालयमपश्यताम् !

दृष्ट्वा चांतः प्रविश्य किमिदमतर्कितराजागमनमिति सविस्मयं विचिंत्याभ्युद्गतेन चकितचकितेन तेन देवलकेन ससंभ्रमं समुद्घाट्य तिरस्करिणीं संदर्शितं राजताभरणराजितं नीराजितं च जनार्दनं प्रणम्य समर्प्य च दक्षिणां प्रदक्षिणमार्गेण प्रचलंत्यौ देव ! भवादृशैरेव प्रभु-प्रकांडैरवेक्षणीयमिदं जीर्णं मंदिरम् । भगवतो वसनमेकमपि नैव दृढतरम् । किं तु पटच्चरम् । वाहनानि प्रतीकहीनानि । पक्षीशस्य क्षुभितं पक्षयुगम् । प्रभंजनसुतस्य ध्वस्तो हस्तः । वारणस्य चरणं सव्रणम् । हयस्य क्षत-मक्षि । मरालस्य खंडितं तुंडम् । कण्ठीरवस्य कुंठितः कंठः । नैव दीपस्य तैलमपि । निवेदनविहितस्तंडुलोऽपि खंडितः । क्रमेण पतति तत्र तत्र भित्तिः । इति सप्रश्रयं बद्धांजलिपुटं निवेदयता किमपि विवक्षया सरभस-मन्वागच्छन्तं तं देवालयपालकं जरद्वृषलं प्रचालितेन पाणिनैव निवारयता तेनैव देवलकेनानुगम्यमाने सोपानपरंपरामवरुह्य भवतु पश्यामः इति तं देवलकं संप्रेष्य सैंधवाधिरूढे सत्वरं पुरं प्रविश्य जग्मतुस्यौधाभ्यन्तरम् ।

तदनु सा जयंतिका समधिगततापस्यनुमतिः पटुतरान्कतिपय-भटानभिधाय मालालक्षणं पञ्चषेभ्यो दिवसेभ्यः युष्माभिरन्विष्य कथमपि मालापहर्त्रा साकमानेतव्या माला । अथवा यदि क्वापि निपतितोपलब्धा तदा तामेकामेवानयंतु भवंत इति प्राहिणोद्द्विपिनं तदेव यत्र पर्यटितं पूर्वेद्युः । प्रस्थितास्ते तु भटाः कांतारे तत्र तत्र दिनत्रयमन्विष्य माला-मलब्ध्वा च खिन्नमानसाः कांतारसंचारेण चतुर्थेऽहनि क्षुत्पीडासहिष्णवो बुभुक्षया गव्यूतिदूरवर्तिनं घोषमालोक्य तदभिमुखं प्रतस्थिरे । गत्वा च

क्रोशमिव सूर्यातपपरिजिहीर्षया तमालतरुच्छायशीतले शिलातले निषण्णं धृतसांद्रनीलचेलचण्डातकं भुजशिखरकृतासितकंबलं परिगृहीतशरीरमिव मौढ्यं ग्राम्यवृत्तिव्यंजकेन वर्णैकलोभनीयेन वन्यप्रसूनपुंजेन परिष्कृताल्प-चूडमातपपर्यटनासितशरीरतया स्वेदबिंदुसंदोहदंतुरिततया च कुङ्कुम-पटलविच्छुरितमिव तमालकं विविधवर्णतया क्षितितलसमास्तीर्णेन चित्र-कम्बलेनेव तरुशिखरनिपातितपत्रपटलचर्वणैकतानेनाजकेन पीनोध्नीभिः द्रोणदुघाभिः वृषभमंडलपरिमंडिताभिस्सौरभेयीभिश्च परिवृतमासृक्कविवृत-वदनकुहरेण शशिकलानुकारिणीभिः दंष्ट्राभिरतिभयानकेन बहिर्निस्सृतदीर्घ-लम्बमानशश्वन्निस्सर-ज्जलबिंदुदन्तुराग्रारुणजिह्वापल्लवा-वेद्यमानातप-संतापेन दरनिमीलितलोचनेन स्थूलस्थूलं निश्श्वसता मेचकमसृणकायेन निषण्णेन शुनकेन सनाथपार्श्वं रजतवलयालंकृतमणिबन्धं वेणुपाणिं दूरीकृतस्नानतया धूलिधूसरितं पुरुहूतमिवानेकसुरभिसन्तानामोदितं वृषभमिव मनोज्ञककुदं रसातलमिव कंबलपरिष्कृतं वर्षादिवसमिव घनमलिनांबरं वनप्रचारं च नरपतिमिव दंडायत्तीकृतवृषं गोपालं द्वादशहायनदेशीयं वृषलबालकं ददृशुः।

दृष्ट्वा चाहो! सौन्दर्यमस्य निष्फला खलु। कानने चन्द्रिकेव तावदस्मिन्सुन्दरता। सलक्ष्मीकं चक्षुरस्य पुंडरीकडंबरापहारि। हंताजानु-भुजो वृषलबालोऽप्ययं स्वभावगम्भीराकृतिरतसीकुसुमासिततनुकांति-स्स्मारयति नंदकुमारम्। धन्यः खल्वस्य पिता। धिगस्य जननीं कठिनहृदयाम्। या च समाश्लेषमात्रेणापि म्लानतामुपयांतं सुमसुकुमार-शरीरमेनं कालयति धेनुसमवनायातपे। हन्तेति परस्परं व्याहरंतः तमुप-सृत्य सर्वेऽपि तत्करतलविलसन्मुरलीशिखरलंबमानां माणिक्यमालां ददृशुः। दृष्ट्वा च मालां प्रमोदसंभृतहृदयेषु विस्मृतक्षुत्पिपासादिक्लेशेषु भटेष्वेक-स्सरभसं तदुपकंठमासाद्य तामाच्छिद्य च जग्राह। तत्क्षणमेव चकित-चेतसि कंपमानगात्रे हन्तांबेति रुदति तस्मिन्बालके कश्चनानुकंपया समाश्वास्य तं सांत्वोक्तिभिर्ब्रूहि वत्स! क्व वा केनोपायेन कीदृशप्रयत्नेन

कथं वा संपादितेयं माला। किमु केनाप्यानीय दत्ता ते। आहोस्विदरण्यतटे पतिता भवता समुपात्तेत्यपृच्छत्। एवं पृष्टश्च परिदेवनम्लिष्टाक्षरस्स वृषलबालकस्सगद्गदं वल्गन्नित्थमकथयत्।

मया तावन्न कोऽपि कृतो यत्नः। नाप्युपायः। नैव चौर्यलब्धा। किं तु प्रतिदिनमिव कानने पर्यटतो मम श्रवणविवरमाविशत्कोऽपि रयजन्मा रावः। तदा सविस्मयं समुन्नमितकंधरे अंबरांकणदत्तलोचने सति मम पुरतो पललंगृध्नुनानुधावता गृध्रेण प्रधावितो विचित्रगत्या गगने डीयमानः साध्वसपरिक्षुभितो ध्वांक्षस्त्रोटिपुटान्नयपातयदिमां मालाम्। दृष्ट्वा चाहमद्भुतदर्शनां ग्रसनावसरपाटलितां विधुंतुदवदनाद्गलितामिवेंदुकलामरुणकिरणतप्ततयेवारुणकांतिमातपासहिष्णुतया वसुन्धरातलमवतीर्णामिव नक्षत्रमालां मद्दारिद्र्यात्ययसूचनाय पतितामिव गगनादलातपंक्तिं निजत्विषा विपिनं पल्लवितमिवापादयन्तीं तामादाय मुदा मालामिमां मदीयमुरलीशिखरे न्ययूयुजमिति। श्रुत्वा च भटाः पटुतरमस्य वचनं दूयमानमानसाः परस्परमुखावलोकनदर्शितानुतापाः नायं दृश्यते वृषलबालक इव। अपि तु पोषितो भवेत्केनचिद्वृषलेन राजकुमारः। हंतातिपरुषहृदया वयम्। यतो निरपराधिनममुं नयामो राजोपकण्ठम्। प्रभुस्तावत्किं वा करिष्यतीति न जानीमः। कथं करिष्यामो राजदंडभाजनम्। बलवती खलु राजाज्ञा। तत्प्रभुनिर्भरैरस्माभिस्सद्यस्समुत्पाद्यापि परेषामार्तिं निर्वर्तनीयस्स्वामिनियोगः। इति परस्परं व्याहरंतः प्रचालितवालं सुदूरमिव गत्वा भुक्कुर्वंतं शश्वदाघ्रायाघ्रायानुयांतं समुन्नमितेनाग्रचरणेन कंठेन च प्रकटितप्रेमकाष्ठं सुदूरमिव निष्कास्य शुनकं तारतारं विलपन्तं परिच्यवनाय परिस्फुरन्तं बलादादाय बालकं सत्वरं प्रतस्थिरे चित्रपुरम्।

प्रस्थिताश्च सौधद्वारमासाद्य तेष्वेकतमः तं बालकं इतरभटसात्कृत्य सौधद्वार एव करगृहीतमालः प्रविश्य स्वयमभ्यंतरं तापसीसदनमध्यासीना-

मार्तां मालावार्तमिव व्याहरन्तीं तापस्या च मुहुराश्वास्यमानां जयंतिकामुपसृत्य सप्रश्रयं देव ! समुपलब्धा मालेयं गहने इति वितीर्य तां मालां एतत्स्वायत्तीकृतस्समानीतो वृषलबालकः द्वारि तिष्ठति। एतदाकर्ण्य देवः प्रमाणमिति निवेद्य विरराम। निशम्य भटवचनं जयंतिका हर्षेण प्रसादः एव दुर्गायास्तावदयम्; कथमिवान्यधा दुरवगाहे कानने निपातितायाः तावदस्याः प्राप्तिः ? सत्यमभिहितं भवत्या तदिदानीं प्रार्थनानुगुणं देयो बल्यर्थं स वृषलबालकः दुर्गायै इति विचिंत्य भटमकथयत् । सत्वरमेव कल्पितवध्याकल्पं नीत्वा च तं बालं दुर्गागारप्रतीहारांकणं कारय दुर्गोपहारं मातंगनाम्ना मातंगेन निकृत्तोत्तमांगं इति। श्रुत्वा च स भटश्श्रवणपुटकटुतरं नरपतिवचनं हंत! कथमिव द्रक्ष्यामि हननावसरे साध्वसेन दिक्षु विक्षिपन्तमक्षि मुग्धमुखपुंडरीकं तं बालकम् । यदि नरपतिदृष्टिपथमारूढो भवेत्तदा नैवाज्ञापयेदेवम्। इति विचिंत्य च समासाद्य द्वारदेशमनुपालयद्भ्यो निजागमनमेव तेभ्यस्सगद्गदं निगद्य च कठोरमुदन्तं समर्पितमणिमालाय मह्यमिदं वितीर्णं किमु महाराजेन पारितोषिकतयांशुकयुगलमिति मुदा पृच्छन्तं तं बालकमलंकृत्य किंशुकारुणांशुकयुगलेन बध्वा च कंधरायां शोणकरवीरकुसुममालां बलादादाय नितरामनुकंपाकुलैर्भटैर्नीतो बालो दुर्गालयम् ।

नीतश्च नगरीप्रांतद्वारि स्थितं अंतरांतरापाटलमृत्तिकाकर्दमकृतविततपट्टेन सुधाधवलेन कुड्येन परिगतमचिरारूढमार्तंडमंडलप्रांतनिर्गतैः पाटलैः दीर्घतरैः प्रसृमरैः मयूखैः परिकलिताभ्यंतरेण शारदाभ्रमंडलेनोपशोभितमिव गगनतलं सुधाधवलितैर्गुंभितहरितदलनिचितरम्भास्तम्भैः स्तम्भैः परिशोभमानं शिखरघटितोद्दंडकेतुदंडप्रकांडकांडतरलकुटिलपाटलपटकपटेन सुदूरमुन्नमय्य निजभुजदण्डं प्रचालितकरपल्लवेन निजाभ्यन्तरप्रतिवसंत्या दुर्गायाः मस्तकोपरि संचरतां ग्रहनक्षत्रमण्डलानां परिहरदिव गमनं निरंतरमपि तैलाक्ततया कालीकृतचिक्कणाभ्यां पृथुलनिस्तलकुंकुमस्था-

सकभासुरभ्रूभङ्गभीकरललाटपट्टाभ्यां बहिःप्रसारितसिंदूरारुणितकरालदंष्ट्रा-मध्यप्रसृमरजिह्वापल्लवाभ्यां विततवर्तुलकृष्णकनीनिकाभयंकरशोणेक्षणाभ्यां पाटलांशुकपरिष्कृताभ्यां अरुणकरवीरकुसुममालालंकृतकंधराभ्यां मेचकशिलासमुत्कीर्णाभ्यां करधृतकरवाललताभ्यां मूर्तिमतीभ्यामिव क्रुद्धयां नात्युन्नते च भक्तार्पितकुंकुमचूर्णपाटलिते शिलापीठे प्रतिष्ठापिताभ्यां द्वारपालिकाभ्यां समुपजनितसाध्वसं निहतानेकपशुजिह्वापल्लवप्रचुररसालकिसालयतोरणपरिमंडितप्रतीहारनासातलं नात्युन्नतशिलास्तम्भाग्रसमुत्कीर्णदीपभाजनपरिपूरितनिंबतैलप्रज्वालितदीपप्रसृमरकटुगन्धबन्धुरद्वारपालिकापार्श्वदेशमनेकपशुशिरोधिरुधिरधुनीस्नापितया पशूनां प्राणात्ययावसरे बहिरनुगतेन चिररूढमूलजीवितानुरागेणेवात्यरुणया प्राणिप्राणापहरणसन्निहितकृतांताधिष्ठानाय समास्तीर्णरक्तवर्णकुथास्तीर्णयेवानत्यायतया नात्युन्नतया च वध्यशिलावेदिकया भयानकपुरोभागं मकुटतटप्रकटोपलक्ष्यमाणरमणीयमणिगणकिरणजालाक्रांततनुतया बर्हिबर्हस्थगितयेव प्रभाभिरिव स्नापितया कांतिशलाकापंजरमध्यप्रविष्टयेव बहिरुद्गमद्रोषानलज्वालाजालपरीतयेव सृजंत्येव निजशरीराद्विविधवर्णगणानिंद्रचापपरिवेषयेव हरिद्राचूर्णचर्चिततया पिंगलरुचा तपनीयद्रवपुस्तविग्रहयेव कुंकुमपटीरकर्दमचर्चितया संध्यारुणयेव पश्चिमदिशा लोहितकरवीरप्रसूनमालाभिर्विरचितवैकक्षमालया अचिरनिहतदनुजपतिवक्षस्स्थलरुधिरधारारुणितकेसरकलापं नरकेसरिणमिव विडंबयन्त्या दक्षिणपाणिकृतकृपाणया क्रोधोत्थितेन कालोरगेण भयानकं वल्मीकमिव परिहसंत्या नीलशिलाविष्टरोपविष्टया दाडिमीकुसुमसच्छायकौशेयकमनीयकायया सर्वांगीणराजताभरणया दुर्वर्णकरोटिमालापरिष्कृतवक्षस्स्थलया कुंकुमकृतवंशपत्रसदृशतमालपत्रचित्रितललाटया भ्रुकुटितभ्रुवा निस्तलायत-शोणभयानक-नेत्रया अर्ध-चन्द्राकार-रजताभरणवलयितनासाग्रया बहिर्निस्सृतेन रुधिरधारामिवोद्गमता शोणरुचा जिह्वापल्लवेन पिहिताधरबिंबया सृक्कभागनिस्सृतदंष्ट्रया समीकवसुमत्येवानेकजीवापकर्षणावसर-

जनितविरावया केशाकेशिप्रथनप्रवृत्तयेवायतकरवालया दुर्गया विराजमान-गर्भांकणं तस्याश्च वामपार्श्वे नातिदूरे प्रकाशितेन तद्ध्यानमिव कुर्वता निश्चलेन प्रतिबिंबच्छलेन कालीकरकरवालमवलंब्य तद्धारातैक्ष्ण्यमिवाधिक-तरमभ्यस्यता सुहृदेव प्रकटितरागेण गृहीतदशाग्रतया इव स्तंभावलंबिना विपक्षेणेव क्षपितस्नेहेन कोकनदेनेव दिवाकरकरकोरकितेन पाटलवर्णेन च दीपपल्लवेनोल्लसितं परिलिप्ततैलतया प्रसाधनोप्रसाधिततया च मसृणतर-कचकलापमुद्वहता सोमंतलताकलितशिरसा रक्तचन्दनकर्दमचर्चिततिर्य-क्पुंड्रमध्यकृतायतकुंकुमस्थासकपरिष्कृतविशाललाटफलकेन श्मश्रुकलाप-पिहितदुरधिगमाधरोष्ठपुटेन आयतलंबमानकूर्चकलापेनावगुंठितक्रोडेन कल-धौतांगदनिगडिताभ्यां पटोररसविरचितायतरेखावलिभ्यामतिमांसलस्थ-पुटिताभ्यां भुजाभ्यामुपशोभमानेन प्रत्यंगुलिप्रोतरजतांगुलीयकेन कार्पास-कुसुमपीतवसनविरचितकच्छेन रक्तांशुककृतपरिकरेण वामकरनिरंतरप्रचाल्य-मानघंटारवबधिरितश्रवणविवरेण हननायाहमहमिकया भक्तैर्बलात्पुरः संस्थाप्यमानानां पशूनां शिरस्सु तीर्थप्रोक्षणमाचरता दुर्गाया दक्षिणे पार्श्वे निषण्णेनानतिवृद्धेन देवलकेनोपेतं चंडालसमुद्दीपिततृणपूलिकाज्वलन-ज्वालाप्रतापितपटुपटहपटलक्रटुरटितितालानुगततांडवैरसितदेहचर्चितहरिद्रा-चूर्णतया हरितवर्णैः पटीरकर्दमकृतांगुलिपट्टपरंपरादंतुरक्रोडभुजशिखरैः प्रसा-धनोप्रसाधित-तैलमसृणश्मश्रुकूर्चैरुत्तंभित-कुसुममालावेष्टित-धम्मिल्लैर्लंबालकैः पृथुलकशाभिघातव्रणकिणस्थपुटितमांसलभुजचरमांगदेशैः पीतवसनविरचित-नीवीकलापैस्साचीकृततांबूलपिंडोच्छूनकपोलगर्तैः राजतकिंकिणीदंतुरित-तुलाकोटिमुखरितचरणैः दुर्गैकशरणैः प्रांशुभिः पुरुषैरतिभयंकरांकणं शिरसि समारोपितानलकलशैस्सलिलसिक्तांगारसवर्णकायैरेरंडतैलकर्दमितहरिद्राचूर्ण-चर्चितकपोलचुबुकदेशैः शोणकरवीरकुसुममालालंकृतवक्षोजमंडलैः परिधृत-कार्पासकुसुमसवर्णचेलैः कटितटनिबद्धनिंबपलाशकलापैः करयुगलपरिभ्राम्य-माणनिंबपत्रपृथुलगुच्छैः चर्विततांबूलपिंडकालीकृताधरैर्योषिन्निवहैर्नीरंध्रित-

पुरोभागं चिरनिहततया कैश्चित्प्रसारितचरणैः निश्चलं शयानैरचिरनिहततया कैश्चित्परिस्फुरद्भिरुद्धूयमानचरणकांडैश्शोणितधाराबीभत्सैः लुलायोरभ्रच्छागानां कलेबरैः निकृत्तानेकताम्रचूडतनूरुहपटलैश्चासह्यदर्शनीयप्रांकणं बलादाकृष्यानीयमानैर्मुक्तदीनकंठारवैरश्रुधाराकल्माषितकपोलतलैः पदे पदे समुत्सृजत्पुरीषैः पटहध्वानवेपमानगात्रैर्वध्यपशुभिर्विच्छुरितं त्वरिततरताड्यमानपृथुलभेरीभांकारभयंकरं करधृतरुधिरारुणितनिशितधाराकरालकरवालेनाकूर्परं समुत्सारितकच्चरपटच्चरविरचितकवचाभ्यां निहतानेकप्राणिगणतया शोणितशोणपाणितलाभ्यां भुजाभ्यां भयानकेन धृतमेचकचेलचण्डातकेन शशशोणितसच्छायवस्त्राबद्धोष्णीषेण निकृन्तनाय पशूनां समानयनमेवानुपालयता तत इतः पर्यटता च मातंगनाम्ना मातंगेन भयंकराकारेणांतककिंकरेणेवाविरहितपुरोभागं वर्षादिवसगगनांकणमिव कालिकाक्रांतं राजभवनमिव मातंगाधिष्ठितद्वारदेशं काननसरोवरमिव खड्गपीतकीलालं शत्रुत्रस्तधरित्रीशमिव दुर्गैकशरणं वर्षर्तुसरित्पात्रमिव कबंधबहुलं नलमिव काकोलकालितं शंकरमिव करोटिमालालंकृतं दुर्गागारमनीनयत्।

तदनु भटो दूरादेव दुर्गायै प्रणिपात्य तं बालकं स्वयमपि कृतप्रणामः बालकेन समं दुर्गाया गर्भागारद्वारमुपससर्प। स तु बालको ललाटफलकोज्वलतृतीयनेत्रानलज्वालाशंकामुपजनयता सिंदूरतिलकेन पीताजोर्णांतःपूर्णरुधिरोद्गारपीडासहिष्णुतयेव कृतभ्रुकुटिं तत एव वदनकुहरान्निर्गलंत्या रुधिरधारयेव सिंदूरारुणितया बहिः निस्सृतया जिह्वया च भीकरवदनां रजतकवचितनिशितदंष्ट्रास्थगितसृक्कभागां दुर्वर्णनिर्मितानल्पकरोटिकल्पितवक्षस्स्थलाकल्पां तां दुर्गां विलोक्य विवर्णवदनो यमसदनमध्यवर्तिनमात्मानं मन्वानश्चकितचकितः नीरसरसनः स्वयमात्मन्येव निलीन इव गतचैतन्य इवांधतमः प्रविष्ट इव निश्चेष्टो नयनसलिलावेदितनिजप्राणभयो मूक इव तस्थौ।

अथ स भटस्स्वामिन्प्रभोराज्ञा। सद्य एव वध्योऽयं दुर्गागार-

द्वारीति। तत्प्रथमं करोतु भवानस्य शिरस्युदकप्रोक्षणमित्यावेदयद्देवलाय। निशम्य स देवलकोऽपि हन्तापिनाम सत्यम्? किमर्थमेवमभिहितं नरपतिना? किमपराद्धमनेन? कुतो वा नृशंसता नरपतेरीदृशी? एतच्छ्रवणमात्रेण विलीनमिव मे हृदयं दूयतेतराम्। न किमु दया महीशस्य? हन्त! कथं वा निपातयिष्यति कृपारहितः कृपाणधारां कंधरायां सुन्दरस्यास्य स मातंगः? आमितोत्तमांगोऽस्मीति स देवलकः प्रथमं तच्छिरसि नयनाभ्यामुदकं ततश्च पाणिना न्यपातयत्। देवलकवचश्श्रवणसमनंतरमेव वज्राभिहत इव भयविह्वलितांतरंगः परिस्फुटितहृदयः इवेतिकर्तव्यतामूढः शिरसि निपतितमिव गगनं मन्वानः भूविवरं प्रविष्टमिवात्मानं विजानन् किमपराद्धं मया? नापहृतं परद्रव्यम्। न हिंसिताः प्राणिनः। नोक्तान्यनृतानि। नापि चिंतिता मनसापि परपीडा। न कृतः कापुरुषसहवासः। न खलु निंदितास्साधुजनाः। न वञ्चितो लोकः। नाचरितं क्रूरकर्म। न विघ्नितमवदातं कर्म। नापि त्यक्तानि कर्तव्यानि। पालिता एव गावः। दत्तं च दुग्धमर्थिभ्यः। तुष्टा एव वत्साः जननीपयःपानेन। समूढा च पित्रोः आज्ञा शिरसा। अनुवर्तिता ग्राम्यजनाः। न जाने नरपतिदण्डस्येदृशस्य केन वान्येन कारणेन मंदभाग्योऽहं भाजनमभवमिति बहुधा चिंतयतोऽपि मे न किमपि स्फुरति। हन्त! स्मृतमिदानीम्। सत्यं कृतमहापराधोऽहम्। दंड्य एवास्मि। यतोऽहं गुहायां जननीमेकाकिनीं पतिविरहदुःखितामनाथां विहाय बालभावेन हरिणजिघृक्षया कृतघ्न इव क्वापि गतः। तत एव विदितोदंतः नरपतिरकरोदीदृशदंडभाजनं मामिति रुदन्नंबेति दीनरावमाक्रन्दन्वेपमानस्तस्थौ। स भटस्तु दयादलितहृदयः दीनदीनमेनं समवलोक्य स्वयमपि दीनदीनः सगद्गदं वत्स! मंदमायाहि। बलवती खलु राजाज्ञा। को वा तदन्यथा कर्तुं शक्नोति। मा रोदीर्मारणसमयस्सन्निहितः। तदायाहीति तमादाय वध्यशिलोपकंठमानिनाय।

नीत्वा च स भटस्ततइतः पर्यटन्तं मातंगमब्रवीत् । तात ! निकृत्य चास्योत्तमांगं चंडिकेयं कर्तव्या सुहितेति राज्ञा तावदाज्ञा दत्तेति । निशम्य च कठोरं भटेरितं हननवचनं समातंगो हन्त ! कथमयं मया हंतव्यः ? नाहं पारयामि हंतुमेनम् । कथं हन्मि कुमारमेनम् । किमिदं ? एतदवलोकनमात्रेण स्निह्यति ममेदं हृदयम् । आनंदाश्रुधारां पातयितु-मस्मिन्नभिलषति । न तु कृपाणधाराम् । नायं दृश्यते वृषलबालक इव । किं तु कस्यापि महाभागस्य महीभुजः कुमारेण भवितव्यम् । यतोऽस्य विलसंति प्रतीकेषु राजलक्षणानि । हन्त ! धिग्जीवितम् । यदर्थमीदृशे लोकगर्हिते कठोरे कर्मणि निरनुक्रोशस्सञ्जोऽस्मि । हंत ! ईदृशदारुणकर्मणे मह्यं तावत्कीदृशः कल्पितो भवेद्विधिना निरयः । न जाने तात ! मुग्ध-मुखपुण्डरीक ! कस्त्वम् ? कीदृगनुष्ठितो भवता राजापराधः ? वत्स ! न ते माता ? न पिता ? किं करोमि ? परावर्तते पाणिहतकोऽयं कृपाण-पातनात् । निर्दयं निषूदितानेकप्राणिगणस्यापि मे हृदयं दयार्द्रमिदानीम् । किमर्थमेवमिति न जाने ? कथमिवेदानीं प्रभुनियोगमतिक्रम्य कुमाररक्षण-परो भवेयम् ? वत्स ! मद्धृदयनिर्विशेष ! हृदयंगमांगसौष्ठवोऽसि । तात ! राजलक्षणलक्षितोऽसि । चक्रवर्तिचिह्नचिह्नितोऽसि । कथं वा राजाक्षि-गतोऽसि ? का ते माता ? कस्ते पिता ? क्व गतौ तौ ? निवेदय दयया तदखिलमपीति पप्रच्छ ।

तदा स बालको बाष्पदम्यमानकण्ठः तात ! भवतु जनोऽयं यो वा को वा ? किमनेनोदंतेन श्रुतेन ? निर्वर्तय तावद्देवादेशम् । ध्रुवं हि जातस्य मरणमपि । तन्मा चिंतय मातंग ! न हि ततोऽपि कर्कशमिदं कर्म यत्तेन जीवसेनहतकेन तदेकशरणामनन्यपरायणां परित्यक्तात्मसर्वस्वां सहधर्मिणीमनाथामिवैकाकिनीं विहाय दुर्गमे कानने निरनुक्रोशेन वञ्च-नैकतानेन क्वापि गतम् । तादृशावस्थां जननीं त्यक्तवतोऽपि ममाप्युचित-मेवेदं दण्डनफलम् । तदनेनालमनुशोचनेन । निपातय मे कंधरायां

कृपाणधाराम्। मा कुरु कालविलम्बम्। किं बहुनेति वध्यशिलामारुरोह।

आरुह्य चांब! जयंतिके! मदेकप्राणे क्वासि? कथमसि? माम-नवलोक्य कीदृशीमवस्थामापन्नासि? कांतारचंक्रमणश्रमप्यविगणय्य मदन्वेषणपरा मामलब्ध्वा अपिनाम जीवसि? अपिनाम तया तापस्या समाश्वासिता धृतप्राणासि? निरंतरमपि पतिचिंतनसंतप्यमानापि मदव-लोकनमात्रलब्धसौहित्यैव कंदरोदरे स्थिता खलु भवती। मददर्शना-त्कीदृशीमवस्थां प्रतिपन्नासि? मातः यदि जीवसि? कथमापतेत्कर्णपथं ते मम मरणवार्ता? को वा निवेदयेन्ममोदन्तं भवत्यै? नाहमनुशोचामि प्राणभयादपि तु तपस्विनीं भवतीमनुचिंत्य। यतः पतिविरहितापि कांतारे पुत्रवात्सल्यातिरेकान्मन्मलमखिलमपि भोग्यमिव मन्वाना मद्दुःखमात्मीय-मिवानुभवन्ती भवती परिपाल्य मां मदेकजीवितापि मत्सहवसतिसौख्य-विहीनासि। हन्त! अपिनाम स्फुटितहृदया पतिपुत्रादर्शनादसि? अहं तु त्यजामि प्राणानद्य निर्घृणः। मातः! किं सुखं पुत्रलाभेन? आयत्यां सुखं भविष्यतीति भवत्या प्राणा धृताः। नमस्तस्यै तापस्यै। या च पतिविरहितायास्ते तदा मातेव सखीव चाभवद्दुर्गमे कानने। न हि ते माता नापि पिता। न बंधुः। न च भर्ता। नैव तनयः रक्षणे। अपि-नाम द्रक्ष्यामि ते पुनरपि मुखपुण्डरीकम्। दुर्लभं ते प्रियवचनम्। हंत! न जाने सात्वनपत्यतया लब्धं मामात्मपुत्रनिर्विशेषं पोषितवती जरती वृषली कथमिव सहते मद्विरहजं दुःखम्? सर्वथा मंदभाग्योऽहम्। किमनेनानुशोचनेनेति विलपन्नश्रुधाराकल्माषितकपोलफलकः, अङ्ग! मातङ्ग! क्षिप्रं नरपतिनिदेशमशून्यं कुरु। निर्वर्तय राजाज्ञाम्। किं कालविलंबेनेति बद्धांजलिरवनमितोत्तमांगो विरराम।

अवकर्ण्य च कर्णकर्कशं बालकभाषितं स मातङ्गस्तत्क्षणमस्वस्थ-चित्तवृत्तिः परिभ्रामितोत्तमांगः क्वासि? प्रिये! जयंतिके! देहि मे प्रति-वचनमित्युच्चैराक्रन्दन्मूर्च्छितः पपात। तदवलोक्य भयविह्वलस्स बालकः

किमिदमापतितं दैवदौर्ललित्यम् ? मद्वचश्श्रवणमात्रेणायमीदृशीमवस्था-मापन्नः। भवेदयमेव निह्नुतनिजस्वरूपो जीवसेनः ? नान्यधा जयंतिकाभि-धानश्रवणमात्रेणानुभवेदीदृशीमवस्थाम्। श्रूयते हि भारतादिषु दैवदुर्वि-पाकान्नलोऽपि प्रियाविरहितः कांतारे समासाद्य रूपांतरं परसेवानिरतः बभूवेति। हरिश्चन्द्रोऽपि चन्द्राननां विहाय दूरीकृततनयः परिगृहीत-चण्डालभावः परपरिचर्यामाचरति स्मेति चेति विचिंत्य संवीज्य निजारुण-चेलांचलेन समुदजनयच्चैतन्यम्। लब्धसंज्ञस्स मातङ्गो मंदमुन्मील्य चाश्रुकलुषितं लोचनयुगलं हा ! प्रिये ! क्वासीत्युत्थाय दृढतरं परिरभ्य च तं बालकं वत्स ! क्व सा तपस्विनी जयंतिका ? कथं वर्तते ? कीदृशश्च तस्याः दिवसव्यापारः ? क्व वा तव जनिः ? कथं वा ते जननीवियोगः ? का वा सा तापसी ? क्व गुहा ? कथं वात्र भवदागमनम् ? कुतश्च तवेदृशी दारुणा शिक्षा ? बालेन भवता किमपराद्धम् ? कौ च तौ वृषल-दम्पती ? कियद्दूरे च ते निवासग्रामः ? कथमिवाभवो राजभटवशवर्ती ? कथमिव तेषां त्वयि प्रत्यभिज्ञा ? वत्स ! निवेदय दयया मे तदखिल-मपीति सगद्गदमप्राक्षीत्।

पृष्टश्च स बालको हन्त ! किमिदम् ? कथमिदम् ? कीदृगिदम् ? मनसाप्यचिंतितमिदम्। अहो ! दैवघटना ! क्वाहम् ? क्वायम् ? स्यादय-मपि नाम जीवसेनः ? नान्यधा भवेदीदृश्यवस्था जयंतिकानामश्रवण-मात्रेण। कुतो वा तस्य जीवसेनस्य दुस्सहमातंगताप्राप्तिः ? किमर्थं वा तस्य कठोरे प्राणिनिषूदने प्रवृत्तिः ? भवतु नामैतदुदंतजिज्ञासया ताव-न्निवेदयामि विस्तरतो मदुदंतमिति विचिंत्य वक्तुमारभत। आसीत्षडब्द-देश्यं मां परिपालयन्ती पतिविरहिता क्षितिपतिदुहिता तापसीसहिता कांतारे गुहायां जयंतिका नाम। सा तु सततमपि नयनकुवलयोद्गलदश्रु-स्रोतोभिः प्रक्षालयन्ती कपोलफलकं वक्षोजमंडलं च जीवितनिर्विशेष ! जीवसेन ! आर्यपुत्र ! विपुलोरस्क ! तिरस्कृतस्मरसौंदर्य ! मम तावद-

बलाया रक्षणेऽपि न दक्षोऽसि ? सौंदर्यमात्रेण वञ्चिता अभवम् । ते तु न विमृष्टागुणाः । न चिंतितस्स्वभावः । न परीक्षितं हृदयम् । न श्रुता धीः । नापि कृतः परिचयः । मम तावद्धिगसमीक्ष्यकारित्वम् । धिक्ते हृदयपारुष्यम् । प्रलोभनशीलोऽसि । धर्मकंचुकावच्छन्नस्य तवेयमुचितै-वानुचरवञ्चनैकतानता । ननु निरनुक्रोशपरिजनपरिवृतां प्रासादे सादरं परिवर्धितां अनरालप्रकृतिं नीत्वा च मामेकाकिनीं घोरतरं कांतारं प्रतार-णैकपरतया विहाय च गतोऽसि । किमिदमुचितं ते निर्घृण ! इति विलपन्ती कृच्छ्राद्दीर्घतरं कालमत्यवाहयत् ।

एवं प्रलपन्तीं तां बहुधा सविनयमपृच्छम् । अंब ! निरंतरमपि कुतो रोदिषि ? कः पुनस्स जीवसेनः ? यमनवरतमपि भगवन्तमिव ध्यायसि ? यमनुलपसि । यद्विषयं व्याहरसि । यमनुचिंत्य रोदिषि । यद्गुणान्कथयसि । किमर्थं तेन विसृष्टा काननने ? केयं तापसी ? या च भवत्समसुखदुःखभागिनी । कुतो वा तवेदृशी दशा ? कुतश्च गुहायामस्यां निवससि ? क्व ते माता ? किमु न ते पिता ? किमु दुःखनिदानम् ? तदखिलमपि निवेदय दययेति । पृष्टा च सा वात्सल्यातिरेकात्सदंतपीडं परिरभ्य माममंदानंदद्विगुणितबाष्पसलिला विस्मृतपतिविरहक्लेशा बाष्प-क्लिन्ने निजकपोलफलके निधाय मदीयं कपोलतलं करकमलतलेन परा-मृशन्ती मदुत्तमांगं समुपवेश्य च निजांकतले वत्स ! किमर्थं पृच्छसि दुःखप्रायं मदुदन्तम् ? मंदभागधेया खलु । किमनेत श्रुतेन ? भवानपि भवति दुःखभाजनम् । तथापि कथयामि । यतश्च प्रेमातिशयेन कुतुकी पृच्छसि । शृणु तावदिति वक्तुमारभत । वत्स ! प्रायो जगति रूपैक-सक्तचित्ता हि योषितः । तादृशपुरुषविशेषलिप्सया त्यजन्ति निजबन्धुता-मिव लज्जामपि । क्रमच्यवनशीलं सौंदर्यं न परिशीलयन्ति । वत्स ! जिह्रेमि मदुदन्तं वक्तुम् । दुरन्तं शृणु तावत् । अहं तारुण्यलालितशरीरा निजावरोधभित्तितलविलिखितराजकुमारमंडलमध्यवर्तिनं सुन्दरतरं कुमार-

मपश्यम्। विलोक्य च तत्स्मरणपरायणा सख्या चिंतयन्ती दिष्ट्या मद्वरोधमागतेन गन्धर्वपतिप्रसादलब्धांतर्धानविद्याकौशलेन जीवसेनाभिधेन तेन समं गुरुजनमप्यतिसन्धाय प्रस्थिता सुरंगसरण्या महारण्यमगमम्। तदा प्रौढप्रावृट्तया निरंतरजलधरनिकरकरंबिते सुरसरणिचत्वरे गंतुमक्षमतयेवास्तमुपगतवति भगवति गभस्तिमालिनि जीवसेनस्सौदामनीकशाताडितः इव शतघ्नीध्वानसन्निभघोरतरघनतरघनगर्जिततर्जित इव वर्षतारतरधारापञ्जरनिगडित इव च पदमेकमपि गंतुमनीशः साध्वसविह्वलां मामादाय सौदामनीद्युतिसाह्यगोचरीभूतां गुहां प्रविश्य तत्रैव मया सह निद्रासुखमनुबभूव।

तदनु मरीचिमालिन्युदयशिखरमधिगतवतीति निगदन्तं बालकमसकृत्परामृशन्पाणिना स मातङ्गस्सगद्गदं वत्स! इतःपरं साधु निवेदय कथमनुभूतस्तया क्लेशः? कथमेकाकिनी हरिणेक्षणा कांतारे तारतारं विलपन्ती वल्लभाभासं तं जीवसेनहतकं मृगयति स्म निर्जने गहने? कथं वा तापसीसमायोगः? तात! तत्सकलमपि निवेदयेति बाष्पधारासारधौताधरपुटस्सदैन्यमपृच्छत्। पृष्टश्च स बालकस्सबाष्पं सगद्गदं च तात! कथयामि, पापोऽहं कथयामि। सावधानं शृणु तावत्। प्रभाते अहमुत्थायानवलोक्य च वल्लभं भयकंपितहृदया बहिरागत्य विपिनमभितो दत्तदृष्टिरुच्चैर्विलपन्ती दुर्गमे गहने तदन्वेषणपरा निराहारा खरकिरणकिरणसंतापिता यूथभ्रष्टा कुरंगीव आमध्याह्नमभ्रमम्। स मातङ्गस्तदवकर्ण्योन्मत्त इव हा! प्रिये! मदेकजीविते! निर्निमित्तं विधिवशान्निर्घृणेन मया पापीयसा परित्यक्तापि मामवलंबसे! हन्त! ते पातिव्रत्यम्। क्वासि? हा! जयंतिके! देहि मे प्रतिवचनम्। क्वासीत्युच्चैराक्रन्दन्वत्स! ततस्ततः इत्यपृच्छत्। पुनरपि स बालकः वक्तुमारभत।

एवमेव पर्यटन्ती रमणीयतरमदृष्टपूर्वं तरुषंडानातपं मंदमारुतपरिहियमाणश्रमं तपोवनमेकमपश्यम्। वत्स! इदमेव तत्तपोवनम्।

प्रविश्य चेदमचिरकृतावगाहनस्नानपरिपूतां तापसीमेनां शरणमगमम्। तदनु तया दयया समाश्वासिता निरन्तरदुःखबहुला निवसाम्यस्यामेव गुहायाम्। अत्रैव दशमे मासे भवानजायत। वत्स! श्रुतः खलु ममोदंतः? इत्यकथयत्। एवं स्थिते कदाचित्पञ्चवत्सरदेश्योऽहं क्रीडन्गुहायाः बहिः बालभावेन कानने धावन्तं हरिणपोतं जिघृक्षयानुधावन्सुदूरं तमलब्ध्वा च पुनरपि तामेव गुहां जिगमिषुर्गहनमभितो दत्तदृष्टिरपरिचिततया बालतया चाविदितवर्त्मा रुदन्नुच्चैरसकृदंबेति जननीं कूजन्नितिकर्तव्यता-मूढो भिया परितः पश्यंस्तत्रैवातिष्ठम्। तदानीं मदीयपरिदेवनारवं निशम्यानतिदूरात्कोऽपि जरद्गोपालो विधिचोदित इव वृद्धभावकंपि-तोत्तमांगो लगुडग्रहणद्विगुणकंपमानपाणिः स्फुटितोपानच्चरणमंदसञ्चारः कच्चरपटच्चरकवचदृश्यादृश्यवक्षस्स्थलास्थिपञ्जरः कुट्टनपिंडीकृततांबूलरस-रञ्जितपलितश्मश्रुप्रांतः निरंतरातपपर्यटनकालीकृतमुखमंडलः रजतवलय-कालंकृतलंबमानश्रवणजाहः भुजशिखरसमारोपितडोलायमानकालकंबलः शोणचेलनिबद्धस्वपुटितोष्णीषः शश्वत्तांबूलरसमुद्वमन्नागवल्लीदलपूगफल-सुधाकरंडसंभृतया कंठलंबितया चिक्कणासितया भस्त्रिकया पिहितवलि-विलुलितोदरदेशः प्रतिपदं करगृहीतवेणुदंडाहितात्मभारः धूलिधूसरितेन पटच्चरेण कृतजानुपरिधानः परिकरपाटलपट्टिकांतःप्रवेशितलवित्रेण कीकस-प्रायेण पृष्ठदेशेन दर्शनीयदर्शनः मन्दं मन्दं मदुपकण्ठमाजगाम। आगत्य च सांत्वयन्मां कंपमानेन पाणिना समवलंब्य मद्बाहुं निजापत्यनिर्विशेषं पश्यन्घासाच्छादितावनम्रपटलकमपरिष्कृतस्थाणुस्तंभचतुष्टयविशिष्टबहि-र्वितर्दिकं वितर्दिकातलसुप्तरोमंथसक्तच्छागं पर्यटत्कुक्कुटकुलाक्रांतं गोमय-परिलिप्तकुक्कुटविष्ठकलुषितक्षितितलं धान्यभस्त्रिकाक्रांतकोणदेशं रज्जु-खट्वाक्रांतस्तंभप्रांतं क्षितितलप्रत्युप्तशिलोलूखलप्रांतस्थापितदीर्घतरमुसलं भित्तितलघटितशंकुप्रोतशूर्पचालिनीमंडलं शूर्पवितुषीक्रियमाणतंडुलतया तुष-राशिधूसरितकुड्यमूलं धूमकलुषितवस्तुसंभारं एकदेशविनिहिततृणपूलिकं

निजोदवसितमासाद्यानपत्यतादुःखितायै वृद्धायै प्रायच्छन्निजगृहिण्यै । सा तु जरती शूद्री निरतिशयानंदद्विगुणितशिरःकंपा मामादायांकतले समुपवेश्य शिरस्याघ्राय कंपमानेन पाणिना शिरः परामृशन्ती वत्स ! कथमेकाकी कांतारे स्थितवानसि ? का ते माता ? कस्ते पिता ? कुतो वा बालोऽप्येकाकी निराश्रयस्तावदनाथ इव विपिनगतोऽसि ? इति पृच्छन्ती क्षुधितोऽसि । पिब तावद्दुग्धमिति पाययन्ती क्षीरं प्रीत्यतिशयेन जननीव मां पालयति स्म। अहं तावन्निषण्णो बहिर्वितर्दिकायां प्रभात एव पर्युषितान्नाशनसुहितान्सीरभुजशिखरान्युगस्कंधाननडुप्रेरणपरान्पांसुलचरणान्वृषलान् शिरसि कटितटे च विनिहितकूपोदकसंभृतमृण्मयकलशाः निम्नोन्नतसरणिसञ्चरणशीलाः मुग्धाश्शूद्रीश्च काश्चिद्दोहनकर्मणि निरताः काश्चिदवकरपिटकमस्तकाः काश्चिद्दधिमथनसक्ताः काश्चित्संमार्जनीमार्जनपराः काश्चित्प्रचाराय मुच्यमानसुरभिच्छागोरभ्रगणान् समादिशंत्यो योषितश्च ग्राम्योचितक्रीडैकतानान्बालकांश्च पश्यन्कालमत्यवाहयम् ।

एवं व्यतीते च वत्सरचतुष्टये वृद्धभावाद्दौर्बल्याश्च संचारासमर्थस्सः तु वृषलः पितृनिर्विशेषः प्राहिणोन्मां पशूनामवनाय निकटशाद्वलं काननम् । अहमपि वृषलबालकैस्सह क्रीडैकतानः चारयन्पशूनां कुलं कालमत्यवाहयम् । एवं स्थिते कदाचिदरण्ये पशूंश्चारयतो मम पुरतः पपातांतरिक्षात्काचिन्माणिक्यमाला । सविस्मयं तामवलोक्य मोदादादाय मदीयवेणुशिखरमायोजयम् । तदनु कतिपयेषु मासेषु व्यतीतेषु कदाचित्प्रतिदिनमिव विपिने ममोपकंठमेते भटाः समुपेत्य चोरोऽयमिति रत्नमालया सह क्षितिपतिसौधद्वारमनीनयन् । अथैतेष्वेकतमो रत्नमालापाणिः प्रविश्य चाभ्यंतरं समर्प्य च मालां राज्ञे लब्धराजादेशः पुनरप्यासाद्य सौधद्वारं बाष्पवारिपूरितेक्षणः मामादाय भटैरितैरैः परिवृतः प्रापयद्दुर्गागारमिदमित्यकथयत् । श्रुत्वा च स मातङ्गः कर्णदारणं दारुणं दुर्गालयागमनकारणं विमुञ्चन्नश्रुसलिलधारां सगद्गदं वत्स ! जन्मान्तरे भवता तावत्क्रियद्विरचितं

तपः लब्धुमीदृशं पितरम्। तात! मयापि पापीयसा जननांतरे कस्य वा निषूदितः पुत्रः। तदिदानीमीदृशे दारुणे कर्मणि नियुक्तोऽस्मि राज्ञा। धिक्पापिनं मां नीचमिति तं बालकमालिंग्य नृशंस! जीवसेनहतक! न केवलं वेषेण चण्डालोऽसि? कृत्यतोऽपीति बहुधा विलपन्मूर्च्छितः पपात।

तदा तस्मिन्बालके दुःखभरगद्गदिकास्फुटाक्षरे हा! तात! किमिदमुपनतम्। धिक्कठोरहृदयां नियतिम्। यदीदृशावस्थं तं पश्यन्ती तिष्ठति। हा! तात! समुत्तिष्ठेति चेलांचलेन वीजयति मन्दं लब्धसंज्ञो मातङ्गः हा! वत्स! कथमिव निपातयामि कृपाणधारां सुकुमारकुसुममालार्हायां तव कंधरायां कठिनोऽहमिति विलपन्नुत्थाय निजपाणिनोन्नमय्य बालकचुबुकं वत्स! दूरीकृतमंबाया मुखांबुजं पुनरपि नैवावलोकितं भवता। यदि जीविता भवेत्तव माता भवन्निबर्हणमवकर्ण्य सत्यं पातयिष्यति ज्वलनज्वालायां निजतनुम्। झडिति स्फुटितहृदया वा भविष्यति। वत्स! निकृत्य पातितं रुधिरबंधुरायां वसुंधरायां परिलुठन्तं कठिनहृदयः कथमिव द्रक्ष्यामि भवन्तं नयनहतकेनानेनेत्याघ्राय तदुत्तमांगं परामृशन्पाणिना समाश्लिष्य च मुग्धमुखपुंडरीकतललंबमानामुत्सारयन्कुंतलपंक्तिं बाष्पसलिलकलुषिताभ्यां निष्पंदपक्ष्मपालिभ्यां नयनाभ्यामवलोकयतो बालकस्य मुग्धमुग्धं दुःखदैन्यदंतुरितं मुखमुदस्य दम्यमानकण्ठो मुक्तकण्ठो हा! कथमिव हन्मि? हा! वत्स! इति मूर्छितः पपात। तादृशावस्थं पितरमवलोक्य स बालकस्समुद्विग्नहृदयः तात! तात! इत्युच्चैराक्रन्दन्, अंब! क्वासि? पतितनयान्वेषणपरा कुत्र परिभ्रमसि? हा! नियते! किमधुनापि प्रेरिता नासि करुणया? द्रवति हि शिलापि। मातः न मां पश्यसीत्युच्चैः रुरोद।

तदनु स मातङ्गो भुवि निपतितं पाणिना कृपाणमादाय सनिश्श्वासमरे! कृपाण! नाहं कृपणः। साधु कुरु पारणम्। पिब सविभ्रमं रुधिरधारां सुतशिरोधिजाम्। साधु प्रकाशय निस्त्रिंशताम्। अरे! करहतक!

जीवसेनपाणिरसि। कुतो वा ते दया? तन्निपातय कृपारहितः कृपाणमस्मिन्वत्से। हा! वत्स! क्वासि? वाष्पपिहितमिदं नयनयुगलम्। न किमपि गृह्णाति। तद्देहि मे प्रतिवचनम्। इति दुःखभरकंपमानकरतलच्युतमपि करवालमजानन्नेव रुधिरबन्धुरे वसुन्धरातले निपत्य निपत्य शिथिलितकचकलापः तारतारं रुदन्नंग! घातुकोऽहं ओषधिप्रवालकुसुमसंभृततीर्थोदकाभिषेकसमुचितमधुना शोणितशोणे क्षितितले कृपाणेन पातयामि भवदुत्तमांगम्। विविधमुक्ताहारादिपरिष्करणोचितायां ते कंधरायां पाणिहतकोऽयं पातयति कृपाणधाराम्। अवरोधे रमणीगणपरिरंभणसमुचितायाः मृदुलतल्पयोग्यायाः तव तनोः तनोम्यद्य निर्दयः कीलालकलुषितं क्षितितलं शयनमिदम्। हा! धिक्पराधीनताम्। यदि त्यजेयं मदीयान्प्राणांस्तदा भविष्यामि भर्तुराज्ञोल्लंघनदोषदूषितः। किमद्य करोमि? हा! नियते! कृपया मामप्युररीकुरु नराधममेनमिति बहुधा व्यलपत्। इत्थं विलपन्तं पितरमवलोक्य स बालको दुःखभरदम्यमानकण्ठः तात! मा रोदीः। एवं भवितव्यतां को वा निवारयति? तदलं परिदेवनेन। किमर्थं सुन्दरीं तां एकाकिनीं कानने परित्यज्य निरनुक्रोशश्चण्डालतामीदृशीं लोकगर्हणीयां परसेवां च प्राप्तवान्भवान्? कथमिदं चित्रपुरं समागतः? भवदनुयायिनीं सहधर्मचारिणीं स्वयमेव विहाय किमर्थमेवं शोचसि? निवेदय मे दयया सकलमपीति सविनयं प्रार्थयामास।

स मातंगस्तु साक्षररिंखणं सगद्गदं च साश्रुधारासारं सदैन्यं सावहेलनं च मास्तु वत्स! मास्तु। किं श्रुतेन तेन गर्हितेन? मातंगभावमापन्नस्य पापीयसो दैवदूरीकृतस्य लोकगर्हितस्य परित्यक्तदारस्य दारुणकर्मणः कथयितुमपि ममोदन्तं जिह्वा परावर्तते। कथमावेदयामि? श्रुतमात्रेण स्फुटितहृदयो भविष्यसि। वक्ता तावदहं तु प्राणिमि। यतश्च वज्रसारकठोरहृदयः। वत्स! मज्जीवितनिर्विशेष! यदि कुतुकी श्रोतुं तदश्राव्यमपि श्रावयामि। धीरो भव। निवेदयामि वेदनाबहुलं ममोदंत-

मिति वक्तुमारभत ! वत्स ! न बुद्धिपूर्वकं कृतमिदम् । कापि दैवचेष्टा स्यात् । तस्यामेव गुहायां तया सह जयंतिकया निशि गाढनिद्राविद्राणहृदयः विस्मृतशरीरः तल्पायमानशिलातलः श्रमशिथिलितप्रतीकः परमात्मनि लीन इव निद्रासुखमन्वभवम् ।

तदनु दूरीकृतनिबिडांधकारे दिवाकरे पूर्वपर्वतमौलिमलंकुर्वति समुड्डीयमानविविधपतगपूगनीरंध्रिते गगनाभोगे बालातपपाटलितेषु समुन्नततरुशिखरेषु समुदग्रमहीध्रतलनिपतन्निर्झरझरीरवमुखरिते कांतारे निबिडतरप्ररूढकेतकोगहनकुहरलीनमयूरवारकेकारावतारप्रतिध्वानपूरितेषु कंदरोदरेषु मंदमुन्मोलितलोचनोऽहं वर्षादिवसतया पत्रपुटक्षरत्सलिलपृषन्निकरसिक्ते शाद्वलप्राये कस्मिंश्चित्तरुमूलतले शयानं नग्नमात्मानमपश्यम् । दृष्ट्वा च सविस्मयं विहस्तः किन्नु खल्विदम् ? क्वाहम् ? कोऽहम् ? कुत इदम् ? केनानीतोऽस्मि ? क्व सा जयंतिका ? क्व सा गुहा ? कथमत्रागतोऽस्मि ? निद्रितोऽहम् । क्व गतं वासः ? हन्त ! दिगम्बरोऽस्मि । किमर्थं ममेदृशी दुरवस्थेति सरभसं समुत्थाय लज्जया विपिनमभितो दत्तदृष्टिरनतिदूरे विभावसुभिया प्रधावंतमिव तमोनिकरमनूपतलसत्वरविन्यस्यमानचरणतया समुच्चलज्जंबालकलुषितांबु-द्विगुणितनोलिमानं तस्करनिकरमद्राक्षम् । दृष्ट्वा च मनस्येवमचिंतयम् । निद्रापरवशतयाहमेतैरिहानीतो भवेयम् । मदीयमेतैरेवापहृतं स्यात्सपरिष्कारमंशुकमपि । अपिनाम वर्तेत तस्मिंस्तस्करस्तोमे जयंतिका भिया वेष्टमाना । हन्त ! नैव दृश्यते निर्वर्णितापि सा । कथमन्विष्यामि तामीदृशावस्थः । सा तु मामनवलोक्य भृगुतटान्निपतिता भवेदथवा मल्लिप्सया कठोरे कांतारे मामाह्वयन्ती परिभ्रमेदनाथेव । कुत्र वा सा गुहा ? यत्राहं निद्रासुखमन्वभवम् । गुहायास्तावत्कियद्दूरमानीतोऽस्मि । न जाने दुरवगाहे गहने को वा मार्गः ? कथं तां गुहां प्राप्नुयाम् ? कं पृच्छामि ? को वावेदयति ? सा पुनः कथमिव कालीकृतदेहं मां प्रत्यभिजानाति जीवसेन इति ? हा ! दैवहतक ! किमिद-

मेवं दूरीकृतपितृकां मदेकशरणां तां जयंतिकां दयनीयदशां विधाय मोदसे किमु ? धिक्कठोरमानसं मां इति उन्मत्त इवाक्रन्दन्लतापिनद्धभूर्जपत्रपटल-विरचितपरिधानो दीनदीनः कांतारे तावदनुपलब्धजनपदवर्त्मा दूरीभूत-गांभीर्यः कदर्य इव सुदूरमभ्रमम्।

एवं वनवर्त्मना संचरमाणः शीतलसलिलशीकरवहगंधवहसमुपजनि-तरोमजालकीलित इव चलितुमप्यनीशः तत्र तत्र क्वाप्यन्विष्यन्विशंकटाट-वीतटे वैश्वानरं असकृद्दिशमभितः पश्यन्ननतिदूरे पुनरपि मां पीडयितुं नियतिप्रेरितकादंबिनीसंदोहसंदेहमापादयन्तं दुर्दिनतया निस्तेजस्कं मार्तंड-मंडलमंडशंकया गिलितुं पातालतलादुद्गच्छन्तं कालोरगमिव दंडाकारेण नभसि प्रसृमरं जलभरितवलाहककुलमपि कालिम्ना समाच्छादयन्तं दिवापि तमिस्राभ्रांतिमुपजनयन्तं तमालतरुवाटेषु द्विगुणयन्तमंधकारं धूमनिकरम-पश्यम्। दृष्ट्वा च सानन्दं भवेदत्र जनतावसथानीति विचिंतयन्कथमपि गत्वा तदन्तिकं भिक्षामटन्वा परपरिचर्यामाचरन्वा भृत्यभावमापन्नो वा दिगम्बरतापरिहरणाय किमपि याचिष्ये चेलमेकमिति मनसि कृत्वा तदुप-कण्ठं प्रति प्रस्थितः,

क्वचिदचिरचितातलविनिहितहुतवहतया पच्यमानवसाबहुलशव-शरीरचीत्कारदंतुरितं क्वचिद्दहनविदार्यमाणकुणपकीकसफीत्कारदूरीकृतफेर-वारावमुखरितं क्वचिदुपरतं वल्लभं चितामारोपयितुमुद्यतानर्गलीभूय पुरुषा-न्मामेति निरुध्य तारतारं हा! नाथ! विहाय मां निरनुक्रोशो गतोऽसि। मामप्युपनयेति शवोपरि निपत्य रुदतीनां तदपदानमेव व्याहरंतीनां शिथिलितधम्मिल्लानां वक्षोजतटनिपतनत्रुटितैर्जलबिंदुभिरुरस्ताडनत्रुटितैः मुक्ताहारक्षोदशंकामुपजनयद्भिर्दंतुरितदुकूलानां ललनानां परिदेवनाराव-मुखरितदिगंतरं क्वचित्पत्रपुटनिक्षिप्ततंडुलापहरणावसरमनुपालयद्भिः पुरो-हितभिया सुदूरे सकटुरवं निषण्णैर्विवल्यमानकंधरैर्यमभटकुटुंबैरिव वायसविसरैः कालीकृतैकदेशं क्वचिदुदुम्बरपत्रदर्भपटलविच्छुरितक्षितितलं

क्वचित्क्रियमाणचितं क्वचित्परिजनानीयमानेंधनबन्धुरशकटं क्वचिन्मातृकृते कार्यमाणपुत्रशिरोमुंडनं क्वचिद्विप्राय समंत्रघोषं दीयमानतिलसंभृतकांस्य-भाजनं क्वचित्त्रिकूटीकृतशिलाघनाधिश्रयणीसमारोपितमृद्भाजनपच्यमानतंडु-लमचिरकृतस्नानतया परिधृतार्द्रचेलतया च क्वचिच्छीतलवातकंप्यमाना-धरकरपुटैः पुत्रैः क्रियमाणपितृक्रियं क्वचित्क्रियमाणास्थिसंचयनं क्वचित्प्र-दत्तप्रभूतबलिसंग्रहणलंपटकाकोलगृध्रनीरंध्रितापर्णमहीरुह-विटपपटलं क्वचि-दानीयमानशववाहनं कुत्रचिच्चितानलधूमप्रसृमरवसागन्धं कुत्रचित्सिम-सिमायमानचितानलं कुत्रचित्प्रज्वलच्चितानलज्वालाशिखरपरिस्फुरत्स्फुलिंग-संघचटचटात्कारवाचालितं कुत्रचित्सितभसितधवलितं कुत्रचित्स्फुटित-मृण्मयभाजनं श्मशानवाटमपश्यम् ।

दृष्ट्वा चाहो दुःखमयता जगतः । पितृवनमिदं पिशुनयति जीवितस्य जलबुद्बुदकल्पताम् । दूरीकरोत्यभिमानं मानवस्य । प्रकाशयति कालस्य निष्करुणताम् । अंकुरयति रागिणां हृदयालवाले वैराग्यम् । उपजनयत्युद्योगिनामपि निर्वेदम् । शंसत्यसारतां संसारस्य । समुन्मेषयति नास्तिकस्यापि मानसे हरिचरणस्मरणम् । प्रकटीकरोति भगवतो माया-वैचित्र्यम् । दर्शयति समवर्तिनो निर्दाक्षिण्यम् । कुण्ठयति जनताया-मुत्साहम् । उत्सारयति शुभोदर्कभावनाम् । कुण्ठयति समुत्कण्ठाम् । वर्धयत्यस्थिरतामनीषाम् । उद्वेजयति परस्परप्रेमविलासम् । संक्रामयति बन्धुजनविश्लेषक्लेशम् । विस्मारयति पुनर्घटनाधिषणाम् । समद्बोधयति नश्वरतां शरीरस्य । समुपदिशति हेयतां विषयाणाम् । इति बहुधा विचिंतयंस्तत्रैव ततः इतः पर्यटन्नवनितलनिपतितं धूममलिनं समीरजव-चालिततया समीपे परिलुठन्तं खंडपटमेकमपश्यम् । दृष्ट्वा च दुर्विधिना प्रेरितमवश्यमनुभोक्तव्यतालेखपटमिवाविगणय्य च कुणपसंपर्कापवित्रताम-विचार्य चानादेयतां दुर्गतो वित्तमिवादाय परिधाय च ततः क्रोशमिव गत्वा स्पृहणीयसौन्दर्यं मर्यादातीतसौभाग्यं चित्रपुरमिदमवालोकयम् ।

तदनु जीवनकृते जिगमिषुः पुराभ्यन्तरं प्रियाविरहदहनक्वाथ्यमान-हृदयोऽपि निरनुक्रोश इवागच्छन्गोपुरपार्श्ववर्तिनममंदानंदभरितो व्यलोकयममुं दुर्गालयम्। हन्त! मे निगीर्णमिव क्षुधा क्वापि लीनं गांभीर्यम्। दग्धेव शोकानलेन क्वाप्यंतर्हिता वदनकांतिः। अनुगतं रूपमपि दुर्दशाभिभूतमिव क्वापि गतम्। अहो! विधिविलसितम्। अहं तावत्क्षुत्पीडासहिष्णुतया ध्वांक्ष इव निहतक्षितितलपतितपशुपिशितच्छेदमन्विष्यन्नौदरिक इव दुर्गायै भक्तानीतं तंडुलपिष्टपिंडं याचमानः दूरीभूतमानः कथंकथमपि दैन्येन प्रशमयन्बुभुक्षां क्षामांगकोऽनधिगतकार्यांतरतया विरूपशरीरतया दारिद्र्यानुगुणवेषतया निर्विण्णहृदयतयोन्मत्तानुरूपस्थिततया च विस्मृत्य पुराभ्यन्तरप्रवेशाभिलाषमनवरतमप्येतदालयपार्श्ववर्तिनि शिलापीठे निषण्णो दुःखेनैकाकी चिंतयन्नात्मनश्चक्रवर्तित्वमधीनानंतसामंतनरपतिकृतानर्घोपायनरत्नसमर्पणं मखप्रियप्रोत्साहनं चण्डदंष्ट्रयातुधाननिबर्हणं गन्धर्वपतिमुखावकर्णितात्मापदानं जयंतिकाप्राप्तिमिदानींतनीं स्थितिं च निरंतरनिपतदश्रुधारास्नापितशरीरः रात्रंदिवमपि निर्निद्रः दूरीकृतस्नानः कथंकथमप्यत्यवाहयं दुःखमयानि कतिचिद्दिनानि।

अथ कश्चन लब्धाधिकारः पुरुषः परुषतरां मद्दशामवलोक्य विधिचोदिततया वा एवं भवितव्यतया वानुकंपितस्वांतो रिरक्षया न्ययूयुजदेनं दीनं मां सज्जनगर्हिते दुरितानामाकरे कठोरतरे तावदस्मिन्कर्मणि। तत्रत्यैरहं मातंगनाम्ना समाहूतः पुरहूतपदमिदमेव मन्वानः नियतिनियोगस्यानतिक्रमणीयतया कठोरमपि गर्हितमपि अकृत्यमपि समुद्वेजितमपि दुरितावहमपि शास्त्रनिषिद्धमपि नृशंसैकयोग्यमपीदं कर्म समाचरन् "जीवन्भद्राणि पश्यति" इति समनुचिंत्यापरित्यक्तप्राणः शुभोदर्कं तर्कयन्नंतर्निरुद्धशोकावेगः वसामि। वत्स! वसाबहुले क्षितितले मम तावद्धृतप्राणस्येदमेव सुदिनं हि! यच्चिरादतर्कितोपनतं पुत्रमुग्धमुखपुंडरीकदर्शनं इत्यकथयत्। एवमात्मोदंतमभिधाय वत्स! किमद्य करोमि? मम

पाणिहतकः परावर्तते भवन्निषूदनात् ! तात ! यदि समवलोकितो भवेन्नरपतिना तदा नैव स्यादीदृशी दशा ते। वंचितोऽसि दैवेन। कठोर-हृदयस्य ममेदं हृदयं विदार्य प्राणा अपि नैव यांति। अंब ! दुर्गे ! रक्ष माम्। मातः दुर्गे ! निरपराधिनि निर्गतिके वत्सेऽस्मिन्निरनुक्रोशासि। पाहि कृपयेति विललाप। तदा परस्परमेतयोः परिदेवनमवकर्ण्य तत्रत्येषु मूकेष्विव दुःखभरदम्यमानकण्ठेषु बाष्पदिग्धलोचनेषु परस्परमुखावलोकनप्रकटित-दैन्येषु स्तम्भीभूय स्थितेषु स भटो मंदमुपसृत्य शोकगद्गदकण्ठः स्फुर-दधरपुटः कंपमानचिबुकः तात ! मातंग ! को वा निवारयेद्भवितव्यताम्। प्रायो जगति नष्टाधिकारं भ्रष्टश्रीकं कृतोपकारमपि साधुशीलमपि सत्कुलीन-मपि मानवं नैव मानयंति जनाः। को वा निवेदयेद्धृतधैर्यो राज्ञे भवदु-दन्तमखिलमपि। भृत्यानां अस्मादृशां नैव तादृशी धृष्टता। किं कुर्मः ? कथं कथयामः ? भवद्दशां द्रष्टुमपि वयं न पारयामः। किमनेन परिदेवनेन निष्फलेन। राजाज्ञा तावद्भवताप्यस्माभिरपि अवश्यं निर्वर्तनीया। तन्नैव पश्यामि कालविलंबनेन किमपि प्रयोजनम्। किं च मयापि क्षिप्रमा-वेदनीयं देवादेशो निर्वर्तित इति राज्ञे। तदविलंबितमाचर कर्तव्यं कर्मेति सबाष्पमब्रवीत्।

भटवचनमवकर्ण्य स मातंगः तात! सत्यमभिहितं भवता। कोऽहं प्रभुनियोगमन्यथा कर्तुम्। प्रभुणा संकल्पितो भवेद्बालकबलिः। भृत्यकृत्यं हि स्वामिसङ्कल्पनिर्वहणम्। तत्क्षमस्व मत्कृतं कालविलम्बनरूपमागः। पापीयानहं निस्त्रिंशधाराक्रूरतामाश्रित्य हन्मि कुमारं ममात्मजम्। किंत्विद-मेकमभ्यर्थये। दास्यते च दासेन पत्रमेकम्। तत्समर्प्य राज्ञे कृपये-त्यभिधाय रुधिरसिक्तेन च्छुरिकाशिखरेण किमपि विलिख्य पत्रमेकं भटहस्ते निक्षिप्य च दुःखभरग्रस्ताक्षरः क्षरदश्रुधारापरिबाधमानाधरपुटः कृतांजलिः तात ! समर्प्य च राज्ञे पत्रमिदं समावेदय दीनस्य प्रार्थनाम्। यदि भवेत्क्वापि धृतप्राणा सा तपस्विनी मंदभागधेया जयंतिका दयालुना

देवेन कथमपि प्रापणीयमिदं पत्रं तामिति। एवमभिधाय वत्स! क्वासि दर्शय ते मुखकमलम्। बाष्पप्लावितेनानेन चक्षुषावलोकयाम्येकवारं पुनर्दुर्लभम्। बाष्पाकुलतया नैव दृश्यसे। क्वासि? वत्स! क्वासि? वत्स! मामवलम्बस्व। प्रसारितभुजः परिरभ्य मामाभाषयेत्यसकृद्रुदन् तमादाय बालकं शिरस्याघ्राय हा! कथमिव हन्मि नृशंसोऽहम्। हा! नियते! लोकविलक्षणोऽस्मीति विसंज्ञः पपात वसुमत्याम्।

तदा स बालको बाष्पगद्गदकण्ठो हा! तात! किमिदमुचितं ते क्षत्रावतंसस्य क्षत्रियाणां शस्त्रघातेनोत्सवो हि प्राणत्यागः। भुवि लब्धजन्मा कदापि केनापि कारणेन त्यजेदेव प्राणान्। तदिह किमर्थमबलावन्मुधा प्रलपसि। क्षिप्रमुत्तिष्ठ। निर्वर्तय नरपतिनियोगम्। इति तं मंदमुत्थाप्य क्षितितलपतितं करवालमादाय च तत्पाणिना बलाद्ग्राहयामास। तदनु स मातंगस्समुन्नमय्य तं कृपाणं रे! तिग्मतर पाप! बाष्पहतक! कुतो वा मुधा निरुणत्सि मन्नयनसरणिम्। मा कुरु नरपतिशासनस्यांतरायम्। पाप! पाणिहतक! कुतो वा वेपमानः पातयसि कृपाणं क्षितितले। निपातय निर्भयं निरनुकम्पं तनयग्रीवायाम्। अयि! दुर्गे! निर्गतिकस्य समाश्रितभवच्चरणसरसिजस्य घोरतरदुरितभाजनस्यास्य जनस्य नालमेतेनानुभवेनास्वादितानेकपशुरुधिरधार! निस्त्रप! निस्त्रिंश! साधु स्वदस्व तनयकंधरारुधिरधाराम्। रे! जीवसेनहतक! केवलविडम्बनमेव ते परिदेवनमपि। किं मुधा प्रलपसीत्युच्चैराक्रन्दन्निपात्य चासिधारया पुत्रकंधरां वसुन्धरायां स्वयमप्यात्मग्रीवायां स्वपाणिनैव पातयामास कृपाणधाराम्। मातंगनिधनमप्यवलोक्य समुद्विग्नहृदयस्स भटः ससंभ्रमं सावेगं सवेगं समासाद्य च प्रासादं तापसीं प्रति जीवसेनान्वेषणोपायमेव व्याहरंत्यै मुहुर्वामेतरेक्षणपरिस्फुरणपिशुनितां निर्निमित्तापशकुनभीतिमपि प्रकाशयंत्यै तस्यै जयंतिकायै साध्वसवेपमानगात्रो निवेद्य च मातंगवचनमखिलमपि तन्मरणं च तेन दत्तमिदं पत्रमिति सबाष्पं सविनयं तत्पत्रमर्पयामास।

जयंतिका तु तद्वचश्श्रवणमात्रेण विहस्ता सत्वरं पत्रमुद्घाट्य पपाठ ।

त्यक्त्वा त्वां विपिने कुरंगनयने ! हा ! जीवसेनो गतः
चण्डालत्वमुपेत्य जीवित इह त्वल्लाभकांक्षाबलात् ।
अद्य क्वापि समागतं तव सुतं हत्वा क्षितीशाज्ञया
क्वासि प्रेयसि । पापकृत्समददां काल्यै ममासूनपि ॥

इत्थमनुवाच्य हा ! नाथेत्यतर्कितापतिताशनिहतेव पपात वसुमत्याम् । तादृशावस्थां तां जयंतिकां निशाम्य शोकविक्लबा सा तापसीत्थमचिंतयत् । केयमनर्थपरंपरा ? यदर्थमियन्तं कालं महानुद्यमः कृतः । स एव समूलनाशं नाशितो नियत्या । भस्मनि हुतमिव निष्फलमभवदखिलमपि कर्मजातम् । ध्रुवमियमपि त्यक्ष्यत्येव प्राणान् । किमद्य कर्तव्यम् ? द्रष्टव्यमिदमपि संवृत्तं पापया मया । विविक्ते विपिने मुनिवृत्त्या कालमतिवाहयंत्याः मम क्वेदमापतितम् ? हंत ! विधिविलसितम् ! विचित्रगतिता च कर्मणां विस्मयमुपजनयति । वात्यया गन्धर्वनगरमिव गगनांकणे नियत्या तावत्संसारचक्रे प्रियजननिवहमेकत्र संयोज्य दर्शनीयतामापाद्य च प्रवर्ध्यते हर्षप्रकर्षः । क्षणमिव तदखिलमपि विघटय्य च शोचनीयता कल्प्यते । तदत्र प्रतिविधातुं न कोऽपि शक्नोति । किंतु शुभाशुभकर्मफलमनुभूयैव क्षपयितव्यम् । तदहमपि सिद्धास्मि सर्वमनुभवितुं यद्यदापतिष्यतीति विचिंत्य तस्यास्संज्ञामुदपादयत् ।

सा तु जयंतिका पतिसुतनिधनजनितशोकपावकपच्यमानहृदया मंदमुत्थाय सगद्गदबाष्पं किमनेनेतःपरं गर्हणीयेन पुरुषवेषेणेति मालाबलाद्दूरीकृतपुरुषाकृतिरनपेक्षितशतांगा चरणाभ्यामेव प्रस्थिता किमपि गदितुमप्यनीशया शोकातिरेकावनमितवदनया तया तापस्या सह धावंधावं दुर्गालयद्वारमवाप । अवाप्य च तत्र रुधिरधारारंजिततया अरुणकौशेयावगुंठितोपधान इव वध्यशिलातले शयानं समुद्गलद्रसाविंदुं विशालवध्यशिलातलाल्लंबमानदेहार्धभागं निकृन्तनानुपदमेवापरित्यक्तजीवसंपर्कतया

मुहुरुत्प्लुत्योत्प्लुत्य करनिकटमागतं भ्रुकुटितभ्रूलतं दंतपंक्तिदष्टजिह्वांचलं किंचिदिव निमीलितलोचनं स्वशिरः प्रसारितेन पाणिना दित्सतमिव दुर्गायै प्राणप्रयाणावसरबहुलीभवदनिर्वचनीयव्यथापरिलुठत्कलेवरतया त्रुटितरक्तसिक्तप्रत्यवयवसक्तशोणकरवीरकुसुमदलं मलयगिरिसानुमिव रक्त-चन्दनावलीढं वसंतसमयमिव कबन्धोपकंठप्रकाशमानरक्तोत्पलं तनय-मुपरतानां पशूनामुपर्युत्तानशयं निजकरपातितकरवालासमग्रनिकृत्तकण्ठ-तलतया स्तोकमिव लग्नेन प्रमीतमहीतलेशयस्थूलतुलायोन्नतपृष्ठदेशादधो-लम्बमानेन विगलितोष्णीषतया विलुलितकीलालकलुषितलम्बमानकच-कलापेन तिर्यगाकूणितकृष्णकनीनिकाभयानकलोचनेन बाष्पधारापरंपरा-कल्माषितकपोलेन दरविवृतवदनकुहरेणोत्तमांगेनातिबीभत्सदर्शनं किंचिदिव विवृतशिथिलितमुष्टितया करगलितकौक्षेयकत्सरुं वक्षस्स्थलनिक्षिप्तवाम-पाणिं स्नुतास्रस्रोतस्सिक्तकच्चरवारवाणं शोणितपंकिलतललग्नगुल्फदेशं वल्लभं चोपरतमपश्यत् ।

दृष्ट्वा च भूताविष्टेव ग्रहग्रस्तेव केनाप्युत्क्षिप्तेव चक्रवात्यया परिघूर्णितेवाशनिपातेन पातितेव गाढांधकारकुहरं प्रविष्टेव वारिपरीवाहा-वर्तेन भ्रामितेव दावानलज्वालयावलीढेव शोकातिरेकेणोन्मत्तेव हा ! नाथ ! क्वासि ? इति निपत्य वल्लभोपरि नन्वार्यपुत्र ! न जानासि मामागतां जयंतिकाम् ? क्षिप्रमुत्तिष्ठ। मामाभाषय। किन्नु खल्विदम् ? चतुरुद-धिमालामेखलाया विश्वंभराया भर्ता भवानिहैवं शेते ? किमुचितं कुंकुम-पटीररससमुचितस्य समनुभूतशशोदरलोममृदुलतल्पस्यानल्पभोगानुभव-भाजनस्य भवच्छरीरस्य विस्रगंधासह्यपिशितशोणितकलुषितमिदं शयनम् ? तदुत्तिष्ठेति मन्दमुन्नमय्य पाणिना लम्बमानं पतिमस्तकं सकबन्धं शाय-यित्वा च निजोत्संगतले सिञ्चन्ती बाष्पधारासारैर्नेतोत्तमांगी पतिमव-लोकयन्ती हा ! नाथ ! कोऽयं वेषः ? कथमापतितं ते वैरूप्यम् ? क्व गतं ते तादृशं सौंदर्यं गांभीर्यं धैर्यं च। कथमापतितमीदृशं दौर्गत्यम् ?

किमिति जग्राह भवान्पाणिमस्या मंदभाग्यायाः। हन्त! भवता तु नैवानुभूतं किंचिद्प्यनया मया सह शर्म। नाचरितं च नर्म। नापि कृतं अवदातं कर्म। किंतु मत्कृते दूरीकृतो निजधर्मः। समाश्रितं च सज्जनगर्हितं चंडालकर्म। धिगेनामोद्दशानर्थपरंपराया निदानीभूतां जयंतिकाम्। अहह नाथ! कथमिव निकृत्तवानात्मजमपि नरपतिभिया। हन्त! निखिलनरपतिमकुटकोटिरत्नप्रभानीराजितचरणारविंदस्य भवतोऽपि का नाम भीतिरन्यस्मान्नरपतेः। धिक्परसेवाम्। ननु नलिनायताक्ष! स्थूललक्ष! कथमिव न्यपातयः कृपारहितः कृपाणधारामविदितलोकतंत्रे पुत्रेऽनेन पाणिनेति तत्पाणितलं निधाय निजनयनयुगले कपोलफलके च मुहुः करतलेन परामृशन्ती तन्नयनयुगलं तत्कपोलतलविनिहितात्ममुख-कमला निजासमीक्ष्यकारितां पदेपदे निंदन्ती हा! जीवसेन! विपुलो-रस्क! तिरस्कृतस्मरसौंदर्यायिपुत्रेत्यसकृदाकारयन्ती शिलामपि विलापयन्ती कठोरमपि वज्रं द्रवीकुर्वती रोदनातिरेकेण दिक्तटमपि शिथिलयन्ती गगनमपि पातयन्ती धरामपि विदारयन्ती तारतारं विललाप।

एवं विलपन्ती शिलातले शयानं तनयमवलोक्य दुःखभरद्विगुणिता-श्रुच्छटासिच्यमानस्तनतटा मंदमुपसृत्य रुधिराविले भूतले समुपविश्य हा! वत्स! नियत्या ते ललाटतटे किमिदमपि विलिखितं, यज्जनन्या समादिष्टः खड्गपाणिना जनकेन निकृत्तकण्ठो भवेति। ननु पुत्रक! पुरा वल्लभमनु-चिंत्य रुदन्तीं मामवलोक्य मद्दुःखासहिष्णुर्बालभावमधुराभिस्सांत्वोक्ति-भिरजनयः किल किंचिदिव हृदयशांतिम्। कुतो वाद्युना नैव सांत्व-यसि प्रलपन्तीं माम्। धन्योऽसि! यत्पितृनिधनमनवलोक्यैव प्रथममेव त्यक्तप्राणोऽसि। प्राणिमि पापाहमद्यापि कष्टपरंपरामीदृशीमनुभवितुम्। अंब! कर्कशहृदये! दुर्गे! भवती तावदन्यादृशेनानेन बलिक्रमेणाप्य-पर्याप्तसौहित्येति ज्ञायते। तदुररीकुरु मदीयान्प्राणानपि दयया। समर्प-याम्यधुनैव। पश्येत्यादाय जीवसेनकरतलात्करवालं निजकण्ठनिकृन्तनाय

समुत्तस्थौ । "तदानीं कथमयं जीवसेनः ? क्व वास्य चक्रवर्तित्वम् ? क्वायं चंडालभावः ? क्व सारिभीकरा ? क्वेदं चित्रपुरम् ? कथमिहागमनमस्य पर्यवसितमंततो निधने । स्यान्नामैतत् । असूर्यंपश्यायास्तन्महिष्याः कथमिव स्थितिरिह । अहो ! विस्मयावहः खलु सौंदर्यमस्याः । सत्यमियं चण्डिका चंडचेव । रमणोमिमां निजप्राणानपि जिहासतीं विलोकयंत्याः दुर्गायाः हृदयं निजकरकरवालनिशितधारासोदरमिव दृश्यते । किमिह न कोऽपि निवारयितुमस्ति वा ? " इति परस्परं व्याहरतां, मातस्सप्रश्रयमभ्यर्थयामहे । मा तावदोद्दशे परुषतरे कर्मणि समुद्यता भूरिति सांजलिबन्धं याचमानानां, हन्त ! क्षणादेव नश्यति स्त्रीरत्नम् । किं कुर्मः ? कोऽपि नास्ति रक्षकः ? इत्याक्रंदतां च तत्रत्यानां जनानां हाहाकारपूरिते दुर्गागाराजिरे जयंतिकायास्तावत्समुद्यत्खड्गो बाहुस्तथैव स्तंभितोऽभवत् ।

तदा तु शरच्चन्द्रचंद्रिकाधवलं क्षौमं वसाना दीप्रतरहीरहारपरिष्कृतवक्षोजमंडला निजाजानुलम्बमानपरिमलबहुलमल्लिकामाला वामपाणिधृततीर्थोदकपूर्णसुवर्णकलशा निरतिशयसौंदर्यापहृतसकलजननयना तेजोमयविग्रहापि कौमुदीव नयनाह्लादकरी गौरांगी काचिदाविरासीत्सुन्दरी । तत्रत्येषु सादरं सविस्मयं सकौतुकं तामेव वीक्षमाणेषु जयंतिका का त्वमंब ! कादंबिनीव घर्मातपपरितप्तस्य आविर्भूतासि । यदि दुर्गैव, गृहाण कृपया कृपाणमेनम् । ममापि मंदभाग्यायाः निकृत्य कंधरां धरां गलितभरां कुरु । कृपयांगीकुरु प्राणहतकानिमानपि । निर्वर्तयाभ्यर्थनामिमां सादरमिति सगद्गदमब्रवीत् । तदवकर्ण्य सा सुन्दरी समंदस्मितं वत्से ! नाहं निर्घृणा । त्वं त्वविदितपूर्वोदंता शोकातिरेकादेवं व्याहरसि । निर्निमित्तमेवं मा कुप्यतु भवती मह्यम् । शृणु तावदेवं भवितव्यताया निदानं पूर्ववृत्तम् ।

पुरा किलाश्वकर्णाभिधस्तपोधनः तस्यामेव गुहायां तपश्चरन्नासीत् । यस्यां युवयोस्संगमस्संवृत्तः । स तु कदाचित्प्रणिधानानंतरं कंदमूलफला-

हरणाय गुहाया बहिः क्वापि प्रयातः । तदवसरे कश्चन राजा मृगयार्थ-मागतः कयापि योषिता संगतः । प्रत्यागतश्च तपोधनः ज्ञात्वा च ज्ञानेन ग्राम्यधर्मापरिशुद्धां गुहां क्रुद्धश्च रे ! ग्रामीणकल्पानल्पाभिक ! यदिमां मदीयां गुहां कर्मणानेनापरिशुद्धामतनोः तदिदानीमेव चण्डालभावाभिभूतो भार्याविरहितः नष्टसर्वस्वोः भवेति शप्त्वा चेतः परं यश्च हेयमिदमिहा-चरिष्यति सोऽपि भूयादेवमेवेति शशाप । तत्तत्रैव संयुक्तयोर्युवयोरपि तथैवासीत् । मया त्वनुजिघृक्षया ते कारितः कांतारवर्तिन्या तापस्यानया सह वासः । योजितश्च चण्डालभावाभिभूतो जीवसेनोऽयमपि मत्सेवाया-मिहैव । कथमप्यभिषेचिता चास्मिन्नेव चित्रपुरे भवती प्रापिता च । माला तव मणिबन्धाच्च्याविता च । कथमपि तव तनयहस्तं प्रापिता च । घातितस्तवेहानीतः पुत्रः । यतोस्यायुषां परिमितिरियत्येव । इतःपरं दीर्घायु-र्वर्धते । कारितश्चात्मवधो वल्लभेन स्वेनैव येनायं चण्डालभावोऽपि विन-श्येत् । वत्से ! तवायं वल्लभः लब्धपुनर्जन्मा लब्धपूर्वरूपः, पुत्रोऽपि सुप्तः प्रबोधित इव च समुत्थास्यतः । तद्दूरीकृतशोकगंधा संध्यनुगुणं योजय तत्तत्कण्ठतलयोस्तत्तन्मस्तकं इत्यादिदेश ।

अनुपदमेव सप्रमोदं जयंतिकया संयोजितयोस्तत्तच्छिरसोस्तत्त-त्कंठतले सा सुन्दरी समभ्युक्ष्य निजकरकमलकलशोदकं, वत्से ! किमन्य-दभिलषसि ? निवेदय । दित्सुरस्मि इति सादरमकथयत् । तदवकर्ण्य कर्णामृतं दुर्गावचनं सानन्दं सप्रश्रयं बद्धांजलिपुटा जयंतिका मातः ! प्रागिवास्यास्तापस्याः पुरुषसंपदमापादय । किंच शोकातिरेकाद्यद्यदपराद्धं वचसा मनसा कर्मणा च मया, तदखिलमपि क्षमस्व । किंच वत्साय वल्लभाय च दीर्घमायुः प्रयच्छेति प्रार्थयामास । एवमभ्यर्थिता सा तु दुर्गा समंदस्मितं तापस्याः कण्ठे समर्प्य च निजकरस्थितां चम्पकमालां जयंतिकाप्रार्थनया लब्धपुरुषभावोऽसि । चित्रपुरे तावदभिषिक्तः प्रजा-रंजनपरो भव । वत्से ! जयंतिके ! मर्षित एव शोकातिरेकविजृंभितो

वागपराधः । त्वमपि दयिततनयाभ्यां समासाद्य निजपुरीं गुरुजनवरिवस्यापरा धर्मैकनिरता पतिदेवता सती चिरमनुभव राज्यसंपदमित्यभिधायांतरधात् ।

तदनु जयंतिका मंदेतरानंदस्पंदमाननयनेंदीवरकंदलितबाष्पमरंदमंदीकृतगमना मंदाक्षावनमितवदनारविंदा मंदमधिगत्य धवसविधं दक्षिणपाणिपल्लवेन परामृशन्ती तत्तनुं मंदमधुरया गिरा नाथ ! सनाथयोत्था यानाथममुं जनमित्यकथयत् । तत्क्षणमेव प्रियाकरकिसलयसंपर्कादिव सः जीवसेनः करकमलतलपरिमृष्टलोचनयुगलः परामृशन्तीमात्मतनुं सुतनुं समीक्ष्य क्षिप्रमेव क्षितितलादुत्थाय प्रियावलोकनजनितप्रमोदातिशयपरवशमानसः स्वप्ने चानुभूयमाने झडिति बलादुत्थापित इवासत्रास्वादमदघूर्णित इवामृतस्रोतोभिराप्लावित इव हठाद्भीत इवोरुतरपरुषरवपरिक्षुभित इवामितरयपरिभ्रमणसमुपजनितहृदयवैकल्य इव ध्वांतावनद्धदृष्टिरिव निरतिशयतेजःपुंजाभिभूत इव चेतिकर्तव्यतामूढः समुद्गतपुलकजालकीलितमूर्तिः प्रमोदजनितया कयापि विकृत्यानिर्वचनीयमुखवैवर्ण्यः शिथिलितवर्णगणः किमपि किमपि भाषमाणः आनंदातिशयविकलितजङ्घाबलः पुनरपि पपात क्षितितले । तादृशावस्थमवलोक्य पतिं समुद्विग्ना जयंतिका मनस्येवमचिन्तयत् । वदंति खलु कोविदाः निरंतरक्लेशपरंपराविशीर्णहृदयस्यातर्कितोपनतोरुतरप्रमदह्रदावगाहनमपि निधननिदानमिति । तदिदानीमचिंतितोपनतमद्दर्शनसमुपजनितामंदानंदतुंदिलहृदयोऽयमेवमनुभवति । तदधुना पुनरपि प्रागिव मालाबलान्नरपतितामुपेत्य पतिमेनमवलोकयामि इति विचिंत्य च पुरुषाकृतिमेवोररीचकार ।

तदनु शिशिरोपचारेण सचेतनो जीवसेनः हा ! प्रिये ! क्वासि गता कालमेतावन्तम् ? कथमिवेदानीं तटिदिव सन्निहिता । कालमुखपतितं मामकार्षीस्सजीवं जीवसेनं निर्दयमित्युदतिष्ठत् । उत्थाय चानवलोक्य प्रियां नरपतिदर्शनाद्भीतभीतः परितो दत्तदृष्टिः तापस्या प्रतिबोधितं

निजदर्शनजनितप्रमदभरप्रफुल्लवदनारविंदं सरभसं प्रणिपतनायापतन्तं निर्वर्ण्य पुत्रं ससंभ्रमं सविस्मयं समभिपत्य पाणिभ्यामादाय दृढतरं परिष्वज्य मनसीत्थमचिंतयत्। हन्त! विधिविलसितम्! क्व पुनरुत्थानमुपरतस्य? क्वाहमस्मि? क्व पुनरंतककरालवक्त्रकुहरक्रूररदनक्रकचाघातपतितस्य वत्सस्योज्जीवनम्? हन्त! किमयं स्वप्नप्रपञ्चः? तटित्पटलमिव मन्नयनपथाधिरूढं प्रियामुखकमलं क्वापि लीनम्? किमिदमहं नवीकृत इवेति विचिंत्य च वत्स! केन पुनरुज्जीवितोऽसि मया पापिना निकृत्तशिराः? प्रदर्शय तं दयालुम्। महात्मनस्तस्य चरणनलिनयुगलमवतंसयामि। हा! प्रिये! त्वं तावदस्मिन्नवसरे न सन्निहितासि। क्वासि? देहि मे प्रतिवचनम्। इति बहुधा व्यलपत्।

एवं विलपन्तं तमवलोक्य जयंतिका सानुतापं दुःखदम्यमानकण्ठापि सगम्भीरं बालिश! भवदनुयायिनीमबलां विहाय महारण्ये तद्विरहदुःखमिहाभिनयसि? दंडनीयः खलु विस्रंभद्रोहीति प्रकटितप्रभुदर्पा जीवसेनमपृच्छत्। पृष्टस्स कृतांजलिपुटस्साध्वसवेपमानगात्रो गात्रलीन इव विनयनम्रकायस्सबाष्पगद्गदं न्यवेदयत्। देव! नाहमपराधी। कांतारे कंदरं प्रियया सह शयानस्य ममाभवत्क्वापि तरुमूलतले प्रतिबोधः। प्रबुद्धेन च मया तत्रतत्रान्विष्टापि सा नैव लब्धा। केनाप्यपहृतांशुकतया नग्नोऽहं कांतारे पर्यटन्वसनमन्विष्यन्प्रियामाक्रन्दन् अनाथ इव निरवलम्बनः निराहारः हालिककल्पः अनल्पवैरूप्याभिभूतः मार्गवशादेतच्चित्रपुरनिकटवर्तिं पितृवनमवापम्। तत्र च क्षितितलनिपतितं पटच्चरं कच्चरं खण्डपटमेकमादाय परिधाय च जीविकायै जिगमिषुः पुराभ्यन्तरं गोपुरपार्श्ववर्तिन्यस्मिन्नेव दुर्गागाराजिरे कथमपि कति चिद्दिनान्यत्यवाहयम्। अथ नियुक्तोऽस्मि प्रभुणास्मिन्कर्मणि। श्रुत्वा च धृतपुरुषवेषा जयंतिका हन्त! मदर्थमनेन कीदृशी समनुभूता दशेति सानुतापं विचिंत्य तापसीमवलोक्य प्रवेशय प्रासादमुभावपि तावित्यभिधाय निरगच्छत्।

तदनु लोकबांधवतयेव सवितरि तत्पुनरुत्थानपर्यन्तं स्थित्वा च पश्चिमाचलशिरसि मंदमस्तमुपगतवति विचित्रचरित्रावलोकनेन विस्मयाश्लिष्टमानसेषु तत्रत्येषु समुपरतान्पशूनादाय निजावासं प्रति गतेषु त्रोटिपुटगृहीतावनितलनिपतितपिशितशकलेषु सारवं समाश्रितनिकटविटपिविटपपटलकोटिषु ध्वांक्षेषु अचिरकृतदीपपल्लवतया ज्योतिर्मये चित्रपुरे बालिकाजनगीयमानगानविशेषहृदयंगमेष्वगाराभ्यन्तरेषु द्विजव्रजपरिपठ्यमाननारायणनामसहस्रस्तोत्रवाचालितेषु देवमंदिरेषु वधूजनक्रियमाणसंध्यारक्षाविधिसक्तेषु शिशुषु विरतेषु चाटुवचसा पंजरकीरेषु मणिमययष्टिशिखरकृतादरेषु अगारमयूरेषु क्रीतपरिमलबहुलप्रसूनमालास्तबककरपुटेषु विटपुरुषपटलेषु सायंतनमङ्गलवाद्यध्वानगम्भीरे सौधद्वारे सौरभभरितागरुधूपधूमलतावितानिते धनिभवनाजिरे सुन्दरीजनविरचितबलिकुसुमतारकितेषु प्रतिभवनदेहलीदेशेषु सा तु तापसी जयंतिकाभ्यनुज्ञया ताभ्यां दापिताहारा कस्मिंश्चिद्विविक्ते निवेशे संवेशाय तौ सादरं विसर्जयामास।

तदनु समासाद्य च निजसदनं दूर एव परिगृहीततल्पामनारूढनिद्रां पतिसुतलाभकंदलितप्रमोदभरमंथरमानसां प्रथमं कथं कदा क्व वावलोकनीयोऽयमार्यपुत्रः पुत्रश्च इति पृच्छन्तीं जयंतिकामब्रवीत्। ननु कल्याणि ! दिष्ट्या वर्धसे। भवत्या तावदेतावन्तं कालं क्लेशपरंपरानुभूता। इदानीं शुभोदर्कफलेग्रहितामवाप। भवत्यास्सहवासमहिम्ना दुर्गाप्रसादाच्चापगतस्त्रीभावः संवृत्तोऽस्मि पुरुषः। मह्यमेवं रोचते। तावुभावपि उषस्येव उत्थाप्य कारयित्वा च मङ्गलस्नानविधिं महाधनैर्विभूषणैश्चालंकारयतु भवती। त्वमपि मालाबलात्परिहृतपुरुषाकृतिः निर्वर्तितमंगलस्नानविधिः स्त्रीसमुचितेन मंगलवेषेण सुभगदर्शना सिंहासनोपवेशितं भद्रमुखं सपुत्रमार्यपुत्रं चावलोकय। अहमपि निर्वर्तितस्नानविधिः नरपतिसमुचितालङ्कारालंकृतः तत्र सभायां द्रक्ष्यामि युष्मानिति।

जयंतिका तु "एवं कल्पनीया सभा। एवं द्रष्टव्यस्तावत्प्रथममेवमार्य-

पुत्रः । प्रथममेवं संभाषणीयः । एवमाश्लिष्य पुत्रस्सांत्वनीयः । प्रथममेवं सभास्ताराणां प्रत्ययस्समुत्पादनीयः" । इत्येवं प्रकारेण तापस्या समं संमंत्र्य यामद्वयमत्यवाहयत् । तदनु चरमे यामे वत्स ! प्रभुरयं किमर्थं प्रासादाभ्यन्तरं निनायावामुभावपि ? किमर्थं मिष्टान्नदानेन समतोषयत् ? किमर्थं शशोदरलोममृदुलशयनीये शायितवान् ? प्रभोस्तावदत्यादरोऽयमुपजनयति भीतिम् । राजाशयं ज्ञातुं को वा शक्नोति ? वत्स ! अहं तावदवैमि घोरतरे कांतारे स्वाश्रितदयितापरित्यागरूपापराधकृते दंड्योऽयमिति दंडनार्थं स्यादिदमिति परस्परं भाषमाणावनारूढनिद्रौ तावुभावपि तापसीमुखादुत्थाप्य कारयित्वा च मङ्गलस्नानविधिं विविधैर्भूषणैर्भूषितौ चाकारयत् । स्वयमपि विहाय पुरुषाकृतिं मालाबलान्निर्वर्तितमंगलस्नानविधिः समुज्ज्वलशरीरा भूषणालंकृता च तापसीत्वात्ययसंतुष्टमानसं पुरुषभावलाभभासुरं कृतमङ्गलस्नानं परिष्कारपरिष्कृतं सुकेशं त्रपाभराकुंचितोत्तमांगा स्थिता चानतिदूरे जगाद ।

ननु भद्रमुख ! विचित्रपरिष्कारदर्शनीयां परिकल्प्य सभां तत्र च पांडरतरतिरस्करिण्यन्तर्हिते मुक्तातपत्राभिरामे सिंहासने तावुभावप्युपवेश्य निवेदय तावन्मह्यं इति प्राह । एतावता कालेन प्राप्तोदययोरेतयोस्समागमावलोकनकुतूहलेनेव लोकबांधवः प्रकाशितरागश्चोदयगिरिशिखरमारुरोह । तदनु सुधर्मायामिव कल्पितायां सभायां सुकेशादेशेन बहिस्तिरस्करणीतः समुचितपीठमधिगतेषु विबुधेषु सभासमुचितवेषेषु करगृहीतचामीकरदंडेषु निश्चलं स्थितेषु परिजनेषु तपनीयपीठमलंकुर्वत्सु सचिवेषु यवनिकाभ्यंतरे च मणिमयसिंहासनजुषि सपुत्रके जीवसेने स सुकेशो विदितोदंतायै मङ्गलालंकारालंकृतायै मंदमायांत्यै जयंतिकायै प्रसारितबाहुयुगलः सप्रश्रयं प्रदर्शयन्मार्गं तां सभां प्राविशत् । प्रविशति च तस्मिन्स्वांतर्निहितं जीवसेनं तस्यै जयंतिकायै त्वराभरात्प्रदर्शयितुकामेव यवनिका द्विधा विभक्ता सुदूरमपससर्प ।

जयंतिका तु प्रत्युप्तहीरकिरीटपरिष्कृतोत्तमांगमवतंसितभासुरतारा-निकरमिव मेरुमूर्णालवालप्ररूढया लतयेव मृगमदतिलकरेखयालंकृत-विशालललाटफलकमंसतले विलसंत्यै राजलक्ष्म्यै विनिहितदीपकोरकाभ्या-मिव माणिक्यमणिकुण्डलाभ्यां परिमंडितगंडमंडलं पृथुलमुक्ताफलमाला-वेष्टितकंबुकंधरं मरालराजिविराजितमिव पद्माकरं भुजलंबितपीतांबरं सपक्ष-मिव कनकगिरिं वीरश्रीकल्पितकमलाभ्यामिव प्रत्युप्तपद्मरागाभ्यामंगदाभ्यां परिमंडितोद्दंडभुजदण्डं हीरमयमेखलालंकृतावलग्नं वासुकिसमावेष्टितमध्य-मिव मंदरं कालमेतावन्तं वल्लभविरहेणातिकृशे प्रकटितानुरागे लब्धराज्य-तया पदपंकजवरिवस्यामाचरति भूमंडल इव चक्राकारे नात्यायते माणिक्य-मयविष्टरे विनिहितचरणसरसिजं कमनीयतपनीयभूषणभूषितकंधरेण हाटक-पीठमलंकुर्वता पुत्रेण रत्नसानुसानूपविष्टेन पिशंगकेसरांकुरभासुरकंधरेण केसरि-किशोरेणेव परिष्कृतदक्षिणपार्श्वं नाकलोकमिव सुमनोभिरामं सुरपतिमिव सुधर्मासक्तं चन्द्रमिव दर्शनीयरूपं दिवाकरमिव निजतेजोधीन-लोकं सौन्दर्यमयमिवानंदमयमिव नयनानामुत्सवमयमिव तं जीवसेन-मपश्यत् ।

दृष्ट्वा च निरतिशयानंदपरवशतयेतिकर्तव्यतामूढा क्व गतास्मि ? किमु निषण्णास्मि ? आहोस्वित्केनापि अवलम्बितास्मि ? किमु स्वपिमि ? किमथवा प्रबुद्धास्मि ? क्वाहमागता ? केन वा समानीता ? किमालपामि ? किमथवा मूकास्मि ? किमु क्वापि प्लावितास्मि ? किमथवा स्वप्नोऽयम् ? इति बहुधा चिन्तयन्ती हर्षपरवशतया समाश्रितस्तंभा स्तंभाग्रसमुत्कीर्ण-दंतमयसालभंजिकेव निष्पंदगात्री तस्थौ। तदा विस्मयाश्लिष्टमानसास्सा-माजिका अनिर्वचनीयमानंदमनुबभूवुः । अथ स सुकेशस्सविनयं सांजलि-बन्धं समुपसृत्य जीवसेनाय व्यजिज्ञपत् । देव ! देवी विज्ञापयति देवपाद-मूले। विस्मृत्य च कृतमखिलमप्यपराधं संतापितगात्रीमनवरतमप्यश्रुकलु-षितनेत्रां दुःखैकपात्रं वल्लभलाभप्रत्याशासमवलंबितप्राणमात्रां निरंतरांतरंग-

कृतपतिमन्त्रां मामिमामबलामुररीकृत्य कृपया कृतार्थां करोत्वार्यपुत्र इति। एतदवकर्ण्य देवः प्रमाणमिति। निशम्य च सुकेशवचनं निशाम्य च त्रपाभरविनमितवदनारविंदामायतनयनकुवलयप्रकटितदीनभावां मणिमयमेखलोपरितिर्यक्कृतवामकूर्परां कोमलकपोलतलविनिहितदक्षिणपाणिकमलां स्तोकमिवोन्नमितदक्षिणचरणांगुष्ठनखविलिख्यमानमणिकुट्टिमां नातिदूरे स्थितां जयंतिकां जीवसेनो मनसीत्थमचिंतयत्।

हन्त! अनया तावत्को वापराधः कृतः? कृतः खलु महारण्ये निर्निमित्तमेनामुत्सृष्टवता मयैव। तथाप्यारोपयत्यात्मन्येवापराधम्। कथं वात्रागमनमस्याः? कथमत्र स्थितिरस्याः? सर्वमेतदजानतो झडित्येतदंगीकरणं तावन्ममानुचितमिव प्रतिभाति! किंच प्रजा अप्यन्यथा भावयंति। हन्त! कष्टम्! भवतु तावदेवमाचरामि; इति सुचिरं विचिंत्य नीरवेषु सभ्येषु सगम्भीरध्वानो व्याजहार। भद्रमुख! ननु श्रुतं भवदुक्तमखिलमपि। न हि कदापि कथमपि योषितां स्वातन्त्र्यम्। इयं तु तरुणी रूपवती पतिविहीना परवशा च भृतोदरा कालमियन्तमत्यवाहयत्। जगदिदं तावत्कामपरतन्त्रम्। कामस्तावदूर्ध्वरेतसामपि विकारयति मानसम्। कंदमूलफलाहारिणोऽपि भोग्यतामनीषया स्मरजटिलजालजठरे परिलुठन्ति स्म। कामस्तावज्झंझावात इव मनुजानां विवेकदीपकलिकायाः अन्धकार इव पिदधाति ज्ञानचक्षुः। आवाप इव तृष्णालतायाः तिरस्कारयति बन्धुजनवचनमपि। निर्मूलयति पितृगौरवमपि। उत्पाटयति विनयमपि। दूरीकरोति लज्जामपि। निश्श्रेणिरुत्पथगमनस्य। एवं स्थिते किमु वक्तव्यं योषित्सु। तदद्यापि क्वाप्येवमेव केनापि रक्ष्यमाणा स्वैरं विहरतु। भवतु च कुण्ठितमदुपकण्ठागमनोत्कण्ठा। नास्त्यवकाशलेशोऽपि भाषणस्यापि। तत्प्रयातु नाम सत्वरमितः क्वापि। इत्यभिधाय प्रकाशितामर्षस्तूष्णीमासीत्।

निशम्य चाशनिनिशितानि जीवसेनवचांसि साध्वसवेपमानतनुलता

जयंतिका हन्त! किमिदमेतदपि श्रोतव्यं संवृत्तम्? किमेतदर्थं वा इयन्तं कालमनुभूतोऽयमनिर्वचनोयश्श्रमः? स तु फलेग्रहितामवाप्याप्यनर्थ-पर्यवसायी बभूव किल! न हि भवत्यस्य मद्वचसि विस्रंभः। कथं वा प्रत्येत्ययं मच्चरित्रशुद्धिम्। धिगेनां माम्। न हि दुरितमंतरा स्त्रोजनिः। दुःखैकभाजनस्य मे किमनेन प्राणधारणेन? धिक्सौन्दर्यम्। धिक्चापल्यम्। धिगविचाररमणोयताम्। धिक्क्षिप्रकारित्वम्। धिक्पारवश्यम्। धिगनौचित्यकारित्वम्। यदेतैरोदृशोमवस्थामापन्नास्मि। इति विचिन्तयन्तो शोकातिरेकेण लोनेव विलीनेवांधेव बधिरेव मूकेवाक्ष्णा काणेव गलितमानसेव मस्तकनिपातितगगनेव भुवा गिलितेव इतिकर्तव्यतामूढा स्तंभोभूता तस्थौ।

तदा स सुकेशो भीतभीतो बद्धांजलिपुटस्सविनयं सधैर्यं सगाम्भीर्यं देव! अलममर्षेण। अलमविचारितोक्त्या। अलं प्रभुत्वप्रागल्भ्येन। अलं स्वेच्छानुकूलव्याहारेण। अलमगृहीतमानसत्वेन। अलमनायत्तवर्णोद्गिरणेन। अलमविदितपरोक्षव्यापारव्याहारेण। यथार्थवादी परित्यक्तानृतगंधः निवेदयामि। सावधानं शृणोतु देवः। समवधार्य मद्वचः ममापि तर्षं कृपावर्षेण पूरयितुमर्हति। न कदाप्यस्यां पतिदेवतायां दोषगन्धोऽपि। यद्यपि कामतन्त्रनिष्णातेन देवेन सम्यगभिहितः लोकसामान्यव्यापारः। न तु विशेषः। नाहमियन्तं कालं पुरुषः। मम तु चण्डिकानुग्रहसमनंतरमेव पुरुषभाव उपनतः। मदुदन्तमिदानीं यथावृत्तं देवाय श्रावयामि। इति निजमृगयायात्रामारभ्य तावदेतत्सभाप्रवेशपर्यन्तं निखिलमपि निजोदन्तं न्यवेदयत्। तदनु जयंतिकायां सबाष्पगद्गदं किं बहुना? यदि विस्रंभाय विस्तरशः कथयेयम्। तदा वावदूका भवेयम्। यदि च मूका सालभञ्जिकेव तिष्ठेयं तदा पुंश्चलीत्वप्रथां वहेयम्। तदद्य तावन्नाहं प्रभवामि आत्मवृत्तशुद्धिप्रत्ययोत्पादनाय। अत्र साक्षी कर्मसाक्ष्येवेति व्याहरंत्यां तत्क्षणमेवाशरोरिणी वाणीयमाविरासीत्—

मा भूदस्यामन्यथा ते तु भावः वह्निज्वालेवेयमप्यार्य ! शुद्धा।
तस्मादेनां प्रीतिपूर्वं गृहीत्वा युक्तो भूयाश्छाययेवांशुमाली ॥

एतदवकर्ण्य विस्मयाश्लिष्टमानसेषु सामाजिकेषु जीवसेनोऽयमब्रवीत् । भो ! भोः ! सभ्याः ! विदितं ननु चिरंतनमस्याश्चरितम् । प्रसिद्धश्च अनन्य-साधारणो मयि दृढतरोऽनुरागः । मद्वचश्श्रवणसमनंतरमेवाविर्भूतं दुःखभर-कन्दलितं दलितहृदयसमुत्प्लुतं मुखवैवर्ण्यमेवावर्णयदितरजनदुर्लभमस्या-स्सौशील्यम् । मया त्यक्तयाप्यनिर्वचनीयं कष्टमनुभूतम् । ज्ञातपूर्वमेवेदम् । तथापि भवतां विस्रंभाय मया तावदेवमाचरितम् । दुष्टं हि जगत् । पावकशुद्धामपि जानकीं जगदन्यथा मेने । तदिदानीमंगीकरोम्येनां पति-देवतां इत्यभिधाय सिंहासनादवरुह्य समंदस्मितं प्रियाकरकिसलयमवलंब्य पुनरपि तदेव सिंहासनमलंचकार ।

तत्क्षणमेवकाहलमर्दलपटहपणवादिविविधानवद्यवाद्यध्वानैरेकदैव प्रमोद-भरकन्दलितसभास्तारतारतालध्वनिभिस्साधुवादैश्चापूरितमभूत्सभांकणम् । तदनु विदितोदन्तो वीरकेतुः वृद्धभावकम्पमानविग्रहोऽपि साध्वसभर-द्विगुणितकम्पः समुपसृत्य जीवसेनं सांजलिबन्धं क्षन्तुमर्हति देवः किमप्य-जानता मया तावदियन्तं कालं यत्कृतमागस्तदखिलमपि । इति नरपति-चरणकिसलये सितकुसुमस्तबकमिव पलितं मस्तकं चिरमकरोत् । तदायं जीवसेनः कृतांजलिपुटं दर्शितप्रह्वभावं तं वीरकेतुमब्रवीत् । नन्वलमनया शंकया । रक्षिता वयमिह भवतैव । स्त्रीभावसंतप्तहृदयोऽपि ते पुत्रः सुकेशोऽयं दैवदुर्विपाकाच्च्युतसंपदामस्माकमतानीदुपकारं वाचामगोचरम् । भवतो भवन एवास्माभिरुपलब्धा निर्वृत्तिः । लब्धा च दयिता । समनुभूतश्चात्मजमुखपुण्डरीकदर्शनजनितो निरतिशयानन्दः । तदधुना पुरुषभावप्रमुदितं भवत्तनयं निर्वर्तितपट्टाभिषेकं सुकेशं राजानं कर्तु-मभिलषामीति ।

तदनु जीवसेनस्सिंहासनादवरुह्य तं सुकेशमारोप्य तदेवासनं

प्रसन्नेन सुगंधिनोदकेन भूदेवैरभ्यषेचयत् । अभिषिक्तश्च सुकेशः समुपात्तसभ्यजनसत्कारः सशरीरः प्रजानामानंदग्रंथिरिवाराजत । एतावता कालेन सवितापि सनाथस्य चित्रपुरस्य दिदृक्षयेव गगनमध्यमधिगतवान् । अंबरमध्यमधिगतवति सवितरि चण्डातपतप्यमाने चित्रपुरे निर्वर्तितमाध्यंदिननियमेषु भूसुरेषु प्रतिगृहं भिक्षाटनतत्परेषु वर्णिषु विरलतरजनसञ्चारेषु नगरमार्गेषु निद्रापरवशपारावतव्रातधूसरितेषु भवनविटंकेषु आतपासहिष्णुतया परिस्फुरदुदरपार्श्वकण्ठतलेषु दरविवृतवदनकुहरलंबमानारुणजिह्वापल्लवाग्रपतज्जलबिंदुषु भवनपटलप्रच्छायतले शयानेषु शुनकेषु माध्यंदिनशतघ्नीध्वानस्समुदचरत् । तदन्ववरुह्यासनात्स सुकेशो विसृज्य च सर्वानपि सभास्तारानासाद्य च देवतागारं निर्वर्तितदेवतासपर्यः ससुतेन जीवसेनेन सममभुंक्त ।

अथ नासातलनिबद्धेन पत्रभङ्गतरंगमनोहरेण द्विधा लंबितेन घनसाररोचिषा चीनांशुकेन धवलितप्रतीहारं विविधमणिमयवंदनमालेन विशदतरोल्लोचेन परिष्कृतोर्ध्वदेशं विनिहितशशोदरलोममृदुलैरुपधानैरलंकृतैर्नात्युन्नतैस्तपनीयमयैरासनैः क्रमशो निक्षिप्तैरुपेतं सर्वत्र प्रत्युप्तस्फटिकशिलाफलकतया अपरमिव श्वेतद्वीपं भवनं जीवसेनद्वितीयो निजकरावलंबिततत्पुत्रपाणिपल्लवस्सुकेशस्तांबूलदित्सया प्राविशत् । प्रविश्य च तं जीवसेनमुपवेश्य चासने स्वयमपि परिगृहीतासनो निजोत्सङ्गदेशोपवेशिततत्पुत्रः परिगृहीततांबूलं जीवसेनं कथं वनवासः ? कथमागमनमिह ? कथं वा चण्डालभावः । किमर्थं दयितापरित्यागः ? कुतो वानिर्वचनीयक्लेशपरंपरानुभवः ? इत्यपृच्छत् । पृष्टश्च जीवसेनः एवं वनवासः । एवमिहागमनम् । विदितमेवातःपरं इति व्याहरन्कंचित्कालं नीत्वा सुकेशमब्रवीत् । ननु जिगमिषा बलवती त्वरयति माम् । इयन्तं कालं प्रतिकूलदैवतया चैकत्र प्रतिबद्धोऽभवम् । वैरूप्यमन्वभवम् । अकार्यमकरवम् । हन्त ! इदानीं दैवानुकूल्यं कल्यमुपनतम् । तदितः परं न कार्यः काल-

विलम्बः। प्रथमं तावत्प्राथमिकीं मदेकजीवितामंबां वरमालिनीमवलोक्य निवेद्य च वृत्तं मदुदन्तं समाश्वास्य च, तदनु ततः प्रस्थितः जननीं रत्नचूडां पितरं वज्रबाहुं च द्रष्टुकामोऽस्मि। किंच वञ्चितपितृका जयंतिकापि त्वरयति निजपितृदिदृक्षया गमनाय माम्। तदादिश्य भटान्मद्वचनादागमिष्यति श्व एव भवत्पुत्र इति प्रेषय प्रथमं वैजयन्तीसमलंकृतां वैजयन्तीमिति। एवमुक्तस्तु स सुकेशस्सविनयं देव! कालमेतावन्तं भवतेहानुभूता दुःखपरंपरा। न हि सुखगन्धलेशोऽपि। तदिह कतिचिदिव दिनानि सुसुखं वसता देवेनास्माकं मनसि सौहित्यमापादनीयमित्यभ्यर्थयामास।

निशम्य सुकेशाभ्यर्थनां जीवसेनोऽयमवोचत्। नायमवसरो भवदभ्यर्थनानिर्वहणाय। अस्मज्जननी वरमालिनी मृगयानुयातं मां परिजनमुखादवकर्ण्य तदनु प्रचलितमतिविस्मयावहं मच्चरितं, कथंकथमपि मद्दिदृक्षया भवेद्धृतप्राणा। अहमपि कदा वा द्रक्ष्यामि तामंबामिति त्वराविशिष्टोऽस्मि। अतो न सुखायते स्थितिरत्र मे। किञ्च दारुणनिशाचरनिशारणाय कांतारं प्रति प्रस्थितस्य तावदेकाकिनो मम कापि वार्ता नैव याता वज्रबाहुश्रवणसरणिम्। तत्प्रबलमनुचिंत्य यातुधानं विधाय च मनसि तेन मां निषूदितं, दुःखितेन वज्रबाहुना किं वा व्यवसितमिति न जाने। पुत्रवत्सला सा तु रत्नचूडा मद्विरहजर्झरितहृदया प्राणिति वा न वा? तदनवरतमपि मे धावति मनस्तत्रैव। अतो न सुखायते स्थितिरत्रास्य मे। तत्प्रेषय त्वरिततरं मदागमननिवेदनाय भटान्वरमालिनीसकाशमिति। एवमनुज्ञातश्च स सुकेशो निरर्थकाभ्यर्थनः प्राहिणोत्त्वरितगामिभिः वाजिभिः पटुतरान्भटानरिभीकराम्। रविरपि भटप्रधावितानां तुरगाणां विजिगीषयेव स्पर्धाभरप्रधावितनिजवाहः परिश्रांतश्च गमनखेदादिव अरुणतरो विश्रांतिसुखलिप्सयेवोपसंहृतरश्मिनिकरः सिषेवे चरमगिरिसानुदेशम्।

तदनु निर्वर्तितसंध्याविधिर्जीवसेनः क्रमेणास्तंगते त्रयीतनौ कृतदेवता-सपर्यः सुकेशसहितः पुत्रेण सममाहारमकरोत्। अथ निर्वर्तिताहारया समागतया राजहंसपक्षवलक्षसमास्तीर्णमृदुलतरप्रच्छदपटेन क्षीरार्णवफेनपुंजकल्पेन स्पृहणीयकलधौतसमुत्कीर्णमरालपंक्तिपर्यंतपर्यंकपरिष्कृतमध्यदेशं संवेशनिवेशं प्राविशत्। तदनु सुकेशे निजशयनागारमुपेत्य जीवसेनतनयजुष्टं शयनीयमधिशयाने जीवसेनोऽयमनारूढनिद्र एव प्रियया परिपृष्टः निखिलमपि प्रचलितं निजवृत्तमेवं वनवासः; एवं श्मशानवाटपर्यटनं; एवं कुणपकर्पटादानं; एवं दुर्गागारद्वारप्राप्तिः; एवं पिष्टाशनेन कालयापनं; एवं प्राणिगणनिशारणकर्मसंयोजनं; एवं भवदाज्ञसैर्भटैः निषूदनाय पुत्रप्रापणं, एवं वत्सेन निजोदंतकथनं; एवं मत्प्रलपनं; इति व्याहरन्नेव क्षपयति स्म क्षपाम्। अथ निजतेजोभिभूतकौशिकप्रचारः मन्दंमन्दं नाकतलकृतपादः जाग्रद्द्विजव्रजकलकलरसितमुखरितदिगन्तरालः निजोदयम्लापितसप्तर्षिमंडलः गभस्तिमाली बलिरिवाराजत। ततश्च वंदिबृन्दप्रतिबोधितः समुत्थाय जीवसेनो जायया सह निर्वर्तितस्नानविधिः कृतसंध्योपासनः प्रवर्तितहवनकर्मा निर्वर्तितदेवतासपर्यः अभ्यर्चितभूदेवस्तोमः स्तोकमिव परिगृहीताभ्यवहारः गमनाय सज्जोऽभवत्।

अनुपदमेव सुकेशादेशात्सन्नद्धे सैंधवसैन्ये समधिरूढया निजोत्संगतलोपवेशिततनयया जयंतिकया समलंकृतं स्यंदनमधिरुह्य जीवसेनः सविनयं रथोपकण्ठस्थितं वीरकेतुं समाश्वास्य वेगे च गन्धवहसच्छात्रे वर्णे च तमिस्रमित्रं समुन्नतं तुरंगमवरमधिरुह्य वल्गात्कश्यतया वलितपृष्ठदेशं तं सुकेशं पुरस्कृत्य प्रतस्थे। प्रस्थिते च राजनि मारुतप्रेरितवाहिनीवीचिमालेव चचाल वाहवाहिनी। ततो जीवसेनो रथेनारण्यसरण्या गच्छंस्तुरगखुरपुटघट्टनधूलिपटलप्रच्छादितदिगन्तरालः कांतारमश्वगन्धैः पूरयन्नतिक्रांतानेकगिरिस्रवन्तीगहनपक्कणजनपदः गगनमण्डलमध्यं मण्डयति चण्डमयूखमण्डले श्रमजलस्नपितमवलोक्य हयषण्डं क्रियतामप-

गतपर्याणं सैंधववृन्दमिति समादिश्य स्वयमपि जायया सममात्मजेन च तमालतरुमूलप्रच्छायं सिषेवे । तदानीं वैजयंत्याः प्रतिनिवृत्तास्ते भटाः मध्येमार्गं विलोक्य शीतलशिलातले निषण्णं एकाकिनमुपसृत्य सुकेशं व्यजिज्ञपन् । देव ! तनयविरहदुःखपरित्यक्तवैजयन्ती जरती सा वरमालिनी नगरोपांतवर्तिन्युपवने विरचितायामनतिविशालायां शालायां तापसीव निवसति । तस्यै निवेदितमस्माभिर्देवागमनमिति । श्रुत्वा च भटोदितं स सुकेशस्सविनयमुपसृत्य जीवसेनं देव ! विश्रामितास्सलिलघासप्रदानेन तुरंगमाः । पूर्वेद्युः प्रेषिता भटा अपि देवीमवलोक्य प्रत्यागताः देवपाद-मूलम् । एतदवकर्ण्य देवः प्रमाणम् । इत्युक्त्वा विरराम ।

तदवकर्ण्यानुपदमेव जीवसेनस्तेषु भटेष्वेकतममाहूयापिकुशलिनी मे जननी वरमालिनी ? कथं वर्तते ? कीदृशी तस्याश्शरीरस्थितिः ? केन व्यापारेण सा क्षपयति कालम् ? किमभिहितं तयेत्यपृच्छत् । पृष्टश्च स भटः प्रह्वभावेन देव ! सा तु वृद्धभावसंकुचितगात्री पिंडीकृतेव तनयविरह-शोकदूरीकृतवैजयन्ती नगरोपांतोपवने कुटीरमधिवसति । देवागमनश्रवण-मात्रेणैव निरतिशयहर्षभरम्लिष्टप्रायेण स्खलता वचसा तात ! कथं मम वत्सः ! किमु समागच्छति ? अपि नाम सत्यम् ? क्व वर्तते ? तात ! कस्त्वम् ? अपि कुशलो वत्सः ? कदागमिष्यति ? अपि सत्यं ब्रवीषि ? अपि नाम स तु जीवति वा ? किमहं पुनरपि द्रक्ष्यामि तं पुत्रम् ? इत्यपृच्छत् । एवं सादरं पृष्टाश्च भुजिष्यादापितमधुरतरफलविशेषनिर्वर्तित-शरीरस्थितयो विसृष्टाश्च तया त्वरितं देवपादमूलमागता इति व्यजिज्ञपन् । अथ त्वरिततरं रथेन व्रजन्नासायं नातिदूरे च विविधानोकहनिवहमध्यगतं मेचककाचफलकघटितकवाटैरंतस्तरलदीपप्रसृमरकिरणांकुरतया तरलतर-सौदामनीरुचिरुचिरं जलधरमिव विडम्बयद्भिः पञ्चषैर्वातायनैर्मनोहरं इष्ट-कचितारुणवर्णभित्त्युपहसिताशोककुसुमस्तबकसौभाग्यं दारुमयकवाटयुगल-तया पिहितैककवाटेनानत्यायतेन दारुमयेन परिलिप्तदाडिमीकुसुमवर्ण-

रंजितेन पट्टिकात्रयप्रकटितदाढर्येन द्वारेणाभिरामं नीलशिलाफलककल्पित-सोपानत्रयपरिष्कृतदेहलीपुरोदेशं सद्यः प्रज्वलितदीपपल्लवारुणीकृताभ्यन्तरं सुधाधवलितभित्तिपरिगतमनत्युन्नतं कुटीरमद्राक्षीत् ।

दृष्ट्वा च मनस्येवमचिंतयत् । अहो ! सन्निवेशोऽयं हृदयंगमः परवशीकरोति मानसम् । शांतेरावासस्थानं इदम् । मौनस्याकरोऽयम् । गभीरतायाः कुलभवनमिदम् । निरंतरनिबिडानोकहनिवहोपगूह्यमानतया तमसा पातालमिव विडम्बयति देशोऽयम् । झिल्लिकारवकैतवेनांधकारकुहर-पतित इव दिग्भ्रान्तो रौतीव । वनमशकसंघप्रसृमरानुरणनापदेशेन पिशुन-यतीव किमपि कर्णे । मंदानिलचाल्यमानकुसुमितलताकैतवेन संज्ञयाह्वयती-वाभ्यंतरमिति । एवं विचिंतयन्नेव जीवसेनः वरमालिनीभवनमिदमेवेति विदित्वा भटमुखेन सुकेशसनाथमखिलमपि बलमनतिदूरे विसृज्य गत्वा-चाद्वारं स्यंदनेनैव तत्र च पुत्रपाणिमवलंब्य सह जयंतिकया रथादवरुह्य प्राविशद्भवनाभ्यन्तरम् । प्रविश्य च गलितपरिभ्रमणशक्तितया तपसैवा-नीतैर्भागीरथीप्रवाहैरिव कुटिलतरैः पलितकेशपाशैरभिरामोत्तमांगां सुखोप-भोगलिपिपंक्तिमखिलामपि परिमार्ष्टुकामेन वामेन विधिना कृतरेखाभिरिव वलिपंक्तिभिः विलुलितालिकतलां लंबमानपलितप्रसृमरभ्रूलतां समुन्नता-स्थिहनुतया कुहरगतेन गलितपक्ष्मपालिना कर्बुरकलुषितप्रांतमंडलकनी-निकेन नयनयुगलेन विकृतदर्शनां परिहृतताटंकतया विशालरंध्राभ्यां लंब-मानाभ्यां श्रवणजाहाभ्यां दर्शनीयां प्रसृमरवलितरंगाकुलतालुगर्तां निर्मांस-पार्श्वतया वैनतेयत्रोटिमनुकुर्वत्या नासिकया समुपेतां गलिताखिलरदन-राजितया पिहिताधरोष्ठपुटेन वलिविलुलितेन निरंतरमपि चञ्चलतया पदे पदे नासाशिखरं स्पृशता चुबुकेन मनोहरां वलितिलककलितया समुन्नत-सिराजालिकया स्तोकमिव लम्बमानया त्वचा पिनद्धगलां कीकसस्थ-पुटितकृकाटिकां समुन्नतनतकशेरुकां हृदयशोकानलशुष्काभ्यामिव लम्ब-मानाभ्यां स्तनभस्त्रिकाभ्यामुपेतां कीकसबहुलाभ्यां समुद्गतधमनिजालजटि-

लाभ्यां कंपमानाभ्यां पाणिभ्यां सायंतनजडपवनपीडासहिष्णुतया परिस्फुरत्स्फुलिंगांगारपूरितां हसन्तीं परामृशन्तीं गंडतलकृतजानु क्षितितलनिहितचरणयुगलं च समुपविष्टतया निर्मांसतया च सम्यगुपलक्ष्यमाणनलकांडां परिधृतश्वेतचीनांशुकां काषायरांकवावगुंठितगात्रीमसकृदारब्धजंभां वृद्धभावगलितदेहबलतया मुहुर्मुहुर्निसर्गनिस्सरद्धुंकारगर्भकफकलुषितगलनालां पार्श्वनिक्षिप्तानतिदीर्घवेणुदण्डां समीपे च निषण्णायै छुरिकया कंदमूलफलानि लावंलावं वेत्रलताभाजने निक्षिपंत्यै परिधृतचाषपक्षसदृक्षवसनायै वर्णे वयसि च श्यामायै कस्यै चिद्भुजिष्यायै किमपि पुरावृत्तं कथयन्तीं जरतीं वरमालिनीमपश्यत् ।

दृष्ट्वा च मनसीत्थमचिंतयत् । किमियं मम जननी सा वरमालिनी ? स्मर्यमाणमपि प्राक्तनमस्या रूपं नैवाधिरोहति मे स्मृतिपथम् । हन्त ! परिणामशीलायाः प्रकृतेर्माहात्म्यं ; या च तादृशस्याप्यस्या रूपस्य दशामीदृशीमुदपादयत् । अहो ! जराया वैभवं यया पिंडीकृतेयं । सौन्दर्यपरिपंथिनी खलु जरा । तथाहि—राक्षसीव क्षपितपिशितततिः तनोत्यस्थिपञ्जरावशेषं शरीरं। तमिस्रेव तिमिरेण तिरोदधाति नयनयुगलम् । उद्यदिंदुकांतिरिव धवलयति शिरोनैल्यम् । कलिकालश्रीरिव पातयति द्विजालिम् । अशनिरिव बधिरयति श्रवणविवरम् । प्रभुतेव दण्डावलम्बेन समुत्पादयति स्थितिम् । भीतिरिव कंपयति गात्रम् । सुरेव वचसस्समुपजनयति स्खालित्यम् । मूर्च्छेव स्रावयति सृक्कभागे सृणिकाम् । उन्मत्तेव तिरोदधाति स्मृतिपथम् । गणिकेव वशीकरोतींद्रियाणि । हन्त ! जरा निपीततयेव शुष्कलावण्यामृतपूरौ परिदृश्येते कपोलगतौ । उच्चतलविलसन्मुखकमलसौन्दर्यद्रविणापहरणाय जरया विस्तृताभी रज्जुमयीभिः निश्श्रेणिभिरिव पृथुलसिरापरंपराभिः स्थपुटितेयं तनुः । वृद्धभावशिथिलितसंधिबन्धानामंगानामनिष्पतनायेव जरासंघट्टितायोमयशंकुभिरिव तिलकबिंदुभिराचितमिदं वपुः । गलितलावण्यामृतप्रवाहतयेव वलिविलुलितमृदुलतरत्वगियं विल-

सत्यचिरगतसलिलपूरा तरंगितमृदुलतरविशदसिकता निम्नगेव। अपिनामेय-मवगच्छति मामात्मतनयं ? कथमस्यास्समुत्पादयामि मयि तनयत्व-प्रत्ययम् ? केन वाभिज्ञानेन निरूपयामि मां चारुवक्त्रम् ? अपिनामोदेति मयि वात्सल्यमस्याः ? भवतु तावत्कथमप्युत्पादयामि तनयत्वप्रत्ययं प्रयत्नेनेति विचिंत्य सविनयमुपससर्प।

उपसृत्य च मातश्चारुवक्त्रः प्रणमतीति प्राथमिकमात्मनो नामधेयमेव व्याहरन्सहधर्मिण्या सह प्रणम्य सविनयं तस्थौ। सा तु वरमालिनी भ्रुकुटितभ्रूतलवलभीकृतवेपमानदक्षिणपाणिस्समुन्नमितसिराबहुलशिरोधिः कोरकितसलिलकलुषितलोचना डोलायमानचुबुकतला गलिताखिलरदनतया समुद्गलल्लालाजलमसकृद्गिलन्ती कंपमानाधरोष्ठपुटा विलोक्य जीवसेनं दुर्बलतया मुहुर्मुहुर्हुंकारगर्भं तात ! कस्त्वम् ? उपकण्ठमायाहि। तिमिरतिरोहितनयनतया न सम्यग्गोचरीभवसि। समुपविश समीपे। पश्यामि तावद्भवन्तम्। इति म्लिष्टप्रायमब्रवीत्। ततश्च जीवसेनस्समुपवेश्यात्मजमंकतले जननीसकाश एवोपाविशत्। वरमालिनी तस्य प्रभामिव पार्श्वे एव स्थितां दक्षिणकरकमलतलशायितकपोलफलकां निजोदरदेशतिर्यक्कृतवामप्रकोष्ठां जयंतिकां सुचिरं निर्वर्ण्य तात ! केयं मूर्तिमती राज्यलक्ष्मीरिव विलसति भवतः पार्श्वे ललनामणिः ? कोऽयं बालकः ? केसरिकिशोर इव भूभृत्सानुदेशं तवोत्संगमलंकरोति ? न शृणोति बाधिर्येण श्रवणयुगलं दरमपि। तदुच्चैरुच्यतामेतदखिलमपीत्यब्रवीत्।

तदा नरपतिरखिलमपि मृगयागमनमारभ्य निजोदंतमुच्चैर्व्यजिज्ञपत्। श्रुत्वा चाद्भुततरमुदन्तं वरमालिनी हर्षप्रकर्षद्विगुणिताश्रुसलिला कीकसबहुलेन दक्षिणपाणिना परामृशन्ती जीवसेनोत्तमांगं तात ! दिष्ट्या मन्नयनपथमागतोऽसि। विचित्रा खलु दैवी गतिः। क्व नागकन्या ? क्व च शापोपहतस्स सुगंधनः ? कथमिव च तयोस्संगमनम् ? कथं वा तस्याः निजापत्यपरित्यागे समुत्पन्ना मतिः ? आयसं खलु तस्या हृदयम् !

कथं वा कांतारे जननीपरित्यक्तस्य रोदनैकतानस्य शिशोः दुर्गतविप्रप्राप्ति-रित्यादि प्रचलितं दुःखबहुलमपदानमेव व्याहरंती किं ब्रवीमि ? यन्मे सुचिरं प्रणष्टस्य भवतो वदनारविंददर्शनमुपनतम्। तत्रापि स्नुषायाः पौत्रस्य च समायोग इति, तत्तु वाचामगोचरं विस्मयमुपजनयतीति मुहु-र्मुहुः पौत्रं शिरस्याघ्राय निजोत्संगमारोप्य च परामृशन्ती समीपमाहूय च स्नुषां निजपार्श्वे एवोपवेश्य संलपन्ती परां काष्ठामानंदस्यानुबभूव।

तदनु वरमालिनीमनुकुर्वतीवामोदभरमंथरवातिसमीरे घूकमिथुन-केलिकलहरवमुखरिते कांतारांतरे तरुगिरिकुहरेषु तिमिरसारूप्यमधिगतेषु कांतारेऽपि वरमालिनीशरीर इव संकुचिते तिमिरनिकरैरिव मशकनिवहैरपि समाक्रांते वनप्रांते पर्यटनपरखद्योतव्रातेन नक्षत्र इव शाद्वलतले समुच्चरति च घण्टादशकशंसिनि तारतारे शंखरवे अदूरवर्तिन्यां वैजयन्त्यां नीरवायां कंदमूलफलैः निर्वर्तितशरीरस्थितिः स्वयमेक एव दारुमयं पर्यंकमधिशिश्ये। वरमालिन्यपि शाययित्वा निजदक्षिणपार्श्वे जयंतिकां वामपार्श्वे च पौत्रं संकुचितक्रोडतलप्रवेशितकीकसप्रायजानुयुगला धवलकंबलावगुण्ठितकृशतर-शरीरा मृदुलतरे शयनीये शयाना परामृशन्ती पाणिना पार्श्वशायितं पौत्रं हन्त ! वत्स ! जननीनिदेशेन पित्रा साक्षान्निकृत्तकंधरोऽपि दिष्ट्या समधिगतप्राणोऽसि। तात ! कथं सोढा तदा हिंसा भवता ? अंब ! वत्से ! भवत्यापि कथं क्लेशपरंपरानुभूता ? भवद्धैर्यमनुचिंत्य विस्मया-श्लिष्टहृदयास्मि। अहो ! ते धीरता। हन्त ! उद्योगशीलता। बत ! निर्भयता। हन्त ! कष्टसहिष्णुता। बत ! पतिपरायणतेति व्याजहार। अंब ! सत्यमभिहितं भवत्या। विस्मयावहैव दैवचेष्टा। शृणोतु भवती निखिलमपि। निश्शेषं निवेदयामि। एवं वनवासः। एवमार्यपुत्रवियोगः। एवमामध्याह्नं कठोरे कांतारे परिभ्रमणम्। एवं तापसीसंयोगः। एवं पुत्र-जननम्। एवं पुत्रवियोगः। एवं राज्यप्राप्तिः। एवं पतिपुत्रयोरन्वेषणम्। एवं प्रणष्टाया माणिक्यमालाया लाभः। एवमार्यपुत्रपुत्रयोर्दर्शनमिति

जयंतिकयोच्यमानं मानातीतविस्मयावहं वृत्तं शृण्वती मुहुः जृंभमाणजृंभा क्षणमप्यनारूढनिद्रा त्रियामा-यामद्वयमत्यवाहयत्।

तदनु तृतीये यामे मन्दगन्धवाहांदोलिते विटपिविटपपटले काककुलकोलाहलाकुले नाकतले विकसत्कुसुमविसरप्रसृमरपरिमलबहुले गहनांतराले मन्दं प्रसरणशीले तुहिनशीतलेऽनिले मंदालोकेन क्रमशो विस्तार्यमाणे दिक्कोणे शिखावलकेकानादमेदुरे कांतारांतरे लब्धप्रबोधो जीवसेनः पर्यंके शयान एव सजृंभारंभं विरचितांगभंगदूरीकृतालस्यः अंब! कथममात्यो मरुन्मालः? किमर्थमुज्झितो भवत्या वैजयन्तीवासः इत्यप्राक्षीत्। एवं परिपृष्टा च वरमालिनी तात! मरुन्मालः पञ्चषेषु दिवसेष्वेकवारमासाद्य विचारयन्मां प्रतिगच्छति राजधानीमेव। जरन्नपि स तु प्रजावनधुरंधरः यावद्भवदागमनं तावन्नरपतिरिव भवेति मया समाज्ञप्तः वर्तते परतन्त्रः। पुनरपि भवदागमनोदन्तो भटैरेवावेदितो मृगयाप्रतिनिवृत्तैर्भवदनुचरैः सगद्गदमेवमुदीरितम्। देवि! कुमारस्तु मृगयायां कुरंगानुयायी समुपरतः इति पूर्वोदन्तमभिधाय मुहूर्तमिव तूष्णीं स्थित्वा देवि! मा प्राणत्यागपरा भव। यस्मात्तपोधनेनोक्तं दास्यति कुमारो दर्शनमिति, तदाहं कुमारागमनपर्यन्तं भवतैव वोढव्यो राज्यभार इति न्यवेदयम्। अहं पुनः नैव वसामि सौधे। नगरोपांतोपवने परिकल्प्य कुटीरं तत्र वसामीति।

एतन्निशम्य स सचिवो मुहूर्तमिव स्थित्वा दीर्घं निश्वस्य निरगात्। ततश्चाहमत्र समुपकल्पितमिदं वासभवनमासाद्य भवद्दिदृक्षया प्राणिमीत्यब्रवीत्। एतावता च कालेन भगवान्लोकबांधवः नगर्याः प्रतिप्रासादवातायनाभ्यंतरप्रसारितकरः प्रसुप्तान्प्रबोध्य पौरान्नरपतिनूतननगरप्रवेशदर्शनाय त्वरयितुमिवोदयशिलोच्चयशिखरादुदचरत्। जीवसेनस्तु सपदि समुत्थाय तल्पात्प्रागेव समुत्थितां जयंतिकां सुप्तोत्थितं निजतनयं चावलोक्य प्रक्षालितवदनारविंदः पर्यंक एव निषण्णो नातिदूरादापतन्तं स्थूलस्थूलस्थपुटितेन विशदतरेणोष्णीषेण राज्यरक्षणोपात्तेन मूर्तिमता

यशःपुंजेनेव परिष्कृतोत्तमांगं प्रत्युप्तपृथुलपद्मरागरंजिताभ्यां कुंडलाभ्यां रहसि प्रीत्यतिशयावेदनाय प्रजाभिः पिंडीकृत्य प्रेषिताभ्यामिवानुरागाभ्यां परिमंडितोच्छूनलम्बमानश्रवणपाशं पलितशीर्णलम्बमानभ्रूयुगलं ललाटमध्यविनिहितकुंकुमस्थासकेन प्रकटयंतमिवेश्वरभावं सर्वदा वदननिस्सरत्तथ्यवचनसलिलक्षालिततयेव गलितकृष्णवर्णेन श्मश्रुकलापेन परिष्कृतोष्ठोर्ध्वदेशं पलितश्मश्रुकलापधावल्यावलोकनापत्रपयेव गलितरदनपंक्तिना वलिविलुलिताधरोष्ठपुटेन निरंतरकंपमानवदनप्रचाल्यमानचुबुकं मानससरस्समुड्डीयमानया अवदातगुणराजहंसपंक्त्येवैकावल्या समाश्लिष्टेन समुच्छूनचलाचलगलास्थिपिंडेन समुन्नतसिराततवलितरंगितत्वचा कंठेनोपशोभमानं स्निग्धतरांजनाभेनाजानुलंबिना तनुत्रेणावगुण्ठितकायं सलिलभरलम्बमानवलाहकाच्छादितसानुदेशं जङ्गमं शिखरिणमिव यज्ञोपवीतवत्कृतस्पृहणीयपत्रभङ्गसुभगतपनीयमयपट्टिकं परिस्फुरत्सौदामनीकं वारिवाहमिव धर्म्यात्पथोऽनपेततया करगतेनेव कालपिशुनेन कालचक्रेण तनुतरतपनीयपट्टिकाबद्धेन चक्राकारेण शातकुंभमयकालयन्त्रेण रमणीयवाममणिबन्धं प्रजानामपराधानुरूपकृतदंडतया संक्रांततद्दुरितनिचयेनेवासितवर्णेन सुवर्णपट्टिकापरिष्कृताग्रभागेनानतिस्थूलेन मसृणतरेणानरालकृष्णकाकोदरभोगनिभेन दंडेन परिमंडितदक्षिणपार्णिं पयःपारावारफेनपिंडविशदेनागुल्फावसक्तेन चण्डातकेनालंकृतोरुकांडं अशरण्यतया नमस्कुर्वता स्थित्यभ्यर्थनाय चिकुरगतनीलिमपुंजेनेव मसृणतरेण कृष्णवर्णेन पादयुगलेन परिमंडितचरणयुगलं पौरमुख्यैरनुगम्यमानं जराभिभूतमपि जरत्केसरिणमिवापरित्यक्तमहासत्वं नवतिवत्सरदेश्यं सचिवावतंसं मरुन्मालमपश्यत्।

दृष्ट्वाचांब! स महात्मा सकलतन्त्रपारदृश्वास्मदर्थं दुरूढमपि राज्यभारं प्रज्ञाबलेन सुसुखमियन्तं कालं साधूढ्वा वात्सल्यातिशयादस्मत्तातनिधनदुःखमपि विस्मारयन्नस्मद्दिदृक्षयाभ्येति मरुन्माल इति जनन्यै न्यवेदयत्। श्रुत्वा च वरमालिनी वत्स! भवत्पितुरपि गुरुमतिवाचस्पति-

मतिवैभवं भवच्छुभोदर्कतर्कैकतानं तत्रभवन्तं सचिवावतंसमभिमुखीभूय सादरमानयेति जगाद । जीवसेनः बाढमित्युत्थाय प्रत्युद्गम्य च बद्धांजलिपुटस्सादरमानिनाय । मरुन्मालस्तु विसृज्य च निखिलानप्यनुचरान्बहिरेव स्वयमेकाकी प्राविशन्मंदिराभ्यन्तरम् । प्रविशति च तस्मिन् जीवसेनस्सभार्यः प्रणम्य सप्रश्रयं कृतकुशलानुयोगः सुखागमनमपृच्छत् । पृष्टश्च स मरुन्मालो निजहस्ते निक्षिप्तं भुवनमंडलं सुवर्णमयं विधाय प्रत्यर्पयन्निव निक्षिप्य जीवसेनहस्ते जम्बीरफलमिदानीं कुशली सुखी च । यतश्च भारोद्वहनाक्षमे मयि निक्षिप्तं क्षत्रावतंसांसतलैकोद्वाह्यं राज्यभारममुं पुनरपि त्वय्येवावतारितवानस्मीति न्यवेदयत् ।

निशम्य तद्भाषितं जीवसेनस्समंदस्मितं भक्त्या च स्वात्मनि प्रलीन इव प्रह्वभावमवलंब्य सचिवावतंस ! न तावद्भाजनं जनोऽयमीदृश्यास्सपर्यायाः । किंत्वनुग्राह्यः । यदस्मत्पितृभागधेयात्पूर्वदेवसार्वभौमस्योशनसेव विबुधेश्वरस्य धिषणेनेव तत्रभवता भवता तावदंगीकृतं साचिव्यमिदम् । किञ्च भवादृशस्तावदंकुशो राज्ञां कंदर्पदर्पवारणदर्पनिवारणे । प्रग्रहो विषयग्रहणव्यग्रसमग्रेंद्रियग्रामगंधर्वगर्वनिर्वापणे । सविता मोहांधकारप्रशमने । कलानिधिः कुवलयोल्लासे । दावानलो व्यसनवनगहनस्य । संकेतभूमिः राज्यलक्ष्म्याः । रत्नाकरो रत्नसञ्चयस्य । प्राकारः परलोकाक्रांतेः । कुठारो दुर्नयतरुषंडस्य । जलदोदयः प्रत्यर्थिप्रतापातपस्य । वैनतेयो भुजङ्गकुलस्य । पद्मतरुः कीर्तिउतालयाः । आकरो मंत्रतपनीयस्य । रत्नस्तम्भः प्रज्ञाप्रासादस्य। उदयगिरिः अभ्युदयारुणस्य। जांगलिकः पैशुन्यकालकूटस्य। वातूलोऽयशस्तूलस्य। अपि च यस्य प्रज्ञाबलेन विराजते वैजयन्तीयमधुनापि धृतास्मद्विजयवैजयन्ती। यस्य चोपायचतुष्टयेन सर्वाः प्रजाः प्रजानिर्विशेषाः कृताः । यस्य च मतिवैभवेन परिपन्थिनो राजानो युवानोऽपि वनोपांतवासिनो बभूवुः। किं बहुना ! मदीया स्थितिरपि यदायत्ता । तादृशस्य भवतश्छायानुवर्ती भुवनभारमुद्वोढुं अहमभिलषामीत्यब्रवीत् ।

अथ जीवसेनप्रार्थनया परिगृहीतासनो मरुन्मालः प्रणतं नरपतिकुमारं सादरं सप्रेमादाय पाणिभ्यां समुपवेश्योत्संगतले पर्यंकोपविष्टेन जीवसेनेन सादरमवलोक्यमानः राजन्! दिष्ट्या पश्याम्यपहसितभवद्रूपं कुमारमेनं कुमारमिव। परित्यक्तकमलां कमलालयामिव रूपेन गुणेन च भवदनुरूपां भार्यामपि दिष्ट्यावलोकयामि। एतावत्पर्यन्तं क्लेशपरंपरया भवता नीतः खलु सकलोऽपि कालः। तदितः परं सुसुखं प्रजाः परिपालयन्निर्वर्तय क्रतुकर्म। सर्वमप्यन्यन्निर्वर्तितमेव भवता। पुत्रोत्पादनेन पितृणां ऋणमपि अपोहितम्। दिग्विजयेन संपादिता सार्वभौमपदवी। दंड्यान्दंडयता स्थापितो धर्मः। दर्शनदानेनाधुना जराजीर्णजननीहृदयलग्नं शोकशल्यमप्युत्पाटितम्। पुनरपि राजधानीमासाद्य राज्यभारोद्वहनेन विश्रामितो ममांसदेशः। तन्नगरप्रवेशेन सफलीकर्तुमर्हसि प्रजानां नयनानीत्यकथयत्। तदनु जीवसेनः सविनयमंब! भवतीमपि निनीषामि राजधानीम्। सर्वथा तावदियन्तं कालं क्लेशप्रायमतिवाहितं भवत्या क्लेशमय्या। इतः परं वा पौत्रमवलोकयन्ती स्नुषाक्रियमाणया शुश्रूषया विस्मृतचिरंतनकष्टपरंपरा भवतु भवती। तदारोहतु रथमिति प्रार्थयामास। एवं प्रार्थिता सा वरमालिनी वत्स! राज्यसुखानुभवोचिते वयसि नैव मे ललाटे लिखितो विधिना राजधानीवासः। किमधुना वैखानसवृत्त्या स्थातव्ये वयसि नगरवासेनातिक्रांतविधिसङ्कल्पा भवितुं न कल्पते तावदयं जनः। वनवासाय क्लेशपरंपरानुभवायैव नियत्या सृष्टेयं वरमालिनी। तदलमनया प्रार्थनया। पदेपदे भवन्तमिहागच्छन्तं पश्यन्ती भगवद्ध्यानपरा परलोकदत्तदृष्टिः कालमतिवाहयामीत्यकथयत्।

तदा जीवसेनस्सुचिरं विचिंत्य च मातः भवत्या समुदीरितमप्युचितमिव प्रतिभाति। तद्यथा रोचते भवत्यै तथैव निर्वर्तनीयं हि पुत्रेण मया। तन्नाहं निर्बन्धेन भवतीं नयामि नगरीम्। देहि मे पुरप्रवेशाय सानुग्रहमनुमतिमिति पर्यंकादुत्थाय प्रणनाम। प्रणम्योत्थितं तं पाणिना

परामृशन्ती वरमालिनी वत्स ! प्रविश भवदीयां राजधानीम् । सुसुखं धर्मेण प्रजाः परिपालय। वयसा ज्ञानेन च वृद्धमेनममात्यावतंसं मरुन्मालं विना मा कुरु किमपि राजकार्यम् । इतःपरं परित्यक्तव्यसनासक्तिः वर्तस्व धर्म्ये पथि। स्वतः प्राज्ञाय ते मया पुनः न किमपि वक्तव्यमस्ति। विषयनिघ्नचित्तवृत्तिर्माभूः। प्रभुता तावदसिधारेव। तदनवरतमप्याहित-चित्तावधानो भव। कर्षंति विषयाः विषयिणः। तद्दृढगृहीतमनःप्रग्रहो भव। याहि वत्स ! पुनर्दर्शनाय। चिरं जीव। भद्रमस्तु ते। इत्यभि-धाय प्रणम्योत्थितां जयंतिकामवलोक्य वत्से ! निर्वर्तिताद्भुतकार्यायै ते किमस्ति वक्तव्यम्। निरंतरमपि पतिशुश्रूषापरा भव। दुरधिगमे राज्य-कर्मणि पत्युस्साह्यकरणेनार्धदेहतां प्रकटयन्ती वल्लभशुभोदर्कतर्कणैकताना छायेव सवितारं तारापतिं रोहिणीव दयितमनुवर्तमाना मानातीतयशोभा-गिनो सुसुखं चिरं जीवेति शिरस्याघ्राय प्रणतं पौत्रं समाश्लिष्य प्रचुंब्य च तात ! इयन्तं कालं कृतग्रामवासतया भवता नैव गृहीतो विद्यागन्धोऽपि। नापि संपादितो राजपुत्रानुगुणस्सहवासः । किं तु द्वादशाब्दपर्यन्तं ग्रामीण इव वर्धितोऽसि। तदितो गुरुशुश्रूषया सर्वा अपि विद्यास्समधि-गत्य लोकतंत्रनिष्णातो भवेति व्याहृत्य सर्वानपि विसर्जयामास।

ततश्च जीवसेनः पुरप्रवेशोचितालंकारालंकृतो जयंतिकां तनूजं च स्यन्दनमारोप्य स्वयमारूढतुरंगमः सज्जेन सैंधवसैन्येन परिवृतो हयाधि-रूढं पुरस्कृत्य सुकेशं सचिवानुगतैः पौरैरभिवन्दितो विचित्रवादित्रनाद-प्रकाश्यमानोत्सवाडंबरो दंडमवलंब्य मंदमाद्वारमागतया वरमालिन्या सादरमवलोक्यमानः शतांगोपविष्टेन मरुन्मालेन सह पुराभिमुखं प्रतस्थे। प्रस्थितश्चांशुकैर्मानवैश्चानेकवर्णमयीं व्याहारैर्वाद्यैश्च शब्दमयीं प्रतिप्रासादं संघीभूतविलासिनीव्रातविभूषणमणिगणप्रसृमरामितप्रभापरंपराकृतवितान - शोभामुन्निबद्धाभिनवप्रसूनरसालपल्लवापहसितवसंतसंपदं प्राविशद्वैजयंतीम्। प्रविश्य च राजमार्गेण प्रस्थितः स्तूयमानः पौरैः पीयमानश्च नयनाभ्यां

नारीभिः प्रविवेशालंकारसुभगं सौधम् ।

प्रविश्य च द्वितीयकक्षांतरप्रतिष्ठापिते कलधौतपीठे समुपविष्टः देव ! ये ये पुरा यत्र यत्र चाधिकृताः ते सर्वेऽपि वृद्धाः कालधर्ममुपयाताः । मया तु तत्र तत्रैव तद्वंश्या एव नियुक्ताः । अयं तु कोशाध्यक्षस्य पौत्रः । अयं गजघटाधिकारिणः पुत्रः । नप्तायं सैंधववृन्दसेनापतेः । असौ प्राड्विवाकस्य तनयः । एष लब्धावरोधाधिकारस्थानपत्यतया तस्य मातुलेयः । अयमक्षोहिणीपतेः पुत्रः । अयं शिल्पिगणाधिकारिणो विचक्षणः पौत्रः । अयं पंडितमंडलाध्यक्षस्य वैमात्रेयः इति मरुन्मालेन निर्दिश्य निर्दिश्यावेद्यमानान्क्रमशः प्रणमतः परिजनान्यथोचितमाभरणादिप्रदानेन सन्तोष्य विसृष्टसकलपरिजनो विसृज्य च नरपतिसमुचितमनेकभोगोपकरणसंभृतं सौधं प्रति सुकेशं, समुत्थाय चासनान्मरुन्मालमपि सादरं संप्रेष्य स्वभवनं प्रति तत्कालोचितपरिजनपरिवृतोऽभिषेकगृहे निर्वर्तितस्नानविधिः कृतभवनदेवताभ्यर्चनः तनूजेन सह निर्वर्तितशरीरस्थितिः शुद्धांतमासाद्य कृताहारतया जयंतिकया सहारिभीकरादिप्रयाणे मुहूर्तमिव सल्लपन्परिगृहीततांबूलः तत्रैव विश्रांतिसुखमनुबभूव । तदनु पश्चिमाचलशिखराद्युगत्रयपरिमिते गगनदेशे काशमाने चांशुमालिनि मंदायमानातपे दिवसे जीवसेनः स्वयमेक एव रथाधिरूढः पुनरपि पुरोपकण्ठवर्ति वरमालिनीभवनमासाद्य तत्र च प्रहृष्टचेतसा जनन्या सह कंचित्कालं तास्ताः कथाः कुर्वन्प्रसङ्गाद्गतस्य शुभेहनि चिकीर्षुरस्मि नामचौलोपनयनादिकर्मेति निवेद्य दत्तानुमतिस्तया विसृष्टश्च निजभवनमेवाससाद ।

एतावता कालेनास्तंगते गभस्तिमालिनि निर्वर्तितसंध्याविधिर्जीवसेनो भुक्त्वा चांतःपुरमधिगत्य जयंतिकया तनयोदंतमुदीरयन्नुच्चरति दशघंटाशंसिनि शङ्खरवे निद्रासुखमनुबभूव । एवमेवातिवाह्य पञ्चषान्वासरान्षष्ठे अहनि शुभे मुहूर्ते विधाय च तनयस्य नाम वीरसेन इति निर्वर्त्य च चौलोपनयनादि कर्म निर्मर्यादद्रविणार्पणतर्पितभूदेववर्गो भक्ष्यभोज्य-

चोष्यलेह्यपेयादिपरिवेषणेन समाराध्य च सर्वानपि पौरान्निरतिशयमानंद-मनुबभूव। अथापरेद्युर्जीवसेनो वरमालिनीभवनमासाद्य निवेद्य चारिभीकरां प्रति प्रयाणं प्रणम्य च, जनन्या वत्स ! क्षिप्रमेव प्रत्यागच्छ। न हि तत्रैव विलम्बस्व। कथमपीयन्तं कालं भवद्विरहस्सोढः। न पुनरितः परं भवद्वियोगक्लेशितहृदया जरती प्राणिमि। तदचिरात्पुनरपि प्रयतस्व दर्शनदानाय। शिवास्संतु पन्थानः प्रस्थितस्य ते। याहि वत्सेत्यभिधाय विसृष्टः, अंब ! अरिभीकरां गत्वा च प्रथमं तत्र चोषित्वा पञ्चषान्दिव-सांस्ततश्च प्रयास्यामि हेमपुरम्। तत्रत्यामवगम्य स्थितिं ततः प्रयतिष्ये प्रत्यागमनाय। तन्मा क्लेशय मद्गतया चिंतया जराजीर्णां तनुतरां तनुमित्य-भिधाय तस्माद्भवनान्निर्गतो निजभवनमभजत।

अथ निजादेशेन सन्निहितं सुकेशं तदनुगुणसत्कारेण सत्कृत्य विसर्जयामास चित्रपुरं प्रति। विसृज्य च मरुन्मालेन लब्धानुमतिः कतिपयहयबलपरिवृतो जयंतिकावीरसेनाभ्यां सज्जं स्यन्दनमधिरुह्य प्रतस्थे। प्रस्थितश्चानुसरतः प्रतिनिवर्त्य तत्तदधिकारिणः सत्वरं व्रजन्मध्येमार्गं विश्रम्य प्रस्थितश्चातर्कितास्मदागमनमवकर्ण्य ससंभ्रमं प्रधावितामित-परिजनमुखात्पितरौ दिदृक्षया प्रासादद्वारमासाद्य समवेक्ष्य च प्रमोदभरेति-कर्तव्यतामूढौ सत्यप्याज्ञासंपादनव्यग्रे परिजने स्वयमेव स्यन्दनोपकण्ठ-मुपेत्य सहस्तावलंबनमवतार्य च स्यन्दनान्नेष्यतस्सौधाभ्यन्तरम्। नीत्वा च ससंभ्रमं परिधावितपरिजनोपनीतैर्भोगोपकरणैरस्माकमध्वपरिश्रमं परि-हरिष्यतः। कथं यातुधाननिषूदनम् ? कुत्र विवाहः ? प्रत्यागमनाय कुतस्तवेयान्कालविलम्बः ? किमर्थमियतापि कालेन भवद्वार्तापि न श्राविता ? दिष्ट्या चिरादस्मन्नयनपथमागतोऽसीति व्याहरन्तौ परां काष्ठामानन्दस्य तावदनुभविष्यतः इति जयन्तिकां प्रति निगदन्नेव वेगेन पिबन्निवाध्वानं कृतप्रयाणः आसायं तावदाससादारिभीकराम्।

प्रविश्य च कोऽयमिति प्रासादद्वारगतैः द्वारपालैरवलोक्यमानः

पृष्टश्च तैः कस्त्वमिति निवेदितस्ववृत्तान्तः प्रविश्य च सौधाभ्यन्तरमनवलोक्य च पितरौ समुद्विग्नहृदयः सन्निहितं मगधाधिपतनयं निजमातुलेयं हंसध्वजमपृच्छत् । पृष्टस्स हंसध्वजः समुपविष्टमासने साक्षाद्द्रष्टा जीमूतनामा जरत्तरोऽयं कंचुकी निवेदयति भवत्पितृगतमखिलमप्युदन्तं देवायेति न्यवेदयत् । तदनु जीमूतस्सबाष्पं वक्तुमारभत । इतः प्रयाते च देवे निशाचरनिशारणाय अशरण्याविव पितरौ देवस्य प्रत्यागमनमेवानुपालयन्तौ मासपर्यन्तं देवे चाप्रतिनिवृत्ते समुद्विग्नमानसौ संप्रेष्य चान्वेषणाय परिजनाननवरतमपि तस्य चण्डद्रंष्ट्रस्य चण्डतामेकाकिनो देवस्य तदभिगमनं च स्मारंस्मारं साध्वसध्वस्तचित्तौ कथंकथमपि शोकदीर्घदीर्घं कालमत्यवाहयताम् । प्रस्थितास्तु देवस्य मार्गणायानुचराः प्रतिनिवृत्ताश्च सविनयं देव ! सर्वत्र कांतारे मृगितोऽपि नैवोपलब्धः कुमारः । नाप्यवगता तस्य स्थितिरपि । पुलिंदैरपि नाभिहितम् । वयमितिकर्तव्यतामूढाः प्रतिनिवृत्ताः इति सनिर्वेदं व्यजिज्ञपन् ।

तत्प्रभृति देवी रत्नचूडा विजृंभमाणहृदयपीडा प्रवर्धमानाधिः देवनामैवोच्चरंती परित्यक्ताहारा क्रमेण क्षपितगात्री शयनीये पातितशरीरा परिजनमनसि महतीं चिंतामुदपादयत् । एवं क्रमेण क्षीणशरीरदृश्यमानास्थिपञ्जरा व्याहारमप्याहारमिव तत्याज । एवमनिशमुत्तानशया साक्षाद्देवेन वज्रबाहुना मुहुराहारग्रहणायाभ्यर्थितापि नैव चचाल । एवं कतिपयदिनाभ्यन्तरे भुवनं निरालम्बमकरोत् । तदा वज्रबाहुः दुःखभरतप्यमानमानसः शोकातिरेकजर्झरितहृदयैस्सचिवैस्समाश्वासितः निर्मर्यादनिर्वेदचित्तो मगधेश्वरतनयं हंसध्वजमेनमानाय्य वत्स ! जिगमिषुरस्मि तपश्चरणाय हिमवन्तम् । तन्माभूदिदं राज्यमराजकम् । इति भवानाहूतः । यद्यागच्छेत्कदापि स कुमारो जीवसेनः जीवंस्तदा तस्मै समर्पयेत्युक्त्वा तपसे ययौ । निशम्य जीवसेनो निजमातुर्निधननिदानमात्मानं मन्यमानोऽश्रुक्लिन्नकपोलो विष्टरादुत्थाय कृतस्नानविधिः विषण्णहृदयया

कृतस्नानया जयंतिकया सह कृताभ्यवहारः शयनपातितशरीरः पितृगतास्तास्ताः कथाः कुर्वन्ननारूढनिद्र एव निजबाष्पधारामिव शोकदीर्घां तां त्रियामामत्यवाहयत् ।

अपरेद्युरुत्थाय स्रोतस्विनीकृतावगाहनो निर्वर्तितशरीरस्थितिः यावदहं हेमपुरात्प्रत्यागमिष्यामि तावदिहैवास्वेत्यादिश्य हंसध्वजं तेनैव वाजिव्रातेन परिवृतो जयंतिकावीरसेनाभ्यां सममधिरुह्य शताङ्गं हेमपुरं प्रति प्रतस्थे । प्रस्थितश्च व्रजन्, नन्वरिभीकरायामेकपद एव भग्ना हि पितृदर्शनोत्सुकितस्य मे मनोरथसंततिः । न जाने हेमपुरे च कीदृशी परिस्थितिरिति । तत्रापि भवेद्भवद्विरहदुःखिता हेमवत्यपि परित्यक्तप्राणा । तव पिता सत्यकीर्तिरपि कीर्तिशेषो भवेदेव । धिगेनं माम् । यदहमेव सर्वस्याप्यनर्थस्य निदानमिति बाष्पाविलेक्षणां जयंतिकां प्रति प्रकथयन्नपरिमितचिंतासंतानकलुषितस्वांतो गच्छन्नेव तं दिवसमतिवाह्य सायंसमये हेमपुरं प्राविशत् । प्रविश्य च प्रासादद्वारमासाद्यापिकुशली सत्यकीर्तिरपिकुशलिनी हेमवतीति द्वारपालमपृच्छत् । पृष्टश्च द्वारपालः कुशलिनावेव । के यूयम्? कुत्रत्याः? किमु संस्तुता राज्ञः? इत्यपृच्छत् ।

पृष्टस्स जीवसेनः तात! निवेदय तावद्राज्ञे जामाता ते दुहित्रा जयंतिकया सह भवद्दिदृक्षया द्वारि तिष्ठतीति प्राहिणोदभ्यन्तरम् । अंतः प्रविष्टस्स तु द्वारपालः तस्मै राज्ञे सविनयं न्यवेदयत् । देव ! दुहित्रा जयंतिकया सह जामाता देवदिदृक्षया द्वारि तिष्ठति । इति श्रुत्वा हर्षुलः वृद्धभावेन गन्तुमशक्तोऽपि मंदमाद्वारमागत्य दिष्ट्या पश्याम्यपि कुशलिनः? इति व्याहरन्नभ्यन्तरमानाय्य प्रणमतस्समुत्थाप्यासनं स्वयमेव ददौ । इयता कालेन विदितोदन्ता हेमवत्यपि सादरं जयंतिकाकरमवलंब्य वत्से! अपि कुशलिनी? बहुतिथात्कालादागतासि । को वायं कुमारः? धृतप्राणाहं पुनरपि पश्येयं, नवेति चिंतयन्ती दुःखिताभवमिति बहुधा व्याहरंती प्रमोदमग्नमनवभूव । अथ जयंतिकामुखादवगतपौत्रविषया

दौहित्रमारोप्य निजांकतलं परिचुम्ब्य च जयंतिकया सह कृताहारा दौहित्र-मपि भोजयित्वा दशघण्टानंतरं निद्रासुखमनुबभूव।

अपरेद्युः कृतस्नानविधिरामध्याह्नं भाषमाणो निजप्रचलितोदन्तं सत्यकीर्तिना कृतसजग्धिस्तांबूलग्रहणायाससादावरोधम्। तत्र जयंतिकां बलादनिच्छन्तीमपि जीवसेनपार्श्वे एवोपवेश्य दापयंश्च जयंतिकापाणिनैव जीवसेनाय तांबूलवीटिकां सत्यकीर्तिः विश्रांतये सर्वानपि विसर्जयामास। एवमेव पञ्चषदिवसानुषित्वा जीवसेनः सत्यकीर्तिमब्रवीत्। मद्विरहासहिष्णु-र्जरती मे जननी वरमालिनी मदागमनमेवानुपालयन्ती गणयति दिवसान्। तामंतरा न शक्नोमि स्थातुमिह। तज्जिगमिषुरस्मि वैजयन्तीं इति। तदव-कर्ण्य सत्यकीर्तिः तात! जीवसेन! वृद्धस्संवृत्तोऽस्मि। भवदीयमिदं राज्यम्। यथेदं नभवेदराजकं तथा कर्तुमर्हसि। किं च श्वश्रूस्ते दुहितृ-निर्गमनात्प्रभृति तद्विरहविक्लबा जीवितजिहीर्षया प्रायोपविष्टा स्थिता। एवमतीतेषु कतिपयेषु दिवसेषु कश्चन ज्ञानी तपोधनः समाजगामेदं भवनम्। स तु समभ्यर्चितो दूयमानमानसः कृशांगीमेनामालोक्य क्षण-मिव प्रणिधानपरः, वत्से! पुनरायास्यति ते दुहिता पतिसहिता दर्शन-दानाय। तन्मा तावदायासय शरीरमिदमित्यभिधाय निरगात्। निशम्य च तद्वाणीं स्रवत्पीयूषवेणीं कृशांगकापि हर्षप्रकर्षेण समुत्थापिता निर्वर्तित-शरीरस्थितिः निर्वेदखिन्नहृदयं तपश्चरणाय महारण्यं जिगमिषुं मामपि विनिवार्य प्रतिदिनमपि भवदागमनमेवानुपालयन्ती कालमतिवाहयति स्म। दैवादुपनतं भवद्दर्शनम्। तदिदानीं यथावामपि भवेव निश्चितौ सुखिनौ राजधानीयं यथा भवेद्राजन्वती तथा कर्तुमर्हति भवानित्यकथयत्।

तदा जीवसेने किमद्य करोम्यवश्यमनुपेक्षणीयं हि मदेकजीविताया जरत्या जनन्याश्शरीरं तत्कथमपि गन्तव्यमेव मयेत्यभिदधति सुचिरं विचिंत्य सत्यकीर्तिरकथयत्। उचितमिव प्रतिभाति भवदीरितं। मातृदेवो भवेति श्रुतिवचनमपि सार्थयितव्यं हि पुत्रेण। इदमपि मदीयं राज्यम-

राजकं न भवेद्धि ? एतदुभयमपि विचिंतयतो ममैवं प्रतिभाति । भवतस्त-नयं विनयाकरं कुमारं वीरसेनमेनमभिषिच्य पुरेऽस्मिन्यथाभिलषितं यातु भवानिति । श्रुत्वा तदभिहितं जीवसेनो दयितामुखमवलोक्य किं ते तावदभिमतमिदमिति पप्रच्छ । एवं पृष्टा तु जयंतिका किं ब्रवीमि ? कालमेतावन्तं तावत्तनयवियोगखिन्ना दैवयोगात्सन्निहितं पुत्रमेनं विहाय कथमिवातिवाहयामि कालम् ? मत्पितृवचनानुरोधेन कथमपि सद्य एव भवेद्धि तनयविरहः । राज्यस्याराजकतापरिहाराय दातव्य एव तनयः । पितुरभिमतमेव ममापीत्यकथयत् ।

जीवसेनोऽपि तथेत्यभ्युपगम्य शुभेऽहनि शुभे मुहूर्ते च पूततीर्थो-दकैः ज्ञानेन वयसा च वृद्धैः द्विजोत्तमैर्वीरसेनमभ्यषेचयत् । अभिषिक्तश्च वीरसेनो नवरत्नमयसालभंजिकामंजुलं मुक्ताकलापवलयितसितातपत्रमण्डल-विडम्बितादिशेषविततफणामण्डलं सिंहासनमधिरुह्य प्रत्नरत्नभासुरकिरीट-परिष्कृतोत्तमांगः समुद्धूयमानशरदभ्रविभ्रमहरचामरमनोहरोभयपार्श्वः सामंतनरपतिकिरीटरत्नप्रभाशबलितचरणनलिनः पौरैरभिनंद्यमानः सभास्ता-रान्यथोचितं सत्कृत्य जयध्वानप्रमुदितमानसः प्रजानयनान्यानंदयन्न-वतीर्य चासनाद्गुरूनखिलानपि प्रणम्य तदनुमत्या धर्मेण प्रजापरिपालनपरो रराज । तदनु जीवसेनस्सादरं संमानितः सत्यकीर्तिना कदाचिद्वैजयंत्यां कदाचिदरिभीकरायां कदाचिद्धेमपुरे च जयंतिकया सह निर्वर्तितानेक-क्रतुकर्मा निर्मर्यादमानंदमनुभवन्सुसुखमासीत् ।

इति श्रीयदुशैलवासि, बालधन्विकुलकलशजलनिधिकलानिधि, विद्या-
विशारद, संस्कृतसेवासक्त, कविकुलतिलक, राज्यप्रशस्ति,
राष्ट्रपतिप्रशस्तिपरिष्कृत, श्रीमहीशूरनाल्वडिकृष्णभूपसुवर्ण-
पदक—साहित्यपरिषद्रजतपदकसमलङ्कृत—जग्गुवकुल-
भूषणमहाकविविरचितायां, जयन्तिकायां
पञ्चमलहरी सम्पूर्णा ॥